महाकविश्रीकालिदासविरचितम्

# अभिज्ञानशाकुन्तलम्

राघवभट्टकृतार्थद्योतनिकाव्याख्यया,

पाठान्तर-परिशिष्ट-सूच्यादिभिश्च सनाथीकृतम्



तस्येदम्

द्वादशं संस्करणम्

श्रीमदिन्दिराकान्ततीर्थचरणान्तेवासिना

**नारायण राम आचार्य "काव्यतीर्थ" इत्येतैः**

टिप्पणी - कथावस्तु - परिशिष्ट - पाठान्तरादिभिः

समलंकृत्य संशोधितम्






शके १८८०  सन १९५

# संकेतचिह्नविवरणम्

अलं. स. = अलंकारसर्वस्वम्
आ. गृह्य. = आश्वलायनगृह्यसूत्रम्
का. प्र. = काव्यप्रकाशः
काव्या. = काव्यादर्शः
काव्या.सू. = काव्यालंकारसूत्राणि
कुव. = कुवलयानंदः
नाट्य. = नाट्यशास्त्रम्
पं. तं. = पञ्चतन्त्रम्
पा. = पाणिनीयसूत्रम्
बा. रा. = बालरामायणम्
माल. मा. = मालतीमाधवम्
मेघ. उ. = मेघदूतम् (उत्तरमेघः)
याज्ञ. = याज्ञवल्क्यस्मृतिः
रघु. = रघुवंशः
वा. = वार्तिकम्
वृ. र. = वृत्तरत्नाकरः
वेणी. = वेणीसंहारम्
स. कं. = सरस्वतीकण्ठाभरणम्
सा. द. = साहित्यदर्पणम्
हनु. = हनुमन्नाटकम्

# प्राथमिकं निवेदनम् ।

अयि महाशया ! विदितमेवैतत्तत्रभवतामखिलकविलसार्वभौमश्रीमत्कालिदासप्रणीतं अभिज्ञानशाकुन्तलं नाम नाटकमखिलद्वीपान्तरयुक्महीमण्डलं व्याप्य वरीवर्तीति । नाटकं प्रकृत्य श्रीमदभिनवगुप्ताचार्या प्रत्यपीपदन्—

'अर्थप्रकृत्यवस्थात्मसंधिसंध्यङ्गवृत्तिमत् ।
अर्थोपक्षेपकैर्युक्तं पताकास्थानकाङ्किभिः ॥
अलंकारैः समायुक्तं संधिभिश्चोपसंधिभिः ।
रसौचित्यविलासैश्च वृत्तानौचित्यवर्जितम् ॥
धीरोदात्ताद्यवस्थानुकृतिर्नाटकमुच्यते ॥' इति ।

एवं चेदं प्रत्युदीरितविवेकानामनुसधानवता सचेतसा चेत प्रह्लादातिशयावहं ख्यातनिवृत्तं धीरोदात्तनायकमुद्धतोपनायकमनुल्लङ्घितानौचित्यं शृङ्गारवीरशान्तादिरसान्यतररसप्रधानमुपसर्जनीभूतान्यरसजातं सधिपञ्चकान्वितं चतु षष्ट्यङ्गसमेतमुपसंध्युपयुक्तमलंकारैरलंकृतं पताकास्थानकान्वितं विष्कम्भकादिपञ्चकप्रपञ्चितं भारत्यादिरीतिपरिष्कृतं परिभाषापाठ्यादिभिर्विशेषितमवस्थानुकृतिविलसितं चेति । कि विशेषेण, नैतादृशं रङ्गभूमौ प्रयोक्तृणा प्रयोगक्षमं प्रेक्षकाह्लादकार्यपरं, नैतादृग्व्युत्पित्सूना व्युत्पत्तिमनोविनोदावहं, नैतादृग्व्युत्पन्नाना चेतोहर, नैतादृग्ललिततर दृष्टश्रुतचरं, नैतादृक्काव्यचम्पूनाटकभाणप्रहसनप्रवह्लिकादिगद्यपद्यनिबन्धेषु हृदयगमं द्वितीयमस्तीति विपश्चित्सिद्धान्त । नह्येतद्भारतखण्डगताः किंतु प्राच्यवाचीप्रतीच्युदीचीवासिनो भिन्नभिन्नभाषाचारविचारविहाराहारा· सर्वेऽपि नि पात प्रशंसन्तीत्येकलम् । किंच परिशीलितगीर्वाणरसास्वादा कविकाव्यगुणावगुणविवेचनपटवो रसिका प्रत्यन्तवर्तिनोऽप्यपूर्वतामस्य प्रशंसन्तीति कि ब्रूमोऽस्य कवयितु कालिदासस्याभिज्ञानशाकुन्तलनाटकस्य च गरिमातिरेकम् ।

कालिदासप्रणीतानि नैकशो रघुवंशादीनि जगद्विस्मराणि ग्रन्थरत्नानि कविधौरेयतामस्य प्रथयन्ति सन्त्याविस्तरा दरीदृश्यन्ते तत्र तत्र, पर ग्रन्थादावन्ते वा प्रणेत्रा क्वापि कालादिनिदर्शनं नैवाकारीत्ययं कविकण्ठीरव कमभिजनं कं वा महीमण्डलपरिसरं स्वजनुषा मण्डयाबभूवेति सप्रमाणं निर्देष्टुमक्षमा निर्विण्णा सन्तो भवाम इत्यलमतिप्रशस्तप्रशंसावाचालतया ।

अलं. स
आ. गृ
का. प्र.
काव्या
काव्या
कुव.
नाट्य.
पं. तं.
पा.
बा. र

# DRAMATIS PERSONAE

## *Men*

| | |
|---|---|
| सूत्रधारः— | The chief manager of the play. |
| दुष्यन्तः— | The king of the Hastināpura. |
| माढव्यः (विदूषकः)— | The king's confidential companion. |
| सर्वदमनः (भरत)— | The king's son. |
| सोमरातः (पुरोहित.)— | The king's religious preceptor. |
| श्यालः— | The king's brother-in-law, the head of the police constables. |
| सूचकः, जानुकः | The king's City Police Sepoys. |
| रैवतकः (दौवारिक), करभकः, कञ्चुकी | The king's servants |
| वैतालिकौ— | The king's bards |
| कण्वः (काश्यप)— | A hermit, foster father of Śakuntalā. |
| वैखानसः, शार्ङ्गरवः, शारद्वतः, हारीतः, गौतमः | Kanva's disciples |
| मातलिः— | Indra's charioteer |
| मारीचः— | One of the Prajāpatis |

## *Women*

| | |
|---|---|
| नटी— | Wife of the Sūtradhāra. |
| शकुन्तला— | Adopted daughter of Kanva, queen of Dusyanta & daughter of Menakā. |
| अनसूया, प्रियवंदा | Friends of Śakuntalā |
| गौतमी— | A female ascetic |
| चतुरिका, परभृतिका, मधुकरिका, प्रतीहारी, यवन्यः | Female attendents of the king |
| सानुमती— | A nymph, friend of Menakā-mother of Śakuntalā |
| अदितिः— | Wife of Mārīcha |

---

## *Persons spoken of*

| | |
|---|---|
| मघवा (इन्द्र.)— | The king of the gods |
| जयन्तः— | Indra's son |
| कौशिकः— | The sage Viśvāmitra, the real father of Śakuntalā. |
| मेनका— | A nymph, mother of Śakuntalā. |
| वसुमती— | Mother of the King. |
| दुर्वासाः, नारदः | Sages. |

---

# अभिज्ञानशाकुन्तलश्लोकानुक्रमकोशः ।

इत्यभिज्ञानशाकुन्तलश्लोकानुक्रमकोशः समाप्तः ।

## पाठान्तरस्थश्लोकानामनुक्रमकोशः

# महाभारतीयं
# शाकुन्तलस्य संविधानकम्

एकदा हि पौरववंश्यो राजा दुष्यन्तो मृगाननुचरन् वनान्तरं प्रविष्टः क्षुत्तृट्परीतो मार्गे मनोरममाश्रमप्रवरं ददर्श। तदा स नृपः पदातिगजसङ्कुलां सेनां नन्दनप्रख्य-वनद्वारि समवस्थाप्य तपोधनं काश्यपं द्रष्टुं जगाम। तदाश्रमे कण्वमपश्यमान-स्तमाश्रमं च शून्यमवलोक्य 'क इहात्र भोः' इत्युच्चैः संनादयन्नुवाच। तन्निशम्य तापसीवेषधारिणी रूपयौवनसंपन्ना मुनिदुहिता शकुन्तलाऽभ्यागतं नृपं प्राप्तमव-लोक्य तं 'स्वागतं ते' इत्युवाच। क्षिप्रं चासनपाद्यादिनार्चयित्वा शिष्टाचारानुगुण-मनामयादि च पृष्ट्वा 'कस्त्वं किं वा कार्यं क्रियताम्' इति शकुन्तला नृपं स्मितमधुरया वाचोवाच। तन्मधुरभाषणं निशम्य प्रीतचेता दुष्यन्तः स्वाभिधेयादि निरूप्य 'महर्षिं कण्वमुपासितुमागतोऽहम्, स भगवान् क्व गतस्तन्ममाचक्ष्व' इत्यवदत्। 'मम पिता फलान्याहर्तुमधुनैव गतोऽस्ति, मुहूर्तं संप्रतीक्षस्वेनमुपागतं द्रष्टासि' इति शकुन्तला प्रत्यवादीत्। तदा शून्यमाश्रमं रूपयौवनसंपन्नां शकुन्तलां च दृष्ट्वा 'का त्वं कस्य वाऽसि, किमर्थं च वनमागतासि, दर्शनादेव त्वया हि मे मनोऽपहृतमित्यहं तवेतिवृत्तं ज्ञातुमिच्छामि। राजर्षेः पुरोर्वंशजो राजा दुष्यन्तोऽहम्। न मे क्षत्रियायाश्चान्यत्र ऋषिकन्यासु मनो हि प्रवर्तते। त्वयि मे भावोऽस्त्यतः क्षत्रियासि चेद्वद' इति नृपोऽवदत्। राज्ञैवमुक्ता स्मितानना शकुन्तलोवाच—'राजन्! धर्मज्ञस्य कण्वस्याहं दुहिता स्वयमस्वतन्त्रास्मि, तमेव स्वार्थं प्रार्थय, त्वमनुचितं न कर्तुमर्हसि।' इत्युवाच। 'कण्वस्तु संशितव्रतो वृत्ताद्व्रताद्वा कथं नाम चलेत्? अतश्च कथं त्वं तस्य दुहिता संभूतेति मे संशयं छेत्तुमर्हसि' इति नृपोऽवदत्। 'मया हि पुरा कस्यापि ऋषेर्मुखाद्यथानुश्रुतं तथा वदामी'ति स्वजन्मवृत्तकथन-मुपचक्राम'—"पुरा हि महत्तपस्तप्यमानो विश्वामित्रः शक्रं तपसा तापयामास। तेन दीप्तवीर्योऽयं मां स्थानाच्यावयेदिति भीतभीतो देवेन्द्रो मेनकाख्यामप्सरसमाहूय विश्वामित्रो ह्युग्रे तपसि वर्तते, यथाकथमपि लोभयित्वा तपसस्तं निवर्तयेत्याह। पुरन्दरप्रेरिताऽनिर्देश्यवयोरूपा मेनका वायुना सह सद्य एव प्रातिष्ठत। विश्वा-मित्राश्रमे च महर्षिं समभिवाद्य तत्संनिधौ सा प्राक्रीडत्। पवनश्चास्या वसनमपोवाह। तद्वासोऽभिलिप्सती सव्रीड मारुतं कुत्सयन्तीव भूमिमगच्छत्। तदा महर्षिस्तां सुरूपां विवृतामवलोक्य कामवशं गतस्तया समं समागमेऽभिलाषं चकार। एवं तौ सुचिरं कालमुभौ यथाकामं व्यहरताम्। मुनिश्चिरार्जितस्य स्व-तपसः क्षयान्मोहमाविशत्। एव स मुनिर्मेनकायां शकुन्तलां जनयामास। हिंस्राः पशवो नेमां हिंस्युरिति शकुन्तैः परिवारितामत एव शकुन्तलेत्यभिधेयां तां

विजने वने चोत्सृज्य मेनका स्वर्गं प्रति प्रतस्थौ। स मुनिरुपस्प्रष्टुं गतश्चैनां शयितामपश्यत्। तामेनां विश्वामित्रसुतां न्यासभूता पोषयेति स मुनिः कण्वं व्यजिज्ञपत्''–'अयं मे जन्मवृत्तान्त.'। तद्वृत्तं निशम्य–'सुन्दरि! क्षत्रपुत्री त्वमिति सुव्यक्तमेव, अतो गान्धर्वेण विवाहेन मामेहि' इति दुष्यन्तोऽवदत्। 'राजन्! मुहूर्तं तावत्संप्रतीक्षस्व यावन्मत्पिता फलान्यादाय निवर्तते, स च मां तुभ्य प्रदास्यति।' 'गान्धर्वेणोद्वाहेन क्षत्रोचितेन मामेहि' इति राज्ञा पुनश्चानुनीता शकुन्तला तं प्राह–'यदि गान्धर्वो विवाहः समुचितस्तर्ह्यात्मप्रदाने मे समयं शृणु–यः पुत्रो मयि जायेत स त्वत्पश्चाद्युवराजो भवेत्। यद्येतदेवं भवेत्तर्ह्येव त्वया सह मे संगमोऽस्तु।' राजापि कामुकस्तमविचारयन् तथास्त्विति प्रतिज्ञातवान्। ततस्तौ तत्र यथाकामं विजहरतुः। दुष्यन्तोऽपि तेजस्वी कण्वश्चैतद्वृत्तं श्रुत्वा किं करिष्यतीति भिया स्वं पुरं जगाम। मुहूर्तमनु महर्षिः कण्वोऽप्याश्रममागमत्। शकुन्तला पितुः पादौ सव्रीडं प्रक्षाल्य 'तात! यदृच्छयाद्य दुष्यन्त इहागत आसीत्, स मया पतिर्वृतः' इति वृत्तं पितरं न्यवेदयत्। तच्छ्रुत्वा 'मयैतत्सर्वं दिव्यचक्षुषा ज्ञातकल्पमेव। कामुकया कामुकेन सह निमन्त्रो हि श्रेष्ठ एव, अतो मा शुचः सुकृतमेव कृतम्' इत्याह। अतः परं दिने दिने प्रतियाते तस्या गर्भो ववृधे। संपूर्णे हि दशमे मासे शकुन्तला सुरूपौदार्यगुणोपेतं सुतं सुषाव। अद्य श्वः परश्वो वा राजप्रेषणिका विप्राः ससैन्याः समायान्तीति चिन्तयन्ती त्रीणि वर्षाण्यत्यवाहयत्। तं दिने दिने प्रतिवर्धमानं सर्वदमनं तस्यातिमानुषं च कर्म दृष्ट्वा यौवराज्याद्यास्य समय इत्यनुध्याय शकुन्तलां सुतेन विप्रादिभिश्च सहाशीर्भिरनुगृह्य दुष्यन्तस्य राजनगरीं प्रेषितवान्। तत्र पौरास्तांस्तापसवेषिणोऽवलोक्य पिशाचवदेते दृश्यन्त इत्यूचुः। तत्परिहासवचनेन खिन्ना मुनयः कण्वाश्रमं प्रतिजग्मुः। मुनिगणान्गतान् दृष्ट्वा दुःखिता पुत्रेण सह शकुन्तला राजवेश्म प्राविशत्। तत्र सिंहासनस्थं दुष्यन्तं दृष्ट्वा धृतिमालंब्य च सा सलज्जमभिवाद्याह–'राजन्नयं मय्युत्पन्नस्ते पुत्रः। पुरा मया सह समागमे त्वया यः समयः कृतस्तमनुस्मृत्यैनं यौवराज्येऽभिषिच्यताम्।' अन्यासु भार्यासूपरक्तो नृपस्तु सर्वं स्मरन्नपि 'त्वया सह समागमं न स्मरामी'त्यब्रवीत्। राज्ञा त्वेवमुक्ता संरम्भामर्षताम्राक्षी तिर्यक्कटाक्षैर्निर्दहन्तीवावलोक्य दुष्यन्तमेवमवादीत्–'राजन्! सर्वं जानन्नपि न जानामीति प्राकृतजनवत् कथं मिथ्या प्रभाषसे? विजने महर्षेः कण्वस्याश्रमे मामभिनवयौवनसंपन्नामेकाकिनीं दृष्ट्वा सूनृताभिर्वाग्भिः प्रलोभ्य च गान्धर्वविवाहेन मम पाणिमग्रहीः। साहं कुल-शील-सत्यवादित्वादिकमात्मनो धर्मं च पुरस्कृत्याद्य त्वां शरणागतास्मि। अत एव स्वधर्मं पृष्ठतो विधाय सकुमारां मामुपस्थितां भार्यां न परित्यक्तुमर्हसि। आत्मजः पुत्र एव पितॄन्नरकात्त्रायतेऽतस्त्वं सत्यं समयं सुतं च मा त्याक्षीः' इति राजानं शकुन्तलानुनीतवती। तन्निशम्य दुष्यन्तस्तामाह–'शकुन्तले! तव पाणिग्रहणमेव न स्मरामि, त्वयि जातं पुत्रं च नाभिजानामि, अश्रद्धेयमिदं तव वाक्यं

कथं नाम जनः श्रद्धास्येत? यतो नार्यः प्रायोऽसत्यवचना इति प्रथितिः । क्व स तपोधनो महर्षिः क्व च साप्सरा मेनका । त्वं च मेनकया कामरागाद्यदृच्छया जाता, अतस्ते जातिर्निकृष्टा या त्वं पुनः कुलीनेति स्वयं विजल्पसे । त्वं जनयित्वोत्सृष्टा कोकिलेव परैर्भृतासि, अतः कामं गच्छ तिष्ठ वा यथेच्छसि तथा कुरु' इति । 'राजन्! अपि चायमनृतः प्रसङ्ग इति श्रद्धासि चेदहमाश्रमं गन्तुमिच्छामि । किञ्च हे दुष्यन्त! ऋतेऽपि त्वां चतुरन्तामिमामुर्वीं मे सुतो निःसन्देहं पालयिष्यति' इत्युक्त्वा शकुन्तला प्रातिष्ठत् । एतस्मिन्नेवान्तरेऽशरीरिणी वाग् दुष्यन्तमुवाच–'राजन्! शकुन्तला सत्यमेवाह–यदयं तवात्मज इति । अतस्तं भरतं भरस्व ।' इति तामशरीरिणी वाचं पौरैः सह निशम्य स्वां भार्यां सुतं च विशोध्य प्रतिजग्राह । भार्यां च सान्त्वपूर्वमिदमाह–'पुरा खल्वयं नः संबन्धः परोक्षोऽभवत्, अत एवेदं प्रभाषितम् । अतो लोकानां समक्षमेवाद्य सम्बन्धः कृतः, येन स्त्रीभावान्मयि सङ्गतमिति जनो वा शङ्केत इत्यादिलोकप्रवादभिया यत्कृतं यद्वा त्वयोद्विग्नयोक्तं तन्निखिलं क्षम्यमेव' इत्युक्त्वा शकुन्तलामग्रमहिषीं कृत्वा भरतं यौवराज्ये चाभिषिषेच ॥

# महाभारतीय-संविधानक-कालिदासीय-संविधानकयोर्वैशिष्ट्यम्

| महाभारतीयं शाकुन्तलकथानकम् | कालिदासीयमभिज्ञानशाकुन्तलं नाटकम् |
| --- | --- |
| १ महर्षेः कण्वस्याश्रमे दुष्यन्ते प्रविष्टे सति महर्षि. फलान्याहर्तुं गतोऽस्ति, तातो मुहूर्तेत आगमिष्यतीति शकुन्तलयावेदनम् । | १ कण्वाश्रमोऽयं पुरोवर्ती, तत्र शकुन्तलामतिथिसत्काराय नियुज्य दैवमस्याः प्रतिकूलं शमयितुं महर्षिः सोमतीर्थं गतस्तत्र गत्वातिथ्यं स्वीक्रियताम् इति वैखानसमुखेनावेदनम् । |
| २ दुष्यन्तस्य कामलोलुपत्वं, शकुन्तलया स्वजन्मवृत्तकथनम्, आत्मसमर्पणे शकुन्तलया स्वसुतस्य यौवराज्याभिषेचनात्मकं समयकरणम्, तदङ्गीकरणे एव स्वात्मसमर्पणम्, स्वेष्टलालसाशमने सति महर्षेरागमनभियाश्रमात्तूर्णं निष्क्रमणम् । | २ प्रियंवदानसूययोः पात्रकल्पनया कालिदासेन नायकनायिकयोरनुरागचित्रणम्, प्रीतिलेखप्रेषणम्, रसपरिपोषाय सखीमुखेन शकुन्तलाजन्मेतिवृत्तकथनम्, अनुरागायत्तयात्मसमर्पणम्, राज्ञो वियोगव्यथया पीडनम्, दुर्वासस आगमनम्, अतिथिपरिभाविन्यै शकुन्तलायै शापः, शापशमनोपायकथनम् । |
| ३ शकुन्तलायाः कण्वाश्रमे एव सुतोत्पत्तिः, यौवराज्याभिषेकसमुचितसमये विप्रादिभिः सह सकुमारायाः शकुन्तलाया दुष्यन्तसविधे प्रेषणम्, शकुन्तलया पाणिग्रहणादिस्मारणपूर्वं समयानुगुणं सर्वदमनस्य यौवराज्याभिषेकेऽनुनयः, अन्यासक्तेन राज्ञा लोकापवादभिया परिणयादिवृत्तस्यानङ्गीकरणम्, सोद्विग्नतया शकुन्तलया कण्वाश्रमं प्रतिप्रस्थानम्, अशरीरिण्या वाण्या तवैवायं सुतस्तं यौवराज्येऽभिषेचयेति कथनम्, राज्ञा पौरसंनिधावङ्गीकारोऽभिषेचनं च । | ३ सगर्भायाः शकुन्तलायाः शार्ङ्गरवशारद्वत-गौतमीभिः सह दुष्यन्तं प्रति प्रेषणम्, राज्ञा सह शकुन्तलया प्रत्याख्यानम्, अभिज्ञानाङ्गुलीयकस्य शचीतीर्थे भ्रंशनम्, तामाकाशाज्योतिषोत्क्षिप्य गमनम्, धीवरद्वाराङ्गुलीयकप्राप्तिः, अङ्गुलीयकदर्शनेन राज्ञः प्रणय-परिणयादिस्मरणं, राज्ञोऽनुतापः, राज्ञे मातलिमुखेन शक्रस्यामन्त्रणम्, स्वर्गात्प्रतिनिवर्तमानस्य दुष्यन्तस्य मारीचाश्रमगमनम्, सकुमारायाः शकुन्तलाया नृपेण मिलनम् । |

# प्रथमाङ्कस्य कथावस्तु

अस्याङ्कस्य प्रस्तावनायां सूत्रधार-नटी-संवादे सूत्रधारो नटीमावेदयति—यत्कालिदासग्रथितवस्तुनाभिनवेनाभिज्ञानशाकुन्तलाख्येन नाटकेनोपस्थातव्यमिति। ततश्चाचिरप्रवृत्तमुपभोगक्षमं ग्रीष्मसमयमधिकृत्य नटी गायति, तेन मनोहारिगीतरागेण सारङ्गेण राजा दुष्यन्तवदहं प्रसभं हृतोऽस्मीति सूत्रधारः प्रस्तौति। एतदनन्तरं सशिष्यो वैखानसः समुपस्थाय–'राजन्! नायमाश्रममृगो हन्तव्यः' इति रथस्थं मृगानुसारिणं संनद्धबाणं दुष्यन्तमनुरुरोध। दुष्यन्तोऽप्यादेशानुगुणं सायकं सद्यः प्रतिसंहृतवान्। तेन सन्तुष्टो वैखानसः 'त्वत्सदृशं चक्रवर्तिनं सुतमाप्नुहि' इत्याशिषं प्रदत्तवान्। वयं समिदाहरणाय प्रस्थिताः स्म., पुरोवर्त्ययं महर्षेः कण्वस्याश्रमो दृश्यते। दुहितरं शकुन्तलामतिथिसत्काराय नियुज्य तस्याः प्रतिकूलं दैवं शमयितुं महर्षिः सोमतीर्थं गतोऽस्ति। अत एव नान्यकार्यातिपातश्चेत्तत्र प्रविश्यातिथेयसत्कारं प्रतिगृह्यतामिति स व्यजिज्ञपत्। महर्षिदर्शनकामो दुष्यन्तो हि कण्वस्य पुण्याश्रमं प्रविष्टवान्। तत्र सखीसमेतां शकुन्तलामवलोक्य कामुको राजा सखीसकाशात् शकुन्तलाया इतिवृत्तं नामजन्माद्यवगम्य 'गुरोः पुनरस्या अनुरूपवरप्रदाने सङ्कल्पः' इति श्रुत्वातितरां साभिलाषस्तस्या लोभनीययौवनेन मुग्धो दुष्यन्तो नगरगमनं प्रति मन्दौत्सुक्यो भवति। एतदन्तरे नेपथ्ये श्रूयते–मृगयाविहारी राजा दुष्यन्तः प्रत्यासन्नो वरीवर्ति, अतस्तपोवनसत्त्वरक्षायै सज्जीभवन्त्विति। अस्मदन्वेषिणः पौरास्तपोवनमुपरुन्धन्ति, अतो वयमाश्रमपीडा यथा न भवेत्तथा प्रयतिष्यामहे; गच्छन्तु भवत्यः' इति राज्ञाज्ञप्ते 'अप्रापितातिथिसत्कारमार्यं विज्ञापयितुं लज्जावहे' इति सखीविनम्रोक्तौ राजा 'दर्शनेनैवात्र भवतीनां पुरस्कृतोऽस्मि' इति निवेदयति। अथ च सर्वे निष्क्रामन्ति।

श्रीः

महाकविकालिदासविरचितम्

# अभिज्ञानशाकुन्तलम्

अर्थद्योतनिकाटीकासमलङ्कृतम्

या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ।
यामाहुः सर्वबीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥ १ ॥

---

यत्रेधाजनि दशधा द्विधागतं यद्यज्जातं दशविधमेति षोडशत्वम् ।
यद्गीतं सममहदादिकस्य चाद्यं तेजस्तज्जयति हिमोष्णरूपमव्ययम् ॥

उद्दिश्यामरनिम्नगा गतवतो श्रुत्वा कलिं शैशवे
य साक्षात्करवाणि तामिति जटाजूटोपकण्ठं गतः ।
पीत्वा पुष्कलपुष्करेण न किमप्यत्रेति विस्मापयन्
पित्रोर्विग्रहवग्रहं विहितवान्पायाद्गजास्यः स वः ॥

नाट्यवेदाब्धिमालोड्य ताण्डवं यो विनिर्ममौ ।
स्वात्मनाभिनयन्तं तं प्रणमामि महानटम् ॥
या लास्यसप्रयोगेण शिवाराधनतत्परा ।
भवता भूतये भूयात्सा सदा सर्वमङ्गला ॥

वाचिकाद्यभिनयोपमनाट्याचार्यमत्र भरतं मुनिमीडे ।
लास्यताण्डवनियोजनलीलाकौशलेन परितोषितभर्गम् ॥

अथ नाटकादौ पूर्वरङ्गाङ्गभूतामाशीरूपां चतुरस्रतालानुसारिणीमष्टपदां सूत्रधारो नान्दीं पठति—**या सृष्टिरिति** ॥ या तनु स्रष्टुर्ब्रह्मण आद्या सृष्टिः । जलमित्यर्थ । 'अप एव ससर्जादौ तासु वीर्यमवासृजत्' ( मनु. १।८ ) इति स्मरणात्, सर्वादौ सर्गात्सर्गोत्पत्तिहेतुत्वाच्चातिशयो ध्वन्यते । या च विधिर्विधानं श्रुतिस्मृत्युक्तं तेन हुतं दत्तं हविर्हवनीयद्रव्यजातं वहत्यादत्ते । वह्निरित्यर्थः । वहतिनाऽऽधाराधेयसंबन्धेनादानं लक्ष्यते । फलपर्यन्ततापापणं च व्यज्यते । अविधिहुतं भस्मीभवति । अत एव विधिहुतमित्युक्तिः । अन्यथा हवनीयस्यैतदव्यभिचारादर्थपौन-

रुक्त्यं स्यात्। एतेनातिशयो ध्वनितः। अथ च वह्निरित्यौणादिके निप्रत्यये सिद्धम्। तदपि सूचितम्। या च होत्री यजमानरूपा। जुहोतीति होत्रीतीन्द्रादीनामपि तर्पकत्वादतिशयो व्यज्यते। अत एव नात्मादिपदप्रयोगः। ये च द्वे कालं रात्रिंदिवरूपं विधत्तः कुरुतः। विपूर्वो धाञ् करणार्थे वर्तते। चन्द्रार्कावित्यर्थः। नित्यस्यापि कालस्यैतौ कारणत्वेनोक्ताविति स एव। या च श्रुतिः श्रवणेन्द्रियं तस्य विषयो गोचरो गुणः शब्दाख्यो यस्याः सा। 'श्रुतिः श्रोत्रे तथाम्नाये वार्तायां श्रोत्रकर्मणि' इति विश्वः। विश्वं जगद्व्याप्य स्थिता तेनाकाशः। अत्रापि जगद्व्यापकस्थित्या स व्यज्यते। अत एव श्रुतिविषयगुणेत्येतावन्मात्रं नोपात्तम्। तावत्युच्यमाने प्रक्रान्तातिशयव्यङ्ग्यभङ्गः स्यात्। किं च 'शब्दैकगुण आकाशः शब्दस्पर्शगुणो मरुत्' इत्यादिना सांख्यमते मरुदादीनामपि शब्दगुणत्वस्योक्तेर्विवक्षितार्थालाभश्च। पारिशेष्यात्तल्लाभ इति चेत्, आदिवाक्येन तल्लाभोऽन्तेन वेति संदेहस्य दुर्निरासत्वात्सूक्तं विश्वमित्यादि। अत एव येत्यस्य नाऽस्थानस्थपदत्वम्। यां च सर्वेषां बीजानां प्रकृतिर्योनिरित्याहुः। अनेन पृथिवी। 'प्रकृतिः सहजे योनावमात्ये परमात्मनि' इति विश्वः। अत्रापि सर्वबीजोत्पत्तिहेतुत्वेन स एव। इतिना कर्मण उक्तत्वात्प्रकृतिरिति प्रथमा। तथा च **वामनः** (काव्या. सू. ५।२।२२)—'निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः। परिगणनस्य प्रायिकत्वात्' इति। 'यया च प्राणिनः प्राणवन्त' इत्यत्र प्राणिनो जन्मिन इति। 'प्राणी तु चेतनो जन्मी' इत्यमरः। रूढ्या सामान्यमुद्दिश्य प्राणवन्त इति विशिष्टस्य विधानम्। अन्यथा पर्यायोच्चारण एकस्य पौनरुक्त्यं स्यात्। प्राशस्त्ये चात्र मतुप्। 'भूमनिन्दाप्रशंसासु' इत्याद्युक्तेः। हृदि प्राणवायुर्जीवात्मन आश्रयस्तद्वन्तः। 'हंसः प्राणाश्रयो नित्यम्' इत्युक्तेः। तेन जीववन्तश्च बलवन्तश्चेत्यर्थः। एतेन सर्वातिशयो व्यज्यते। 'प्राणो हृन्मारुते बाले काव्ये जीवेऽनिले बले। पूरिते वाच्यवत्प्राणं प्राणाश्चासुषु कीर्तिताः' इति विश्वः। अतश्च न कथितपदाशङ्का। उद्देश्यविधेयार्थान्तरसंक्रमितवाच्यलाटानुप्रासान्परिहृत्यैव तस्याङ्गीकारात्। 'अपवादविषयं परिहृत्योत्सर्गस्य प्रवृत्तिः' इति न्यायात्पुनरुक्तवदाभासोऽलंकारः। ताभिः प्रत्यक्षाभिरष्टाभिस्तनुभिर्मूर्तिभिः प्रपन्नो युक्त ईशो वोऽवत्वित्याशीः। 'तनुर्मूर्तौ त्वचि स्त्री स्यात्रिष्वल्पे विरले कृशे' इति मेदिनीकारः। अत्राशिषि सभ्यानां लाभः। अत एव 'आशीर्नमस्क्रियारूपा' इति **भरतेन**, **भासे**नापि 'आशीर्नमस्क्रियावस्तु—' इत्यादावेवाशीर्निबद्धा। तेनासौ नटः किंनमस्काररूपां तत्रापि किंविधाशीरूपां नान्दीं पठिष्यतीति सोत्कण्ठानां सभ्यानां तामपनेतुं पूर्वमवत्वित्युक्तिः। अत्र च सकलाभिलषितफलवितरणप्रवणत्वमेवावनं विवक्षितम्। पालनार्थत्वाद्धातोः। तच्च तेन विना न संभवतीति। कानित्यपेक्षायां वो युष्मान्सभ्यानित्यर्थः। तेषामेवात्र संबोधनयोग्यत्वात्संबोधनप्रधानत्वाच्च युष्मदर्थस्य। अतश्च 'अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्। न स लब्धास्पदं किंचित्कुत्रचित्प्रतितिष्ठति॥' इत्युक्तनयेन 'न्यक्कारो

ह्ययमेव' (हनु ना. १४।६) इतिवदनुवादविधेयव्यत्ययो नाशङ्कनीय.। अत्र वायोर्भट्टनये गुरुनये च स्पार्शनप्रत्यक्षत्वात्प्रत्यक्षाभिरित्युक्ति । अनेन विशेषणेन तासा सकलजनप्रतीतत्वं व्यज्यते । सकलवाक्यस्थतत्तद्विशेषणोपादानेनैकैकापि सा तादृक्फलदा । तद्युक्तस्येशस्य किं पुनर्वक्तव्यमिति भाव । अत्र 'या सृष्टि'रित्युक्तक्रमेणैव सख्याप्राप्तौ 'यदष्टाभि·' इति वचनं तत्सूच्येऽर्थे उपयोगीति नार्थपुनरुक्तम् । 'या सृष्टि'रित्यादौ यच्छब्दस्य वचनविभक्तिप्रक्रमभङ्गो न शङ्कनीय । 'गुणानां च परार्थत्वादसबन्धः समत्वात्स्यात्' इति नयेन तेषा परमार्थत्वात्परस्परमसबन्धादनुवाद्यत्वात् । अनुवाद्ये च न तत्तद्दोषावकाश इति स्थितं तत्रैव । अत्र पृथिव्यादिक्रमेणाकाशादिक्रमेण वा वक्तव्ये यो व्यस्तक्रमविन्यास स कथमिति चेत्,—उच्यते; अत्र प्रथमसृष्टत्वाज्जलस्य प्रथमत उपादानम् । ततस्तदुत्पन्नस्य तेजस. । 'अद्भ्योऽग्निः' (मनु ९।३२१) इति स्मृते । तत्रापि हुतं हविर्वहतीति प्रकारेणोक्तेः केन हुतमिति प्रसङ्गाद्यजमानस्य तेज प्रसङ्गाद्यज्ञादौ कालस्यापेक्षणीयत्वाच्च सूर्याचन्द्रमसो । तत 'तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामह. ॥ नखैर्हिरण्यगर्भस्तु तदण्डमकरोद्द्विधा । ताभ्या स शकलाभ्यां च दिवं भूमिं च निर्ममे ॥' (मनु १।९) इति स्मरणाद्यज्ञादौ च देवतास्मारकत्वेन शब्दमयस्य मन्त्रस्थदेशस्य भूम्यादेरधिकरणत्वेन चापेक्षमाणत्वाद्द्योभूम्योः । तत सर्वप्राणभूतत्वात्सर्वोत्कृष्टस्य वायोः । अथ च 'या स्रष्टुराद्या सृष्टिः साऽवतु' इति प्रत्येकं संबन्ध· । यत्तदोर्नित्यसंबन्धादर्थेन तच्छब्देन संबन्धः । ये द्वे इत्यत्रावतामिति विभक्तिविपरिणाम. । अष्टवाक्यपरिपूर्त्यर्थमेव द्वयोरेकत्रोक्ति· । ईष्ट इति ईशः । अत एव ताभि· प्रसिद्धाभि. प्रत्यक्षाभिर्मूर्तिमतीभिरष्टाभि । तनुशब्देनाणु तेन चाणिमा । बहुवचनमाद्यर्थम् । तेनाणिमादिभिरित्यर्थ । प्रपन्नः सेवितोऽवतु व इति । एकश्चकार· सर्वसमुच्चये । अन्त्यो दीपकालंकार । अणिमादयश्च—'अणिमा महिमा चैव लघिमा गरिमा तथा । ईशित्वं च वशित्वं च प्राकाम्यं प्राप्तिरेव च ॥' इति । अनेन चात्र कविना रीतीना मुख्यतमा सर्वगुणाश्रया वैदर्भी रीतिरुपक्षिप्ता । यदाह **वामनः** (काव्या. सू १।११)—'अस्पृष्टा दोषमात्राभिः समग्रगुणगुम्फिता । विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते ॥' इति । तदुक्तक्रमेण च ओज़ प्रसादश्लेषसमतासमाधिमाधुर्यसौकुमार्योदारतार्थव्यक्तिकान्तयो बन्धगुणा, त एवार्थगुणा इति च । तत्र बन्धस्य गाढत्वमोज । तत्प्रकटमेवेह शैथिल्यं प्रसादः । साम्यमुत्कर्षश्चेति । 'या सृष्टि· स्रष्टुराद्ये'ति गाढत्वम् । 'वहति विधिहुत'मिति शैथिल्यम् । एवं साम्यलक्षण प्रसाद । मसृणत्व श्लेष । यथा 'वहति विधिहुतं या' इत्यादि । एवमन्येऽपि बन्धगुणा अनुसर्तव्याः । अर्थगुणाश्च । अर्थस्य प्रौढिरोज. । सा च 'पदार्थे वाक्यरचना' इत्यादिका । सात्र प्रतिवाक्यं स्फुटैव । अर्थवैमत्यं प्रसादः । सोऽप्यत्र प्रकट एव । घटना श्लेष इति चात्र प्रतीतम् ।

एवमन्येऽप्यर्थगुणा अनुसंधेयाः । **भोजेन** तु रीतीना शब्दालंकारान्तर्भूतत्वमेवोक्तम्—'जातिर्गती रीतिवृत्ती' इति। अत्र च 'सृष्टि· स्रष्टु'रिति 'वहति हुते'ति, 'प्राणिप्राणे'ति, 'भिर्भि'रिति छेकानुप्रासेन सह सर्ववाक्यगतस्य वृत्त्यनुप्रासस्यैकवाचकानुप्रवेशलक्षणः संकरः । 'अनेकस्य सकृत्पूर्व एकस्याप्यसकृत्पर' इति तल्लक्षणात् श्रुत्यनुप्रासोऽपि । अथ च, 'धराम्भोऽग्निमरुव्योममखेशेन्द्वर्कमूर्तिभि.' इति वक्तव्ये 'या स्रष्टुराद्या सृष्टि'रित्यादिवचनेनातिशयितत्वं ध्वनितम् । तेन च परिकरालकारो व्यज्यते । तादृगष्टमूर्तिरूपत्वादीशस्य सर्ववैलक्षण्यं सर्वातिशायित्वं च । तेन वाक्यैकदेशसर्ववाक्यवस्तुध्वन्योरङ्गाङ्गिभावः संकरः । सोऽपि भक्तिश्रद्धातिशयभरबन्धुरान्त करणस्य कवेरीश्वरविषयस्य रत्याख्यभावध्वनेरङ्गमेव । अथ च 'या' इत्यादि सर्वत्र स्त्रीलिङ्गनिर्देशात्तनुभि कृशाभिरिति समासोक्त्याष्टनायिकायुक्तनायकव्यवहारसमारोपाच्छृङ्गाररसोऽपि व्यज्यते । तत्प्रधानत्वादस्य रूपकस्य । एवं वस्त्वलंकाररसादिरूपस्त्रिविधोऽपि ध्वनिर्गर्भीकृतः । स्रग्धराच्छन्द·—(वृ र ३।१०४) 'म्रभ्नैर्याना त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इति । अनेनास्य सप्ताङ्कत्वमपि सूचितम् । नान्दीश्लोकत्वादेव । अस्यादौ मगण. । 'क्षेमं सर्वगुरुर्दत्ते मगणो भूमिदैवतः' इति **भामहो**क्तेः । तथा यकारोऽपि । **'यस्तु श्रीदः'** इति च पाठं पठित्वा कष्टास्थानस्थदयविधेयानुवादव्यत्ययलक्षणा दोषा परिहर्तव्या । यद्यप्यत्र देवताविषयिण्या रतौ कष्टत्वस्य 'शीर्णघ्राणाङ्घ्रि-' इत्यादिवन्न दोषत्वं न च गुणत्वम्, तथापि ग्रन्थादौ तत्रापि श्लोकादौ स्थितत्वात्परिहृतमिति मन्तव्यम् । न च होत्रीत्यत्र वाक्यप्रक्रमभङ्गः पदकदम्बकस्यैव तत्त्वाङ्गीकारात् । अत एवात्र चकारोपादानमित्यवधेयम् । क्वचित्पदकदम्बकात्मकं क्वचित्क्रिया कारकान्वितेति वाक्यमित्यपि तत्प्रक्रमभङ्गो न । विषमसमेषु तथैवोपनिबन्धात् । नापि विशेषणप्रक्रमभङ्ग. । सर्ववाक्येषु विशेषणोपादानाद्धोत्रीत्यपि विशेषणमेव। 'विशेषणादेव विशेष्यावगतिः' (काव्या. सू ५।१।१०) इति **वामन**सूत्रणात् 'निधानगर्भामिव सागराम्बराम्' (रघु ३।९) इतिवत् । किं चैतद्दूषणाभावार्थमेवोत्तरवाक्ये द्विशब्दोपादानम् । अन्यथा कर्तृक्रियाभ्यामेव द्वित्वावगतेस्तस्यावर्करत्वमेव स्यात् । अथ क्वचित्कर्तृविशेषणं क्वचित्कर्मविशेषणम् । पूर्वत्र कर्मविशेषणे वार्थं प्रति भेदाभावात् । अविधिहुतं भस्मीभवतीत्येतदर्थपर्यवसानात्तथैव पूर्वं व्याख्यातम् । किं च शङ्कितं यदर्थपौनरुक्त्यं व्याख्यानावसरे तदपि शङ्कनीयं न भवति । षष्ठवाक्ये कर्तुरनुपादानादेव न तद्विशेषणम् । अनुपादानं च प्रसिद्धावगतेस्तस्य । यदस्तु श्रूयमाणक्रियेऽस्मिन्कर्तृत्वे भवत्यादीना प्रयोग आपद्यते । स च सामान्यानां तासा प्रयोगं विनापि ज्ञायमानत्वान्निषिद्ध आकरे । तेन विशेषणक्रियाप्रयोगार्थं यदः कर्मत्वं तच्च कर्तृप्रत्ययप्रयोगानुसार्येव, अन्यथा प्रक्रमभङ्ग आपद्येत । तथा च प्रत्येकवाक्य एकैकोपादानादेकत्र द्वयोपादाने प्रक्रमभङ्ग आशङ्कनीयः ।

( नान्द्यन्ते[1] )

**सूत्रधारः**—( नेपथ्याभिमुखमवलोक्य ) आर्ये ! यदि नेपथ्य[2]-विधानमवसितम्, इतस्तावदागम्यताम्[3] ।

यतोऽष्टवाक्यपरिपूर्त्यर्थमेतादृङ्निबन्ध इति तूक्तमेव । इदं च महता दूषणोद्घाटन स्वगुणोद्घोषणमिवात्यन्तमनुचितमपि व्युत्पित्सूना बालानामूहापोहज्ञानेन व्युत्पत्तिमाधातुं कृतमिति ज्ञेयम् । 'श्लोकै काव्यार्थसूचकै.' ( दशरूप. ३।४ ) इत्युक्तत्वादस्य तत्सूचकत्वमुच्यते । ईश प्रभुर्दुष्यन्तो वोऽव्यादिति । ताभिः शरीरित्वात्पञ्चमहाभूतरूपाभिर्यज्ञकरणाद्धोतृरूपाभिर्लोकपालांशत्वाद्विशिष्टतेजस्वित्वाद्राज्ञश्चन्द्रसूर्यरूपाभिरष्टाभिस्तनुभि प्रपन्न । तथा च **भृगुः**—'अग्निवायुयमार्काणामिन्द्रस्य वरुणस्य च । चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वती ॥ यस्मादेषा सुरेन्द्राणा मात्राभिर्निर्मितो नृप । तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥' इति । अथ 'या सृष्टि स्रष्टुराद्या' इत्यनेन शकुन्तला सूचिता । एतावत्कालपर्यन्तं तादृशसृष्टेरजातत्वादाद्यत्वम् । या विधिना सुरतविधिना हुतं निषिक्तं हवी रेतो वहतीति तस्या गर्भ । होत्रीत्यनेन कण्वः । 'ये द्वे' इत्यनेन अनसूया-प्रियंवदे सख्यौ कालं शापान्तसमयं विधत्तो बोधयत. । पातिव्रत्यादिभिर्गुणैर्विश्वं व्याप्य श्रुत्या वार्तया विषये देशे गुणैस्त्रिभि शार्ङ्गरव-शारद्वत-गौतमीभिरयत एतादृशी स्थिता । [ श्रुतिविषयगुणाया इत्येकं पदम् । ] एतेन सगर्भायास्तस्या दुष्यन्तद्वारदेशगमनम् । सर्वेषां बीजं मूलभूतश्चक्रवर्तित्वाद्भरत. । तस्य प्रकृतिरुत्पत्तिरिति भरतोत्पत्ति । यया प्राणिन. प्राणवन्त इत्यनेन भरतस्य शकुन्तलया सह स्वपुरागमनम् । अष्टाभि प्रकृत्यादिभि· प्रत्यक्षाभि प्रपन्न इत्यनेन निर्वहणसंधिसमाप्तौ नटाशंसा 'प्रवर्तता प्रकृतिहिताय पार्थिवः' इत्यादिका सूचिता । 'सूत्रधारः पठेन्नान्दीम्' ( नाट्य. ५।१०६ ) इत्युक्ते । **सूत्रधार**लक्षणं यथा **मातृगुप्ताचार्यै**रुक्तम्—'चतुरातोद्यनिष्णातोऽनेकभूषासमावृतः । नानाभाषणतत्त्वज्ञो नीतिशास्त्रार्थतत्त्ववित् ॥ वेशोपचारचतुरः पौरेषणविचक्षण. । नानागतिप्रचारज्ञो रसभावविशारद ॥ नाट्यप्रयोगनिपुणो नानाशिल्पकलान्वित. । छन्दोविधानतत्त्वज्ञः सर्वशास्त्रविचक्षणः ॥ तत्तद्गीतानुगलयकलातालावधारणः । अवधाय प्रयोक्ता च योक्तॄणामुपदेशक । एवंगुणगणोपेतः सूत्रधारोऽभिधीयते ॥' इति । **नान्द्यन्त इति** । अत्र नान्दीलक्षणमादि **भरते**—'आशीर्नमस्क्रियारूपः श्लोक काव्यार्थसूचक । नान्दीति कथ्यते' इति । नान्दीपदव्युत्पत्तिरुक्ता **नाट्यप्रदीपे**—'नन्दन्ति काव्यानि कवीन्द्रवर्गाः कुशीलवा. पारिषदाश्च सन्त । यस्मादलं सज्जनसिन्धुहंसी तस्मादियं सा कथितेह नान्दी ॥' इति । तत्र **भरतः** प्रथमाध्याये—'पूर्वं कृता मया नान्दी

**पाठा०**—१ 'ततः प्रविशति सूत्रधारः'. २ 'नेपथ्याभिधानम°'. ३ 'तदित आगम्य°'.

आशीर्वचनसंयुता । अष्टाङ्गपदसंयुक्ता प्रशस्ता वेदसंमता ॥' इति । पञ्चमाध्याये च—'सूत्रधार. पठेन्नान्दी मध्यमं स्वरमाश्रित. । नान्दीपदैर्द्वादशभिरष्टाभिर्वाप्य- लंकृताम् ॥' इति । इदं पद्यमभिनवगुप्तपादाचार्यैर्भरतटीकायामभिनवभारत्या व्याख्यातम् । अनेन त्र्यस्रतालानुगता त्रिपदा षट्पदा द्वादशपदेति चतुरस्रताला- नुगता चतुष्पदाष्टपदा षोडशपदेति पृथक्त्रिविधैव । नात परमपि भूयस्त्वादाद्दतेति पदानि श्लोकावयवभूतानि तिङन्तानि सुबन्तानि वा श्लोकतुरीयांशरूपाणि वाऽवा- न्तररूपाणि वेति व्याख्याय पुनरुक्तम् । आचार्यस्वरसस्त्ववान्तरवाक्येष्वेव पदत्व- मिति । एतदभिप्रायेण **नाट्यप्रदीपे**—'श्लोकपाद पदं केचित्सुप्तिङन्तमथापरे । परेऽवान्तरवाक्यैकस्वरूपं पदमूचिरे ॥' इति । **संगीतकल्पतरा**वपि—'हरोक्त- माङ्गस्थितवस्तुवर्णनैर्वाक्यार्थभूम्नार्थपदैस्त्रिसख्यै । षड्भिश्चतुर्भिर्नृपविप्रसपत्समाशिषा संप्रवदन्ति नान्दीम् ॥' इति । सूत्रमूलभरतटीकाकाराभिनवगुप्तपादाचार्यसमता- वान्तररूपाष्टपदा । तथा च पञ्चमाध्याये **भरतः**—'नमोऽस्तु सर्वदेवेभ्यो द्विजातिभ्यस्ततो नम· । जितं सोमेन वै राज्ञा शिवं गोब्राह्मणाय च ॥ ब्रह्मोत्तरं तथैवास्तु हता ब्रह्मद्विषस्तथा । प्रशास्त्विमा महाराजः पृथिवी च ससागराम् ॥ राज्यं प्रवर्तता चैव रङ्गः स्वाशः समृध्यतु । प्रेक्षाकर्तुर्महान्धर्मो भवतु ब्रह्मभा- षित· ॥ काव्यकर्तुर्यशश्चापि धर्मश्चापि प्रवर्धताम् । इज्यया चानया नित्य प्रीयन्ता देवता इति ॥' मूलकारेण स्वयमेव द्वादशपदोदाहृता । टीकाकारैरष्टपदोदाहृता । यथा **विलक्षकुरुपतौ**—'आनन्दं विदधातु पद्मवसति· शंभु शिवं यच्छतु श्रीनाथ· श्रियमातनोतु तनुता सीतापतिर्वाञ्छितम् । हेरम्बः कुरुतामविघ्नमनघं वाग्ब्रह्म विद्योततां व्यासोक्तं तदुदेतु वस्तु भरतो नाट्येऽस्तु न· कौतुकी ॥' इति। येषा मते श्लोकतुरीयांश पदं तेषा मते चतुष्पदेयं नान्दी । 'ये द्वे कालं विधत्ते' इत्यनेन चन्द्राङ्कत्वं चोक्तम् । यदाहु·—'चन्द्रनामाङ्किता कार्या स रसानां यतो निधि·' इति । इयं च पत्रावलीसज्ञा नान्दी । तदुक्तं **नाट्यदर्पणे**—'यस्या बीजस्य विन्यासो ह्यभिधेयस्य वस्तुन । श्लेषेण वा समासोक्त्या नान्दी पत्रावली तु सा ॥' इति । एतादृश्या नान्द्या अन्ते सूत्रं प्रयोगानुष्ठानं धारयतीति सूत्रधारः स्थापकनामा नटः । प्रविशतीति शेष· । **संगीतसर्वस्वे** तथोक्ते —'वर्तनीयतया सूत्रं प्रथमं येन सूच्यते । रङ्गभूमिं समाक्रम्य सूत्रधार स उच्यते ॥' इति । तदुक्तं **दशरूपके** (३।२)—'पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते । तद्वन्नरः प्रविश्यान्य· सूत्रधारगुणाकृति । सूचयेद्वस्तुबीजम्' इति । नन्वादौ पूर्वरङ्गाङ्ग- भूता नान्दीत्युक्तम् । अत्र 'पूर्वरङ्गं विधायादौ' इत्युच्यत इति कथं पूर्वापर- संगति· ? कथं वा न ग्रन्थविरोध इति चेत्,—उच्यते । अत्र पूर्वरङ्गशब्दो गौणः । तथा च तत्कारिका**वृत्तिः**—'पूर्वं रज्यन्तेऽस्मिन्निति पूर्वरङ्गो नाट्यशाला, तात्स्थ्या- त्प्रथमप्रयोग उत्थापनादौ पूर्वरङ्गता' इति । तेन द्वाविंशत्यङ्गस्य पूर्वरङ्गस्य द्वादशो- त्थापनादिनान्यन्तान्यङ्गानि पूर्वरङ्गशब्देनोक्तानीत्यर्थ । अत एवादि**भरते**—

'त्र्यस्रं वा चतुरस्रं वा चित्रं शुक्लमथापि वा । प्रयुज्य रङ्गान्निष्क्रामेत्सूत्रधारः सहानुग ॥ स्थापकः प्रविशेत्तत्र सूत्रधारगुणाकृति.' इति । वस्तुतस्त्वामुखपर्यन्तं पूर्वरङ्ग एव । यतोऽस्यैव नान्दीतोऽग्रे प्ररोचनादीनि दशाङ्गान्युक्तानि । तदुक्तं **भावप्रकाशिकायाम्**—'सभापतिः सभासभ्या गायका वादका अपि । नटी नटश्च मोदन्ते यत्रान्योन्यानुरञ्जनात् ॥ अतो रङ्ग इति ज्ञेय· पूर्वं यत्स प्रकल्प्यते । तस्मादयं पूर्वरङ्ग इति विद्वद्भिरुच्यते ॥ तस्य द्वाविंशत्यङ्गानि चोत्थापनमुखानि च ॥' इत्यादि च । अन्यत्रापि—'यन्नाट्यवस्तुन॰ पूर्वं रङ्गविघ्नोपशान्तये । कुशीलवाः प्रकुर्वन्ति पूर्वरङ्ग स उच्यते ॥ उत्थापनादिकान्यङ्गान्यस्य भूयांसि यद्यपि । तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ॥' इति । अत्र सूत्रधार एतदनन्तरं द्वितीयाङ्कलेखनमस्ति, तस्यायमर्थ ,—पुन सूत्रधार इति पदमुच्चारणीयम् । तदग्रिमवाक्यकर्तृत्वेन सवध्यते । एवमग्रेऽपि सर्वत्र प्रविष्टपात्रनामानन्तर द्वितीयाङ्कलेखनं तदर्थोऽयमेव बोद्धव्य । नेपथ्यं जवनिका । तदभिमुखमवलोक्येति कविवचनम् । नटेनावलोकनकर्मैव कृतं तदनुवादोऽयम् । एवमग्रेऽपि मध्ये मध्ये कविवचो बोद्धव्यम् । 'नेपथ्यं स्याज्जवनिका रङ्गभूमिः प्रसाधनम्' इत्यजय· । आर्ये इति भार्यां प्रति संबुद्धि । 'पत्नी चार्येति सभाष्या' इति **भरत**वचनात् । नेपथ्यं मषीवेषश्च । तदाह **भरतः**—'रामादिव्यञ्जको वेषो नटे नेपथ्यमिष्यते' इति । तस्य विधानं करणमवसितं समाप्तं यदि, तदा तावदादौ 'इत आगम्यता'मिति सबन्ध । तत्र मषीवेषग्रहणं च नामाहार्याभिनयः । तस्यापि रस उपयोगात् । तदुक्तं **मातृगुप्ताचार्यैः**—'रसास्तु त्रिविधा वाचिकनेपथ्यस्वभावजा. ॥ रसानुरूपैरालापै श्लोकैर्वाक्यै. पदैस्तथा । नानालंकारसयुक्तैर्वाचिको रस उच्यते ॥ कर्मरूपवयोजातिदेशकालानुवर्तिभि· । माल्यभूषणवस्त्राद्यैर्नेपथ्यरस उच्यते । रूपयौवनलावण्यस्थैर्यधैर्यादिभिर्गुणै· । रस· स्वाभाविको ज्ञेयः स च नाट्ये प्रशस्यते ॥' इति । तत्र मषीवेषस्वरूपं च **नाट्यलोचने**—'सितो नीलश्च पीतश्च चतुर्थो रक्त एव च । एते स्वभावजा वर्णा यैः कार्यं त्वङ्गवर्तनम् ॥ सयोगजाः पुनश्चान्य उपवर्णा भवन्ति हि । सितनीलसमायोगात्कपोत इति सज्ञितः ॥' इत्यादिना । 'राजानश्चाज्यगर्भाभा गौरा· श्यामास्तथैव च । ये चापि सुखिनो मर्त्या गौरा कार्यास्तु ते बुधै ॥' इत्यादिना च । 'शुद्धो विचित्रो मलिनस्त्रिविधो वेष उच्यते ॥ देवाभिगमने चैव मङ्गले नियमस्थिते । वेषस्तत्र भवेच्छुद्धो ये चान्ये प्रयता नराः । देवदानवयक्षाणा गन्धर्वोरगरक्षसाम् । नृपाणा कामुकाना च चित्रो वेषो विधीयते ॥ उन्मत्ताना प्रमत्तानामध्वगाना तथैव च । व्यसनोपहताना च मलिनो वेष इष्यते ॥' इत्यादिना च । 'अमात्यकञ्चुकिश्रेष्ठिविदूषकपुरोधसाम् । वेष्टनाबद्धपट्टानि प्रतिशीर्षाणि कारयेत् ॥' इत्यादिना च बहुना ग्रन्थसंदर्भेणोक्तम् । अस्माभिस्तु

**नटी**—अज्जउत्त ! इयं म्हि । [ आर्यपुत्र ! इयमस्मि । ]

**सूत्रधारः**—आर्ये ! अभिरूपभूयिष्ठा परिषदियम् । अद्य खलु कालिदासग्रथितवस्तुनाभिज्ञानशाकुन्तलनामधेयेन नवेन नाटकेनोपस्थातव्यमस्माभिः । तत्प्रतिपात्रमाधीयतां यत्नः ।

---

ग्रन्थगौरवभयान्नातिप्रयोजनतया च विरम्यते । अज्जउत्त आर्यपुत्र । 'सर्वस्त्रीभिः पतिर्वाच्य आर्यपुत्रेति यौवने' इति **भरतो**क्तेर्नटीसबुद्धि स्थापकं प्रति । इयं म्हि इयमस्मि । अत्र नाटके कवे. प्रायः शौरसेनीभाषैवाभिमतास्ति । उक्तं च **मातृगुप्ताचार्यैः**—'प्राक्प्रतीचीभुवोः सिन्धोर्हिमवद्विन्ध्यशैलयोः । अन्तरावस्थितं देशमार्यावर्तं विदुर्बुधा. ॥ आर्यावर्तप्रसूतासु सर्वास्वेव हि जातिषु । शौरसेनी समाश्रित्य भाषा काव्ये प्रयोजयेत् ॥' इति । 'तो दोऽनादौ शौरसेन्यामयुक्तस्य' इति सूत्रेऽयुक्तस्येति पर्युदासादुत्तेति तकारे दकारो न भवति । अन्या साधनिका यथा–आर्यपुत्रपदे 'ह्रस्वः सयोगे–' इत्याकारस्य ह्रस्वता । 'द्यय्यर्यां ज' इति यस्य जकार. । 'सर्वत्र लवरामचन्द्रे' इति 'पुत्र'शब्दे रेफस्य लोप । 'कगचजतदपयवा प्रायो लुक्' इति यकारस्य लुक् । 'अनादौ शेषादेशयोर्द्वित्वम्' इति जकारस्य तकारस्यापि द्वित्वम् । क्वचित्पुरातनपुस्तके **'अय्यउत्त'** इति पाठः । सोऽपि साप्रदायिक । एव शौरसेन्याम्' इत्यनुवर्तमाने 'न वार्यो य्या·' इति या देशविधानात् । इयमिति सस्कृतसमम् । 'अस्ते ' इत्यनुवर्तमाने 'मिमोमैर्म्हिम्होम्हा वा' इति अस्मीत्यस्य म्हीत्यादेश· । इत्थमग्रेऽप्यनुसर्तव्यम् । प्रतिपदं लिख्यमानं गौरवमावहतीति विरम्यते, विशेष एव क्वचित्कश्चिद्वक्ष्यते । एतदनन्तरं नवीने क्वचित्पुस्तके 'आणवेदु अज्जो को णिओओ अणुचिट्ठीअदु त्ति' इति पाठ. पुराणपुस्तकेष्वभावात्प्रयोजनाभावाच्चोपेक्ष्यः । 'रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचक । ऋतुं कंचिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥ भारतीसस्कृतप्रायो वाग्व्यापारो जनाश्रयः । भेदैः प्ररोचनायुक्तैर्वीथीप्रहसनामुखै ॥ इति **धनिको**क्तेर्भारतीवृत्तेः प्ररोचनालक्षणमङ्गमुपक्षिपति—'आर्ये ! अभिरूपभूयिष्ठा' इत्यादिना 'रमणीया·' इत्यन्तेन 'विस्तरादुत संक्षेपाद्विदधीत प्ररोचनाम्' इति **रसार्णव**सुधाकरोक्तेरियं विस्तीर्णा प्ररोचना । तल्लक्षणं **दशरूपके** (१।२७)—'उन्मुखीकरणं तत्र प्रशंसातः प्ररोचना' इति । तस्या भेदा उक्ता. **सुधाकरे**—'प्रशंसा तु द्विधा ज्ञेया चेतनाचेतनाश्रया । चेतनास्तु कथानाथकविसभ्यनटा. स्मृता ॥ अचेतनौ देशकालौ कालो मधुशरन्मुख. ॥' इति । कथानाथ. कथानायक । अभिरूपाः पण्डिता

**नटी**—सुविहिदप्पओअदाए अज्जस्स ण किं वि परिहाइस्सदि।
[ सुविहितप्रयोगतयार्यस्य न किमपि परिहास्यते । ]

**सूत्रधारः**—आर्ये ! कथयामि ते भूतार्थम्,–

---

मनोज्ञाश्च भूयिष्ठा बहवो यस्यामेतादृशी परिषत्सभा । 'अभिरूपो बुधे रम्ये' इति शाश्वतः । अनेन सभ्यप्रशंसा । तत्र सभ्यस्वरूपमादि**भरते**—'सभ्यास्तु विबुधैर्ज्ञेया ये दिदृक्षान्विता जनाः । मध्यस्थाः सावधानाश्च वाग्मिनो न्यायवेदिनः ॥ त्रुटितात्रुटिताभिज्ञा विनयानम्रकन्धराः । अगर्वा रसभावज्ञास्तौर्यत्रितयकोविदाः ॥ असद्वादनिषेद्धारश्चतुरा मत्सरच्छिदः । अमन्दरसनिष्यन्दहृदया भूषणोज्वला ॥ सुवेषा भोगिनो नानाभाषावादविशारदा । स्वस्वोचितस्थानसुस्थास्तत्प्रशंसापरायणाः ॥' इति । अद्येत्यनन्तरमेव वक्ष्यमाणग्रीष्मसमयोपलक्षणम् । कालिदासेति कविप्रशंसा । जगद्विलक्षणस्यातिप्रतीतस्य नामान्तरेण सरस्वतीवपुषस्तस्य नामसकीर्तनमेव स्तुतिः । अभिज्ञानशाकुन्तलेति स्वरूपत एवेतिवृत्तं रमणीयमित्यर्थः । तद्ग्रथितवस्तुनेति नवेनेति च रूपकप्रशंसा । उक्तं च **भावप्रकाशिकायाम्**—'इत्थं रङ्गविधानस्य संबन्धादिप्रसिद्धये । गोत्रं नाम च बध्नीयात्पूजावाक्यं सभासदाम् ॥ वाञ्छाकलापः प्रथमं कलाविधिरनन्तर. । वाञ्छाशून्या न दृश्यन्ते व्यवहारा. कथंचन ॥ वाञ्छाकलापस्तु कवेरभीष्टार्थप्रकाशनम् । स्वाभिधेयगतत्वेन सा द्विधा परिपठ्यते ॥ स्वगतं तु स्वगोत्रादिस्वीयकीर्तिप्रकाशनम् । अभिधेयगतं यत्तत्काव्यनाम्ना प्रकाशनम् ॥' इति । दशरूपकेषु केन रूपकेणेत्याशङ्कायामाह—**नाटकेनेति** । तल्लक्षणमुक्तं **मातृगुप्ताचार्यैः**—'प्रख्यातवस्तुविषयं धीरोदात्तादिनायकम् । राजर्षिवंशचरितं तथा दिव्याश्रयान्वितम् ॥ युक्तं वृद्धिविलासाद्यैर्गुणैर्नानाविभूतिभि । शृङ्गारवीरान्यतरप्रधानरससंश्रयम् ॥ प्रकृत्यवस्थासध्यङ्गसंध्यन्तरविभूषणै. । पताकास्थानकैर्वृत्तं पतङ्गैश्च प्रवृत्तिभि ॥ नाट्यालंकरणैर्नानाभाषायुक्पात्रसंचयै· । अङ्कप्रवेशकैराढ्यं रसभावसमुज्वलम् ॥ सुखदु खोत्पत्तिकृतं चरितं यच्च भूभृताम् । इतिवृत्तं कथोद्भूतं किञ्चिदुत्पाद्यवस्तु च ॥ नाटकं नाम तज्ज्ञेयं रूपकं नाट्यवेदिभि· ॥' इति । सुविहिदप्पओअदाए सुविहितप्रयोगतयार्यस्य न किमपि परिहाइस्सदि परिहास्यते । आर्यस्य सुविहितप्रयोगतया सुशिक्षिताभिनयप्रयोगतया न किमपि परिहास्यते परिहीन भविष्यतीति नटस्तुतिः । भूतार्थं सत्यार्थम् । भूतं

**आ परितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम्।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥ २ ॥**

**नटी**—अज्ज ! एवं णेदं। अणंतरकरणिज्जं[1] अज्जो आणवेदु।
[ आर्य ! एवमेव तत्। अनन्तरकरणीयमार्य आज्ञापयतु। ]

---

क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयोः' इति विश्वः। **आ परीति**। विदुषा परितोषादा परितोषं मर्यादीकृत्य, यावत्परितोषो भवतीत्यर्थः। 'आङ् मर्यादावचने' इति कर्मप्रवचनीयत्वे 'पञ्चम्यपाङ्परिभिः' ( पा २।३।१० ) इति पञ्चमी। प्रयोगस्य चतुर्धाभिनयप्रयोगस्य विशिष्टं ज्ञानं साधु सम्यङ् न मन्ये। ज्ञानमात्रं न साधु मन्ये, एवं विशिष्टमपि ज्ञानं न साधु मन्ये। आत्मन इत्यार्थम्। नट्याः 'अज्जस' इत्युक्तेः। अन्यथा वक्ष्यमाणव्यङ्ग्यावकाशोऽपि न स्यात्। असत्यार्थे तस्मिन्विशेषे वक्तव्ये सामान्यमुक्तमित्यप्रस्तुतप्रशंसा स्यात्। तस्या च सामान्यस्य समर्थकत्वं न घटते। न च 'मोक्षे धीर्ज्ञानमन्यत्र विज्ञानम्' इत्युक्तेर्विज्ञानशब्द एव तत्र शक्त इति वाच्यम्, प्रयोगपदवैयर्थ्यापातात्। अनेन विद्वत्परीक्षणीयं मम प्रयोगविज्ञानमिति व्यज्यते। पर्यायोक्तालंकारः। तल्लक्षणमुक्तं **भामहेन**—'पर्यायोक्तं प्रकारेण यदन्येनाभिधीयते। वाच्यवाचकशक्तिभ्यां शून्येनावगमात्मना ॥' इति। उदाहृतं च **हयग्रीववधस्थं** पद्यम्—'यं प्रेक्ष्य चिररूढापि निवासप्रीतिरुज्झिता। मदेनैरावणमुखे मानेन हृदये हरेः ॥' इति। अत्रैरावणशक्रौ मदमानमुक्तौ जाताविति व्यङ्ग्यमपि वाच्यायमानमेव। एवं प्रकृतेऽपि योज्यम्। तत्समर्थकमाह—**बलवदिति**। बलवदधिकमपि। 'बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे' इत्यमरः। शिक्षितानां पुरुषाणाम्। विशेषणादेव विशेष्यप्रतिपत्तेर्विशेष्यानुपादानम्। तथा च **वामनः** ( काव्या सू. ५।१।१० )—'विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ' इति चेतः आत्मनि स्वविषयेऽप्रत्ययमविश्वासि। 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः। 'क्व नासि शुभप्रद' इतिवद्विशब्दानुपादानेऽप्ययमर्थान्तरन्यासः। सामान्यस्य समर्थकत्वात्। श्रुत्यनुप्रासश्च। विश्वासस्य चेतोधर्मत्वेनार्थपौनरुक्त्यम्। विश्वासाभावस्य विधेयत्वादविमृष्टविधेयांशता च। एतद्दोषपरिहाराय 'स्वस्मिन्प्रत्येति नो चेतः' इति पठनीयम्। आर्य। इयमपि नटस्तुतिरेव। एवं णेदं एवमेव तत्। 'शौरसेन्याम्' इत्यनुवृत्तौ 'मोऽन्त्याण्णो वेदेतोः' इति णकारागमः। अनन्तरकरणीयमार्य आज्ञापयतु। अस्याः परिषदः सभायाः। तात्स्थ्यात्तत्रत्यानां सामाजिकानां श्रुतिप्रसादनतः श्रवणप्रसादादन्यत्किं करणीयमित्यनुषज्यते। 'ऋतुं

---

पाठा०—१ 'दाणिं आणवेदु अज्जो'.

**सूत्रधारः**—किमन्यदस्याः परिषदः श्रुतिप्रसादनतः? तदिममेव तावदचिरप्रवृत्तमुपभोगक्षमं ग्रीष्मसमयमधिकृत्य गीयताम्। संप्रति हि,—

**सुभगसलिलावगाहाः पाटलसंसर्गिसुरभिवनवाताः।**
**प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः॥ ३॥**

**नटी**—तह। [तथा।] (इति गायति)

---

कंचिदुपादाय' इत्युक्तेस्तमुपादत्ते—**तदिममिति**। तत्तस्मात्कारणाच्छ्रुतिप्रसादननिमित्तं गीयतामिति संबन्धः। अचिरप्रवृत्तमित्यनेन तदुत्पन्नपुष्पादेः सौरभ्यात्यतिशयो व्यज्यते। उपभोगाय चन्दनाद्युपभोगाय क्षमः समर्थस्तम्। अनेन स्वस्य श्रमापनोदोपायबाहुल्यसूचनम्। संप्रति ग्रीष्मे। हि यस्मात्। अस्य श्लोकेनान्वयः। **सुभगेति**। स्वतिशयेन भगो यत्नो येष्वेतादृशा सलिलावगाहा यत्रेति बहुव्रीहिगर्भो बहुव्रीहिः। 'भगशब्दो यशोज्ञानवीर्ययत्नार्ककीर्तिषु' इति धरणिः। एतेन जलक्रीडायोग्यत्वं ध्वन्यते। पाटलाना पाटलीपुष्पाणां संसर्गः संबन्धो येषु ते। 'पुष्पे क्लीबेऽपि पाटला' इत्यमरः। सुरभयो मनोज्ञाः। मनोज्ञत्वं च शीतलत्वेन सुखस्पर्शात्। 'सुगन्धे च मनोज्ञे स सुरभिर्वाच्यवन्मतः' इति विश्वः। एवंभूता वनवाता येषु ते। 'वन'शब्देन मान्द्यं ध्वनितम्। तेन संसर्गिसुरभिशब्दयोरन्यतरस्यावरकत्वं न शङ्कनीयम्। अनेन वियोगिजनसंचरणाक्षमत्वं ध्वन्यते। प्रकृष्टा छाया येषु प्रदेशेषु ते प्रच्छायास्तेषु सुलभा निद्रा येषु ते। अमुना रतश्रमहरत्वं ध्वन्यते। परिणामे दिवसावसाने रमणीया सुखसंचरणीयाः। एतेन शुभायितत्वं द्योत्यते। सर्वैर्विशेषणैः प्रकृतस्वीयपरिश्रमखेदविनोदो ध्वन्यते। परिकरालंकारः—'विशेषणसाभिप्रायत्वे परिकरः' इति तल्लक्षणात्। ननु विशेषणसाभिप्रायत्वे ध्वनिविषयत्वमेव स्यान्न परिकरालंकारत्वमिति चेत्,—प्रसन्नगम्भीरपदारब्धत्वेन प्रतीयमानाशस्य वाच्यमुखप्रेक्षितत्वात्परिकरालंकारत्वमेव ध्वनितम्। तथा च गुणीभूतव्यङ्ग्यनिरूपणे **ध्वनिकारः**—'प्रसन्नगम्भीरपदाः काव्यगन्धाः सुखावहाः। ये च तेषु प्रकारोऽयमेवं योज्यः सुमेधसा॥' इति। स्वभावोक्तिश्च। श्रुतिवृत्त्यनुप्रासौ। इयं चाचेतनग्रीष्मसमयस्तुतिः। तह तथा। गीयत इत्यर्थः। गायतीति कविवचनम्। 'तथा'शब्दस्य 'तह' इत्यनुवर्तमाने 'खघथधभां हः' इत्यनेन थकारस्य हकारः। 'वाव्ययोत्खातादावदातः' इत्याकारस्य अदादेशः। 'तस्मादिति च परे लुक्पदादेः' इत्यनुवर्तमाने 'इतेः स्वरात्तश्च द्विः' इत्यनेनेकारस्य लोपः। तकारस्य द्वित्वम्। 'तह इति' इति पाठे

---

पाठा०—१ 'आर्ये! नन्विममेव'. २ 'आश्रित्य'. ३ 'पाटलि°'.

[1]ईसीसिचुंबिआइं भमरेहिं[2] सुउमारकेसरसिहाइं ।
ओदंसयंति दअमाणा पमदाओ सिरीसकुसुमाइं ॥ ४ ॥

[ ईषदीषच्चुम्बितानि भ्रमरैः सुकुमारकेसरशिखानि ।
अवतंसयन्ति दयमानाः प्रमदाः शिरीषकुसुमानि ॥ ]

---

गायतीति कविवचनम् । भारत्या वृत्तेरामुखापरपर्यायं प्रस्तावनालक्षणं द्वितीयमङ्गमुपक्षिपति—'ईसीसि' इत्यादिना 'निष्क्रान्तौ' इत्यन्तेन । [ **ईसीसि इति** । ] **ईसीति** । ईषदीषच्चुंबिआइं भमरेहिं चुम्बितानि भ्रमरै सुउमारकेसरसिहाइं सुकुमारकेसरशिखानि । ओदंसयंति अवतंसयन्ति दअमाणा दयमाना· पमदाओ प्रमदा· सिरीसकुसुमाइं शिरीषकुसुमानि । सुकुमाराः केसराणां शिखा अग्रभागा येषु तानि । अग्रभागेष्वेव भ्रमरचुम्बनसंभवात्तदुक्ति· । यतः कोमलकिञ्जल्काग्राण्यत एवेषच्चुम्बितानीति द्विरुक्ति । अत एव दयमानाः सकृपा । अकठोर स्पृशन्त्य इति यावत् । प्रकृष्टो मदो रूपसौभाग्यजनितो विकारो यासा ता । तासामेव तथाविधालंकारकर्तव्यतायोग्यत्वाच्छकुन्तलासूचकत्वाच्च न विशेष्यपरिवृत्तत्वदोषावकाशः । वृत्त्यनुप्रास· काव्यलिङ्गम् । ईषच्छब्दे 'ईषदादिष्वित्' इत्यनेन षकारस्याकारस्येकार· । 'शषो ∙स ' इति सत्वम् । 'अन्त्यस्य हल·' इति तकारलोप । तेन ईसि इति सिद्धम् । पश्चाद्वीप्साया द्वितीयेन 'ईसि' शब्देन तत्संधिः । अवतंसयन्तीत्यत्र 'ओत्' इत्यनुवर्तमाने 'अवापो ते च' इत्यनेनावस्य ओआदेशः । अयं त्रिंशन्मात्रदलद्वयरूपो द्विपदीनामा लयभेद । तदुक्तमादि**भरते**—'वक्ष्ये भङ्गादिसभिन्नं नाट्यगानमत· परम् । मध्यमोत्तमपात्राणा नाटके सिद्धिदायकम् ॥' इत्यादिना द्वादशभङ्गा· षडुपभङ्गा द्विचत्वारिंशल्लयभेदाश्चोक्ता । तत्र द्विपदीनामा प्रथमो लयभेदः । तल्लक्षणं तत्रैव—'विलम्बितलया यत्र गुरवो द्विपदी तु सा । शृङ्गारे करुणे हास्ये योज्या चोत्तममध्यमै ॥ अवस्थान्तरमासाद्य गातव्या सऽधमैरपि' इति । अत्र गुरुस्तालरूपी ज्ञेयः । ग्रामरागेण ढक्काख्येन चास्या बन्ध इति ज्ञेयम् । इय च गीति । तल्लक्षणं **शंभौ**—'चा अच्चखघअद्धेउदारस्थद्धम्मि ज्ञेयम् ।' तदुक्तं तत्रैव—'इह आराबिंदुजुआए ओसुद्धाप आवसाणम्मि लहु' इति । अथ चात्र 'प्रमदा'शब्देन शकुन्तला गृहीता । सा शिरीषकुसुमान्यवतंसयन्तीत्युक्तम् । बहुवचनं पूजार्थम् । अत एव वक्ष्यति ( १।२६ )—'स्रस्तं कर्णशिरीषरोधि वदने घर्माम्भसा जालकम्' इति । विमर्शसंधिसमाप्त्यवसरे च राज्ञा 'अस्याः

---

**पाठा०**–१ 'खणचुंबिआइं'. २ '°हिं उअह' [ =ऊहत ].

**सूत्रधारः**—आर्ये ! साधु गीतम् । अहो रागबद्धचित्तवृत्तिरालिखित[1] इव[2] सर्वतो रङ्गः । तदिदानीं[3] कतमत्प्रकरणमाश्रित्यैनमाराधयामः ? ।

**नटी**—णं अज्जमिस्सेहिं पढमं एव्व आणत्तं अहिण्णाणसाउंदलं णाम अपुव्वं णाडअं पओए[4] अधिकरीअदुत्ति । [नन्वार्यमिश्रैः प्रथममेवाज्ञप्तमभिज्ञानशाकुन्तलं नामापूर्वं नाटकं प्रयोगेऽधिक्रियतामिति । ]

---

शकुन्तलायाः प्रसाधनमभिप्रेतं विस्मृतमस्माभिः' इत्युक्त्वा 'कृतं न कर्णार्पितबन्धनं सखे ! शिरीषमागण्डविलम्बि केसरम्' इत्युक्तम् अहो इत्याश्चर्ये । रङ्गो रङ्गभूः । तात्स्थ्यात्सभ्यसमूहः । रागे गीतधातौ बद्धा चित्तवृत्तिर्यस्य स । अत एव सर्वतः सर्वत्रालिखित इव । चित्रन्यस्त इवेत्यर्थः । द्वितीयपक्षे रज्यत इति रङ्गः । अथ रङ्गो रागो विद्यतेऽस्मिन्निति अर्शआदित्वादचि रङ्गो राजा । रागेऽनुरागे बद्धा चित्तवृत्तिर्यस्य स । सर्वत आलिखित इव, सर्वत्र ता पश्यतीत्यर्थः । 'रङ्गो रणे खले रागे नृत्ये रङ्गं त्रपुण्यपि' इति विश्वः । 'स्वैरङ्गैश्चापि वीथ्यङ्गैः प्रकुर्यादामुखं बुधः' इति **मातृगुप्ताचार्योक्तेः**, 'वीथ्यङ्गान्यामुखान्तत्वात्प्रोच्यन्तेऽत्रैव तानि तु' इति **धनिकोक्तेश्चा**वलगितं नामाङ्गमुपक्षिप्तमनेन । तल्लक्षणं **सुधाकरे**—'द्विधावलगितं प्रोक्तमर्थावलगनात्मकम् । अन्यप्रसङ्गादन्यस्य ससिद्धिः प्रकृतस्य च' इति । प्रकरणं रूपकम् । नन्वार्यमिश्रैः प्रथममेवाज्ञप्तमभिज्ञानशाकुन्तलं नामापूर्वं नाटकं प्रयोगेऽधिक्रियतामिति । 'णं नन्वर्थे' इति सौरसेन्याम् । अत्र क्वचित् **'पढुमं'** इति पाठः सांप्रदायिकः । यत 'प्रथम'शब्दस्य 'पढम पढुम पुढम' इति त्रय आदेशाः । 'अहिण्णाणसाउंदलं' इत्यत्र **'साउंतलं'** इति पाठे पूर्ववद्दत्त्वाभावः । दकारपाठे 'वर्गेऽन्त्यो वा' इति परसवर्णत्वे पक्षेऽनुस्वारे पूर्ववद्दकारः । येषा मते नित्यं परसवर्णस्तेषां मते 'अधः क्वचित्' इति सूत्रेण दकारः । एवमग्रे **'सउंदले' 'सउंतले'** इति पाठे रूपद्वयं ज्ञेयम् । 'खघथधभाम्' इति हः । 'म्नज्ञोर्णः' इति ज्ञस्य णः । 'नो णः' इति णत्वम् । 'शषोः सः' इति सः । 'कगच—' इति ककारलोपः । 'अपुव्वं' इत्यत्र **'अपुरवं'** इति पाठे 'शौरसेन्याम्' इत्यनुवृत्तौ 'पूर्वस्य पुरवः' इति पूर्वशब्दस्य पुरवादेशः । प्रस्तावनाङ्गं प्रयोगातिशयमुपक्षिपति—

---

**पाठा०—१ 'असौ हि रागापहृतचित्त°'. २ 'इव भाति'. ३ 'तत्कतमं प्रयोगमा°'. ४ 'णाडअं अहिणीअदु त्ति°'.**

**सूत्रधारः**—आर्ये! सम्यगनुबोधितोऽस्मि[1]। अस्मिन्क्षणे विस्मृतं खलु मया[2]। कुतः

**तवास्मि गीतरागेण हारिणा प्रसभं हृतः।**
**एष राजेव दुष्यन्तः[3] सारङ्गेणातिरंहसा ॥ ५ ॥**

( इति निष्क्रान्तौ )

**प्रस्तावना।**

---

**तवेति**। अस्मीत्यहमर्थेऽव्ययम्। गीते गीतौ निवद्धेन रागेण श्रीरागादिना धातुना। हारिणा श्रुतिसुखदेन, हर्तुं शीलमस्येति च। मृगपक्षेऽस्यातिरहसो हेतुत्वेन योज्यम्। उपमेयपक्षेऽपि प्रसभहरणे हेतुत्वेन योज्यम्। विशिष्टस्यैवोपमानत्वान्न विशेषणन्यूनता शङ्कनीया। प्रसभमत्यर्थं हृत आसक्तचित्त.। द्वितीयपक्षे हृतः स्वसेनया दूरं प्रच्यावित। उभयं भिन्नमपि साधारणधर्मप्रतिपादनार्थमतिशयोक्त्यैकत्वेनाध्यवसितम्। अत एव सर्वालंकाराणामतिशयोक्तिगर्भत्वमाकरे दर्शितम्—'नालंकारोऽनया विना' इति। एष इति प्रयोगातिशयाङ्गार्थम्, राजेति प्रवेशानुगुणम्, दुष्यन्त इति नामग्रहणमन्यराजव्यावर्तकत्वेनेति नैकस्याप्यवकरत्वं शङ्कनीयम्। सारङ्गेण मृगेण। 'सारङ्गश्चातके भृङ्गे कुरङ्गेऽपि मतङ्गजे' इति विश्व। कीदृशा तेन? अतिरंहसातिवेगवता। 'रंहस्तरसी तु रय. स्यद.। जव.' इत्यमर.। अत्र व्यावर्तकत्वेन दुष्यन्त इत्यस्य विशेषणत्वाद्विशेष्यानन्तरमेतच्छब्दस्योचितत्वान्नाक्रमत्वम्। रसनाकाव्यलिङ्गं वोपमा। श्रुतिवृत्त्यनुप्रासौ। नन्वेवं बहुव्रीहौ कृते समासान्त कप् प्राप्नोतीति चेत्—उच्यते, तस्यानित्यत्वात्। तथा हि—'द्वित्रिभ्यां पाद्दन्मूर्धसु' (पा ६।२।१९७) इति सूत्रे द्वित्रिभ्यामुत्तरेषु पादादिष्वन्तोदात्तत्वं विधीयते। तत्र यथा पाददन्तयो 'संख्यासुपूर्वस्य' (पा. ५।४।१४१) 'वयसि दन्तस्य दतृ' (पा ५।४।१४१) इत्येताभ्यां कृतसमासान्तयोर्ग्रहणं कृतम् 'पाद्दन्' इति तद्वत् 'द्वित्रिभ्यां षमूर्ध्नः' इति षप्रत्ययान्तस्य 'मूर्धंषु' इति 'मूर्ध'शब्दस्य ग्रहणं कर्तव्यं स्यात्। एवं च क्रमाभेदोऽपि भवति? तेन प्रक्रमभेदमप्यङ्गीकृत्य यदकृतसमासान्तो निर्दिष्टस्तज्ज्ञापयति—'अनित्य समासान्त.' इति। करणत्वेन योजने विशेषणयोरार्थत्वशाब्दत्वलक्षण प्रक्रमभङ्ग। हारिणेत्यत्र यद्धेतुत्वेन विशिष्टोपमानत्वं तच्छब्देन घटते। प्रयोगातिशयलक्षणं **दशरूपके** (३।१)—'एषोऽयमित्युपक्षेपात्सूत्रधारप्रयोगत। पात्रप्रवेशो यत्रैष प्रयोगातिशयो मतः' इति। **प्रस्तावनेति**। तल्लक्षणं तु **सुधाकरे**—'विधेर्यथैव संकल्पो मुखतां प्रतिपद्यते। प्रधानस्य प्रबन्धस्य तथा प्रस्तावना मता॥ अर्थस्य प्रतिपाद्यस्य तीर्थं प्रस्तावना मता' इति। **दशरूपकं** च (३।७)—'सूत्रधारो नटीं ब्रूते मार्षं वापि

---

**पाठा०-१ 'सम्यगवबोधिनी'. २ 'मयैतत्'. ३ 'दुःषन्तः'.**

# प्रथमोऽङ्कः

( ततः प्रविशति मृगानुसारी सशरचापहस्तो राजा रथेन सूतश्च )

**सूतः**—( राजानं मृगं चावलोक्य ) आयुष्मन् !

---

विदूषकम् । स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् । प्रस्तावना' इति । 'एषामन्यतमेनार्थं पात्रं वाक्षिप्य सूत्रभृत् । प्रस्तावनान्ते निर्गच्छेत्ततो वस्तु प्रपञ्चयेत्' ( ३ । २१ ) इति । वस्तु इतिवृत्तम् । वस्तुप्रपञ्चने विशेषस्तत्रैव ( ३ । २५ )—'आद्यन्तमेव निश्चित्य पञ्चधा तद्विभज्य च । खण्डशः सधिसंज्ञाश्च भागानपि च खण्डयेत् ॥ चतुःषष्टिश्च तानि स्युरङ्गानि' इति । तत्र विभागप्रकारः । 'अवस्था पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः । आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः ॥ बीजबिन्दुपताकाख्यप्रकरीकार्यलक्षणा । अर्थप्रकृतय पञ्च पञ्चावस्थासमन्विताः ॥ यथासख्येन जायन्ते मुखाद्या पञ्च सधय । मुखं प्रतिमुखं गर्भ सावमर्शोऽथ सहृति ' ( १ । २२ ) इति ॥ सधिसामान्यलक्षणं तत्रैव—'अन्तरैकार्थसंबन्ध· सधिरेकान्वये सति' इति । अत्र 'तत प्रविशति' इत्यारभ्य द्वितीयाङ्के 'उभौ परिक्रम्योपविष्टौ' इत्यन्तेन सार्धाङ्केन मुखसधि । तल्लक्षणं तत्रैव ( १ । २४-२५ )—'मुखं बीजसमुत्पत्तिर्नानार्थरससश्रया' इति । अस्य बीजारम्भयो· समवायादङ्गानि । तानि च—'उपक्षेपः परिकरः परिन्यासो विलोभनम् । युक्ति प्राप्ति समाधानं विधानं परिभावना । उद्भेदभेदकरणानि' इति । अङ्गलक्षणं व्याख्यानावसरे यथायथं वक्ष्यामः । आरम्भबीजयोर्लक्षणे आदि**भरते**—'औत्सुक्यमात्रबन्धुस्तु यो बीजस्य निबध्यते । महत फलयोगस्य स खल्वारम्भ इष्यते' इति । यथात्र 'राजा—भवतु । ता द्रक्ष्यामि' । 'अल्पमात्रं समुद्दिष्टं बहुधा यत्प्रसर्पति । फलावसानं यच्चैव बीजं तदभिधीयते' इति । तत्र विशेषो **मातृगुप्ताचार्यै**रुक्त —'क्वचित्कारणमात्रं तु क्वचिच्च फलदर्शनम् । क्वचिदारम्भमात्रं तु फलमुक्त्वा क्रिया क्वचित् । व्यापारश्च विशेषोक्त· क्वचिद्वा फलसाधक । बहुधा रूपकेष्वेवं बीजरूपेण दृश्यते ॥ फले यस्य हि संहार· फलबीजं तु तद्भवेत् । वस्तुबीजं कथा ज्ञेया अर्थबीजं तु नायक ' ॥ यथात्र—'पुत्रमेवंगुणोपेतं चक्रवर्तिनमाप्नुहि' इति । यथा च 'वैखानस·—इदानीमेव दुहितरं शकुन्तलामतिथिसत्काराय नियुज्य' इति । **ततः प्रविशतीति** । अयं धीरोदात्तो नायक । अतोऽस्य सस्कृतं पाठ्यम् । सूतस्यापि सस्कृतं पाठ्यम् । उक्तं चादि**भरते**—'धीरोद्धते धीरललिते धीरोदात्ते तथैव च । धीरप्रशान्ते च तथा पाठ्यं योज्यं तु सस्कृतम्' इति । **मातृगुप्ताचार्या**श्च—'समताना देवताना राजन्यामात्यसैनिके । वणिङ्मागधसूताना पाठ्यं योज्यं तु सस्कृतम्' इति । सामान्यगुणयोगित्वे 'महासत्त्वोऽतिगम्भीर· क्षमावानविकत्थनः । स्थिरो निगूढाहंकारो धीरोदात्तो दृढव्रत ' इति तल्लक्षणं च ( २ । ४ ) **दशरूपके** । सामान्यगुणास्तु **सुधाकरे**—'तद्गुणास्तु महाभाग्यमौदार्यं स्थैर्यदक्षते । औज्वल्यं धार्मिकत्वं च कुलीनत्वं च वाग्मिता । कृतज्ञत्वं नयज्ञत्वं शुचिता मानशीलता ।

कृष्णसारे ददच्चक्षुस्त्वयि चाधिज्यकार्मुके।
मृगानुसारिणं साक्षात्पश्यामीव पिनाकिनम् ॥ ६ ॥

**राजा**—सूत ! दूरममुना सारङ्गेण वयमाकृष्टाः । [1]अयं पुनरिदानीमपि,—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम्।
[3]दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥ ७ ॥

तदेष कथमनुपतत एव मे प्रयत्नप्रेक्षणीयः संवृत्तः? ।

---

तेजस्वित्वं कलावत्त्वं प्रजारञ्जकतादय' इति। धीरोदात्तत्वं चास्य 'स्वसुखनिरभिलाषः' इत्यादिना स्फुटमेव दर्शितम्। 'शेषा मन्त्रिस्वायत्तसिद्धय.' इत्युक्तेश्चोभयायत्तसिद्धित्वं चास्य 'त्वन्मति· केवला तावत्परिपालयतु प्रजाः। अधिज्यमिदमन्यस्मिन्कर्मणि व्यापृतं धनु.' इत्यनेन च दर्शितम्। रथेनेति सहार्थे तृतीया 'वृद्धो यूना' (पा. १।२।६५) इति ज्ञापकाद्विनापि सहशब्दप्रयोगेण। तत 'आयुष्मन्निति वाच्यस्तु रथी सूतेन सर्वदा' इति **भरतो**क्ते 'आयुष्मन्' इति सबुद्धि· । **कृष्णेति।** कृष्णसारे मृगविशेषेऽधिज्यकार्मुकेऽधिरूढगुणधनुषि त्वयि च चक्षुर्ददत्। अभ्यस्तत्वान्नुमभावः। चकारेण तुल्यकालता द्योत्यते। ततश्चैकस्य चक्षुषो युगपदनेकत्र वर्तमानत्वाद्विशेषालंकार·। मृगरूपधरयज्ञानुसारिणम्। प्रकृते तदनुसारित्वं प्रकरणलभ्यम्। साक्षात्पिनाकिनं महादेवं पश्यामीवेत्युत्प्रेक्षा। यतोऽत्र सतोः प्रकृताप्रकृतयोरसतस्तादात्म्यसबन्धमात्रस्य सभाव्यमानत्वात्। क्वचिदुभयोरसतोरपि 'कपालेनोन्मुक्तः स्फटिकधवलेनाङ्कुर इव' इति यथा। नोपमा साक्षाच्छब्दवैयर्थ्यात्क्रियानन्तरमिवशब्दप्रयोगाच्च। 'नोपमानं तिङन्तेन' इति **भामहो**क्तेः। 'ददच्चक्षु' 'पश्यामी'ति क्रियाद्वयग्रहणाच्च। उपमाया तु 'पिनाकिनमिव साक्षात्पश्यामी'त्येवं योजने 'ददच्चक्षु'रित्यनेन पौनरुक्त्यमेव। श्रुतिवृत्त्यनुप्रासौ। सारङ्गेण मृगेण। 'अयं पुनरिदानीमपि' इति श्लोकशेष। **ग्रीवेति।** पश्येति वाक्यार्थस्य कर्मत्वम्। इदानीमप्ययं पुरो दृश्यमानो मृग पुनरुदग्रप्लुतत्वादुत्कटोत्प्लवनाद्वियत्याकाशे बहुतरमधिकं प्रयाति प्रकृष्टं यातीति। अनेन गमनस्य प्रकर्ष उक्त। बहुतरमिति देशाधिक्यमुक्तम्। उर्व्यां स्तोकमल्पं प्रयातीति। अनेन न पौनरुक्त्यशङ्कावकाश। कीदृक्? अनु पश्चात्पतति स्यन्दने रथे ग्रीवाभङ्गेनाभिरामं यथा स्यात्तथा मुहुर्वारंवारं बद्धदृष्टिर्दत्तचक्षुः। 'दृष्टिर्ज्ञानेऽक्ष्णि दर्शने' इत्यमर।

---

पाठा०—१ 'सोऽयमिदानीं'. २ 'दत्तदृष्टिः'. ३ 'शष्पै०'.

**राजा**—'उज्झित'शब्देन जनितं मे[1] कौतूहलम् । आ[2] मूलाच्छ्रोतुमिच्छामि ।

**अनसूया**—सुणादु अज्जो; गोदमीतीरे पुरा किल तस्स राएसिणो उग्गे तवसि वट्टमाणस्स किंवि जादसकेहि देवेहि मेणआ णाम अच्छरा पेसिदा णिअमविग्घकालिणी । [ श्रृणोत्वार्यः, गौतमीतीरे पुरा किल तस्य राजर्षेरुग्रे तपसि वर्तमानस्य किमपि जातशङ्कैर्देवैर्मेनका नामाप्सरा. प्रेषिता नियमविघ्नकारिणी । ]

**राजा**—अस्त्येतदन्यसमाधिभीरुत्वं देवानाम् ।

**अनसूया**—तदो वसंतोदाररमणीए समए से उम्मादइत्तअं रूवं पेक्खिअ,—[ ततो वसन्तोदाररमणीये समये तस्या उन्मादयितृ रूपं प्रेक्ष्य,— ] ( इत्यर्धोक्ते लज्जया विरमति । )

**राजा**—पर[3]स्ताज्ज्ञायत एव । सर्वथाप्सरःसंभवैषा ।

**अनसूया**—अह इं ? । [ अथ किम् ? । ]

**राजा**—उपपद्यते,—

**मा[4]नुषीषु कथं वा स्यादस्य रूपस्य संभवः ? ।**
**न प्रभातरलं ज्योतिरुदेति वसुधातलात् ॥ २२ ॥**

( शकुन्तलाऽधोमुखी तिष्ठति । )

---

पिता । शृणोत्वार्य. । गौतमीतीरे पुरा किल तस्य राजर्षेरुग्रे तपसि वर्तमानस्य किमपि जातशङ्कैर्देवैर्नियमविघ्नकारिणी मेनका नामाप्सरा. प्रेषिता । 'आपः सुमनसो वर्षा अप्सराः सिकता· समा· । एते स्त्रिया बहुत्वे स्युरेकत्वेऽप्युत्तरत्रयम् ॥' इत्युक्तेरेकवचनान्तोऽप्सर.शब्द । तत उदारवसन्तरमणीये समये । प्राकृते पूर्वनिपातानियमः । तस्या उन्मादयितृ रूपं प्रेक्ष्य । 'राजा–परस्ताज्ज्ञायत एव' इत्यनेनानुक्तसिद्धिरिति । अह इं अथ किम् ? । उपपद्यते युज्यते । **मानुषीष्विति** । मनोरपत्यानि स्त्रियो मानुष्यस्तासु । 'मनोर्जातावञ्यतौ षुक् च' ( पा. ४।१।११५ ) इत्यञ्षुकौ। तत· 'टिड्ढाणञ्–' ( पा. ४।१।१६१ ) इति ङीप्। एतेनासा पृथिव्यंशाधिक्यं ध्वनितम् । त्रिवृत्पञ्चीकरणपक्षयोरर्धषडंशाना ग्रहणम् । उक्तं च ( तर्कसग्रहे )

---

**पाठा०**—१ 'नः'. २ 'तदामूला°'. ३ '°स्तादवगम्यत'. ४ 'मानुषीभ्यः कथं नु स्या°'.

'पृथिवी नित्यानित्या च । नित्या परमाणुरूपा, अनित्या कार्यरूपा । सापि शरीरेन्द्रियविषयरूपा । शरीरमस्मदादीना प्रत्यक्षसिद्धम्' इति । एतच्च संभवः कथं वा स्यादद प्रति हेतुत्वेन योज्यम् । अत एवोपमाने 'वसुधातलात्' इति प्रतिवस्तुत्वेनोपादानम् । प्रतिव्यक्तिजातिसमाप्तेस्तासु रूपादीना तारतम्यस्य प्रत्यक्षतः परिदृश्यमानस्य 'इदम प्रत्यक्षगतम्' इत्युक्ते । निर्जितरतिलावण्यस्य निरुपमस्य त्रिजगत्युपमानतां प्राप्तस्येत्यर्थान्तरसक्रमितम् । रूपं विद्यतेऽस्मिन्नस्य वा मत्वर्थीयोऽर्शआदिभ्योऽच् । तेन रूपवत इत्यर्थ । अन्यथा 'अस्य' इत्यनेनार्थपौनरुक्त्यं स्यात् । 'रूप'शब्दो लावण्यादीनामुपलक्षणम् । ते च 'यौवनं रूपलावण्ये सौन्दर्यमभिरूपता । मार्दवं सौकुमार्यं चेत्यालम्बनगुणा मता' इत्युक्ता । अत एव 'प्रभातरल'मित्युपमानेन विशेषणाविक्यं तन्मध्ये प्रथमं यौवनस्य प्रत्यक्षतः परिदृश्यमानत्वात्तद्वदिहापीतरेषा ग्रहणं रूपशब्देन । संभव उत्पत्ति कथं वा स्यात् ? अपि तु न स्यादेव । 'कथं वे'ति निपातसमुदायो निषेधे । अत्र विशेषे प्रस्तुते सामान्योक्तेरप्रस्तुतप्रशंसा । क्व मानुष्य. ? क्वेदं रूपम् ? इति सामान्यतः प्रतीतम् । विषमालकारस्यैको भेदो व्यङ्ग्य । कीदृगित्याह—**नेति** । प्रभया दीप्त्या तरलमुज्वलं भासुरम् । 'तरलश्चञ्चले षिङ्गे हारमध्यमणावपि । भासुरे च' इति विश्व । ज्योतिश्चन्द्रादि । वसुधातलाद्भूस्वरूपान्नोदेति, न प्रकटीभवतीत्यर्थः । अत्र भूस्वरूपस्य ज्योतिषश्च जन्यजनकभावाभावात्सत उत्पत्तिमङ्गीकृत्य विश्लेषमत्रे पञ्चमी प्रत्युक्तेत्यवधेयम्, प्रकृते प्रत्यक्षेण दृश्यमानत्वात् । संभावनायां लिङ् । उपमानवाक्ये प्रसिद्धत्वान्निषेधोक्ति । श्रुतिवृत्त्यनुप्रासौ । संभवः कथं वा स्यात् ? 'नोदेती'ति च सामान्यधर्मस्य शब्दान्तरेणोक्तेरतिशयोक्तिमूला प्रतिवस्तूपमा । रूपादीना लक्षणानि यथा—'अङ्गान्यभूषितान्येव प्रक्षेप्याद्यैर्विभूषणैः । येन भूषितवद्भान्ति तद्रूपमिह कथ्यते ॥ मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु लावण्यं तदिहोच्यते ॥ अङ्गप्रत्यङ्गकाना यः सनिवेशो यथोचितम् । सुश्लिष्टसधिबन्धो यस्तत्सौन्दर्यमितीर्यते ॥ यदात्मीयगुणोत्कर्षैस्त्वन्यच्च निकटस्थितम् । सारूप्यं नयनिष्ठाङ्गैराभिरूप्यं तदुच्यते ॥ स्पृष्टं यत्राङ्गमस्पृष्टमिव स्यान्मार्दवं हि तत् । यत्स्पर्शासहनाङ्गेषु कोमलस्यापि वस्तुन. ॥ तत्सौकुमार्यं त्रेधा स्यान्मुख्यमध्याधमक्रमात् । अङ्गं पुष्पादिसस्पर्शासहं येन तदुत्तमम् ॥ न सहेत करस्पर्शं येनाङ्गं मध्यम हि तत् । येनाङ्गमातपादीनामसह तदिहाधमम् ॥' इति । अन्ये तु मानुषीणा प्रतिबिम्बत्वेन वसुधाया उपात्तत्वात्सभवस्य चोदयः प्रतिबिम्बत्वेनोपात्त इति दृष्टान्तमाहु । वस्तुतस्त्वयमेवोचितः । यत पूर्वत्रालंकार आद्यभागे व्यङ्ग्यवाच्ययोः प्रतिवस्तुत्वम्, उत्तरत्र वाच्यलक्ष्ययोरिति । अनेन निदर्शनं नामभूषणमुपक्षिप्तम् । तल्लक्षणं तु—'यत्रार्थानां प्रसिद्धाना क्रियते परिकीर्तनम् । परापेक्षाव्युदासार्थं तन्निदर्शनमुच्यते ॥' इति । अधोमुखी तिष्ठतीति स्वस्तुत्याकर्णनेन ।

**राजा**—( आत्मगतम् । ) लब्धावकाशो मे मनोरथः । किंतु सख्याः परिहासोदाहृतां वरप्रार्थनां श्रुत्वा धृतद्वैधीभावकातरं मे मनः ।

**प्रियंवदा**—(सस्मितं शकुन्तला विलोक्य नायकाभिमुखी भूत्वा ) पुणो वि वत्तुकामो विअ अज्जो । [ पुनरपि वक्तुकाम इवार्य· । ]

( शकुन्तला सखीमङ्गुल्या तर्जयति )

**राजा**—सम्यगुपलक्षितं भवत्या । अस्ति नः सच्चरितश्रवणलोभादन्यदपि प्रष्टव्यम् ।

**प्रियंवदा**—अलं विआरिअ । अणिअंतणाणुओओ तवस्सिअणो णाम । [ अलं विचार्य । अनियन्त्रणानुयोगस्तपस्विजनो नाम ]

**राजा**—इ[1]ति सखीं ते ज्ञातुमिच्छामि !

**वैखानसं किमनया व्रतमा प्रदाना-**
**द्व्यापाररोधि मदनस्य निषेवितव्यम् ।**
**अ[2]त्यन्तमेव मदिरेक्षणवल्लभाभि-**
**राहो निवत्स्यति समं हरिणाङ्गनाभिः ॥ २३ ॥**

---

तेनोत्तमत्वं ध्वनितम् । अथ च शृङ्गारलजाख्यो व्यभिचारी ध्वनित , उभयानुभावत्वादधोमुखत्वस्य । पुनरपि प्रष्टुकाम इवार्य· । अलं विचार्य । अनियन्त्रणानुयोगोऽप्रतिबन्धप्रश्न. । ‘ प्रश्नोऽनुयोगः पृच्छा च’ इत्यमर । तपस्विजनो नाम । ‘ **णिओओ** ’ इति पाठे नियोग आज्ञा । इति सखी ते ज्ञातुमिच्छामि । इतीति किम् ? । **वैखानसमिति** । वैखानस व्रतं तपस्विसबन्धि तपोवननिवासलक्षणम् । मदनस्य व्यापारः स्वविषये प्रवृत्तिर्नानाविधालिङ्गनाद्य( द्यं ) तेत (?) । तदुक्तं **महिमभट्टेन**—‘यत· सर्वेष्वलंकारेष्वयमाजीवितायते । सा च प्रतीयमानैव तद्विद्वान् स्वदतेतराम्’ इति । तथा—‘ वाच्यात्प्रतीयमानोऽर्थस्तद्विद्वान् स्वदतेऽधिकम् । रूपकादितरः कप्रकारा’ (?) । न तु चरमधातुविसर्गोऽत्राभिप्रेतः (?) । तद्रोधि व्रतं नियमादि । प्रकृष्टायोत्तमप्रकृतये राज्ञे दानं तस्मात् । प्रदानादिविशिष्टमिद मर्यादीकृत्य निषेवणीयम् । किमिति प्रश्ने । किम् । आहो अथवा । ‘आहो

---

पाठा०—१ ‘एतत्पृच्छामि’. २ ‘अत्यन्तमात्मसदृशेक्षण०.’

**प्रियंवदा**—अज्ज[1]! धम्मचरणे वि परवसो अअं जणो। गुरुणो उण से अणुरूववरप्पदाणे संकप्पो। [आर्य! धर्मचरणेऽपि परवशोऽयं जनः। गुरोः पुनरस्या अनुरूपवरप्रदाने संकल्पः।]

**राजा**—(आत्मगतम्) न दुरवापेयं खलु प्रार्थना।

**भव हृदय! साभिलाषं संप्रति संदेहनिर्णयो जातः।**
**आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम्॥ २४॥**

---

उताहो किमुत विकल्पे' इत्यमरः। मदिरे सजातमदे ये ईक्षणे ते च ते च तैर्वल्लभाभि सुन्दरीभि। **'आत्मसदृश-'** इति पाठे—आत्मन सदृशे ईक्षणे तैर्वल्लभाभि प्रियाभि। हरिणाङ्गनाभिर्मृगीभि सहात्यन्तमाजन्मैव निवत्स्यति। अर्थात्तपोवने। अयमाशय —यदि राज्ञे देया तदा विवाहपर्यन्तमेव तपोवने स्थितिः। तदनन्तरमविरोधी कामोपभोग। यदि कस्मैचित्तपस्विने देया तदा मृगमिथुनवत् कामोपभोगरहिता वन एव स्थास्यतीति। अस्यैवोत्तरम्—अनुरूपवरप्रदान इत्यादि। अत्र सहोक्ति। औपम्यं गम्यम्। निवासः सामान्यधर्मः। 'सम'शब्दस्य तुल्यवाचित्व उपमैव। 'समं सहार्थे तुल्ये च' इत्यजयः। अनयोः पूर्वोक्तैव सहृदयहृदयहारिणी। स्नेहालंकारेषु नोपमेति। वृत्त्यनुप्रासश्च। वसन्ततिलका वृत्तम्। आर्य! धर्मचरणेऽपि परवशोऽयं जन। एतदाश्रमवासित्वेन सामान्यतः प्राप्तं यद्धर्मचरणं तत्रापि पराधीन इति यावत्। अनेन पूर्वपद्ये यत्कर्तृत्वेनोपात्तं तस्योत्तरम्। तेनास्याः कर्तृत्वं कुत्रापि नास्तीति भाव। इतः परं कि परवशेत्येकः प्रश्नः। यत्परवशस्तस्यापि कोऽभिप्राय इति द्वितीय। तत्राह—गुरोः पुनस्तस्या अनुरूपवरप्रदाने सकल्प। अनेनोत्तरालंकार। 'उत्तरेण प्रश्नोन्नयन उत्तरम्' इति तल्लक्षणात्। 'राजा—वयमपि' इत्यादिनैतदन्तं युक्तिर्नामाङ्गमुपक्षिप्तम्। 'संप्रधारणमर्थाना युक्तिरित्यभिधीयते' इति। **दुरवापेति**। एतत्सदृशान्यस्याभावादिति भाव। **भवेति**। हे हृदय! साभिलाषं भव। अनेन राजगतस्वभावस्य स्थैर्यं द्योत्यते। तत्र हेतुमाह—**संप्रतीति**। मुनिकन्या क्षत्रियकन्या वेति संदेहे निर्णय एकतरनिश्चयो जात। तेनात्र काव्यलिङ्गम्। निर्णयमेव विवृणोति—**आशङ्कस** इति। यत्त्वमग्निमाशङ्कसे मन्यसे। अस्प्रष्टव्यत्वं सामान्यधर्मो गम्यः। व्यस्तरूपकम्। तत्स्पर्शक्षमं रत्नमिति व्यतिरेकरूपम्। अथ च स्पर्शक्षममुपभोग्यं रत्नम्, कन्यारत्नमित्यर्थ। 'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते' इत्युक्तेः। वृत्त्यनुप्रासश्च। नायकौत्सुक्यं ध्वनितम्। अनेन समाधाननामकमङ्गमुपक्षिप्तम्। तल्लक्षणं

---

पाठा०— १ 'धम्माअरणपरव्वसो'.

**शकुन्तला**—( सरोषमिव ) अणसूए! गमिस्सं अहं। [अनसूये! गमिष्याम्यहम्।]

**अनसूया**—किंणिमित्तं?। [किंनिमित्तम्?।]

**शकुन्तला**—इमं असंबद्धप्पलाविणिं पिअंवदं अज्जाए गोदमीए णिवेदइस्सं। [इमामसंबद्धप्रलापिनीं प्रियंवदामार्यायै गौतम्यै निवेदयिष्यामि।]

**अनसूया**—सहि! ण जुत्तं ते अकिदसक्कारं अदिहिविसेसं विसज्जिअ सच्छंददो गमणं। [सखि! न युक्तं तेऽकृतसत्कारमतिथिविशेषं विसृज्य स्वच्छन्दतो गमनम्।]

( शकुन्तला न किंचिदुक्त्वा प्रस्थितैव )

**राजा**[1]—( ग्रहीतुमिच्छन्निगृह्यात्मानम्, आत्मगतम् ) अहो चेष्टाप्रतिरूपिका कामिजनमनोवृत्तिः। अहं हि,—

**अनुयास्यन्मुनितनयां सहसा विनयेन वारितप्रसरः।**
**[2]स्थानादनुच्चलन्नपि गत्वेव पुनः प्रतिनिवृत्तः॥ २५॥**

---

तु—'बीजार्थस्योपगमनं तत्समाधानमुच्यते' इति। अनसूये! गमिष्याम्यहम्। किंनिमित्तम्?। इमामसंबद्धप्रलापिनी प्रियंवदामार्यायै गौतम्यै निवेदयिष्यामि। सखि! न युक्तं तेऽकृतसत्कारमतिथिविशेषमिति साभिप्रायम्। विसृज्य स्वच्छन्दतो गमनम्। अनेनोपदेश इति नाट्यालंकार उपक्षिप्त.। तल्लक्षणम्—'शिक्षा स्यादुपदेशनम्' इति। अहो इत्याश्चर्ये। चेष्टाप्रतिरूपिका चेष्टासदृशी यादृशी शरीरचेष्टाया तादृशी ता विनापीति। अत एवाश्चर्यम्। तदेवाह—**अनुयास्यन्निति**। मुनितनया शकुन्तलाम्। सबन्धमात्रविवक्षया समास कृतः। यथा—'अरित्रीणाम्' इत्यत्र। एनामिति वक्तव्य एतदुक्तिर्मुग्धत्वद्योतनाय। सहसाविचारितमनुयास्यन्ननुगमिष्यन्। 'लृटः सद्वा' इति शतृ। अहं विनयेन जितेन्द्रियतया वारित. प्रसरो वेगो यस्य स.। 'प्रसरः प्रणये वेगे' इति विश्व.। 'इन्द्रियाणा जयं प्राह विनयं भरतो मुनि' इत्युक्ते.। अत्रानुगमनकरणे वेगस्यैव निराकरणात्तात्त्विकानुरागनिषेधाभावाद्रतेः

---

पाठा०—१ 'राजा-( अपवार्य ) कथं गच्छति?'. २ 'स्थानादचलन्नपि'.

**प्रियंवदा**—( शकुन्तलां निरुध्य ) हला ! ण दे जुत्तं गंतुं । [ हला ! न ते युक्तं गन्तुम् । ]

**शकुन्तला**—( सभ्रूभङ्गम् ) किंणिमित्तं ? । [ किंनिमित्तम् ? । ]

**प्रियंवदा**—रुक्खसेअणे दुवे धारेसि मे । एहि जाव; अत्ताणं मोचिअ तदो गमिस्ससि । [ वृक्षसेचने द्वे धारयसि मे । एहि तावत्; आत्मानं मोचयित्वा ततो गमिष्यसि । ] ( इति बलादेना निवर्तयति )

**राजा**—भद्रे ! वृक्षसेचनादेव परिश्रान्तामत्रभवतीं लक्षये । तथा ह्यस्याः,—

**स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा-**
**दद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः ।**
**स्रस्तं कर्णशिरीषरोधि वदने घर्माम्भसां जालकं**
**बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्धजाः ॥ २९ ॥**

तदहमेनामनृणां करोमि । ( इत्यङ्गुलीयं दातुमिच्छति )

---

स्थायित्वं ध्वनितम् । तेन प्रसरपदस्यावकरत्वं न शङ्कनीयम् । अन्यथाऽनुयास्यन्नेत्र निवारितः । अन्यत्र सुतरां वारित इत्यर्थः स्यात् । स्थानादुपवेशनादनुच्चलन्नच-चलोऽपि । उत्थानं तु दूरापास्तमित्यपिशब्दार्थः । गत्वा प्रतिनिवृत्त पर्यावर्त इवे-त्युत्प्रेक्षा । अनुच्चलन् गत इति विरोधाभास । काव्यलिङ्गमनुप्रासश्च । अनेन परि-भावनेत्यङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'कुतूहलोत्तरावेशो विज्ञेया परिभावना' इति । न ते युक्तं गन्तुम् । किंनिमित्तम् ? वृक्षसेचने द्वे धारयसि मे । एहि तावत् । आत्मानं मोचयित्वा ततो गमिष्यसि । **स्रस्तांसाविति** । स्रस्तौ पतितावंसौ ययोस्तौ । स्वभावतस्तु नतौ, अधुना त्वभिनतावित्यर्थः । 'स्रंसु ध्वंसु अध -पतने' । घटोत्क्षेपणादिति हेतुः सर्वत्र योज्य । स्वभावत एव लोहितौ । अधुना-ऽतिमात्रमत्यर्थं लोहिततलौ रक्तकरतलौ । 'तल'शब्द एकदेशेन 'भीमो भीमसेन' इतिवत् करतलमाह, बाहुसांनिध्यात् । इदं विशेषणद्वयमविधेयम् । बाहू इति द्विव-चनम् । पर्यायेण व्याप्रियमाणत्वात् । तेन न पूर्वापरविरोध । अद्यापीति च त्रिषु स्थानेष्वन्वेति । अद्यापि स्रस्तांसौ, अद्याप्यतिमात्रलोहिततलौ, अद्यापि प्रमाणाधिक इति । तेनातिशयमृदुता ध्वन्यते । प्रमाणाधिको द्वादशाङ्गुलाधिकः । उक्तं च—

'देहं व्याप्य स्वनाडीभिः प्रमाणं कुरुते बहिः । द्वादशाङ्गुलमानेन तस्मात्प्राण· समीरित.' इति । श्वासो निःश्वासवायु· अत एव स्तनयोर्वेपथुं कम्पं जनयति । 'अथ वेपथुः । कम्पः' इत्यमर· । यद्यपि सर्वाङ्गस्य स्वेदयुक्तत्वं तथापि तस्य संवृतत्वान्मुख(खे)पूर्वमुत्पत्तेर्मुखमर्धशरीरं तस्य । 'सर्व वा मुखमुच्यते' इत्युक्तेश्च वदन इत्युक्ति. । तेन कपोलयोरलिके चिबुक इत्यर्थ· । घर्माम्भसा स्वेदोदकानाम् । 'घर्म. स्यादातपे ग्रीष्मे उष्णस्वेदाम्भसोरपि' इति विश्व· । यज्जालकमशोकादिनवकलिकावृन्दाकारं बिन्दुकदम्बकं लक्षणयोच्यते—'क्षारको जालकं क्लीबे' इत्यमरव्याख्याने क्षीरस्वामी । जालमिव जालकम् । 'उद्भिन्नमात्रकलिकावृन्द'मिति व्याख्यानात् । तेनाशोकादिनवकलिकावृन्दं वाच्यम् । सामान्यस्य विशेषनिष्ठत्वात् । नहि निर्विशेषं सामान्यमस्ति । तेनाकारसामान्याद्बिन्दुवृन्दं लक्ष्यते । सातिशयोद्दीपकत्वं व्यङ्ग्यम् । यदि समूहमात्रं व्यङ्ग्यं स्यात्तदा 'घर्माम्भसा मण्डलम्' इत्येव ब्रूयात् । तत्स्रस्त गलितम्, श्रमातिशयादिति भाव. । ननु मुख्यार्थबाधे लक्षणा । न चात्र तद्बाध· । तेन तद्बीजाभावान्न सेति चेत् । तात्पर्यानुपपत्तेरपि लक्षणाया बीजस्योरीकृतत्वात्तामेवानुवाद्यविशेषणद्वारा व्यनक्ति—**कर्णेति** । कर्णेऽवतंसीकृतं शिरीषपुष्पं कर्णशिरीषम् । मध्यमपदलोपी समासः । तद्रोद्धुं शीलं यस्य तत् । कर्णशिरीषस्य रोधो विद्यते यस्मादिति बहुव्रीहौ मत्वर्थीयस्य व्यर्थता स्यात् । बिन्दुस्तबकत्वेन विधानाद्रोधस्यासा वर्षिता सा दर्शिता(?) । अन्यस्योक्तानुक्तयोरर्थं प्रति विशेषाभावादपुष्टार्थैव पर्यवस्येत् । बन्धे केशबन्धे स्रंसिनि स्खलति सति मूर्धजाः केशा एकेन हस्तेन यमिता बन्धनं नीता. अत एव पर्याकुलाश्चञ्चलाश्च । पूर्ववाक्यसमुच्चये स्वभावोक्ति । सर्वत्र घटोत्क्षेपणादिति हेतोरुक्तेरादिकारकदीपकालकारः । अत एव नावृत्तिनिबन्धनापेक्षा । तदलंकारान्तरगतत्वात्तस्याः । तदुक्तम्—'सैव क्रियासु बह्वीषु कारकस्येति दीपकम् । सैवावृत्ति' इति । 'अर्थावृत्ति पदावृत्तिरुभयावृत्तिरित्यमी' इत्युक्तेः । स्रस्तं स्रंसिनीत्युभयावृत्तिरलंकार, काव्यलिङ्गं च । स्तनवेपथुजननेन हेतुना श्वासस्य प्रमाणाधिकत्वं साध्यमित्यनुमानालंकारश्च । अनुप्रास. । वाक्यचतुष्टये च प्रत्येकं विशेषणद्वयोपादानान्न तत्प्रक्रमभङ्ग । अत एव प्रथमवाक्योपनिबद्धं 'अद्यापी'ति पदं द्वितीयवाक्ये सबन्धादग्यावृत्तिनिबन्धनानपेक्षत्वेन देहलीप्रदीपन्यायेनोभयत्रान्वेतुं विशेषणप्रक्रमभङ्गनिवृत्तये च द्वितीयवाक्य उपनिबद्धमित्यवधेयम् । अद्यापि सेचनक्रियारम्भ, सप्रत्यप्यनुवर्तमान इत्यर्थ । 'अद्यात्राह्नि' इत्यमरव्याख्याने **क्षीरस्वामी** वर्तमानतामात्रेऽप्याहुरित्यवोचत् । यदि श्वाससामानाधिकरण्याभावाद्विशेषणत्वाभाव इत्यसतोषस्तर्हि 'अद्यापि स्तनवेपथोश्च जनक श्वास· प्रमाणाधिक' इति पाठं पठित्वा संतोष्टव्यम् । अस्मिन्पाठे पदकदम्बकात्मकानि चत्वार्यपि वाक्यानीति न ततः प्रक्रमभङ्ग. । चकार पूर्वसमुच्चये ।

( उभे नाममुद्राक्षराण्यनुवाच्य परस्परमवलोकयतः )

**राजा**— अलमस्मानन्यथा संभाव्य । राज्ञः परिग्रहोऽयमिति राजपुरुषं मामवगच्छथ ।

**प्रियंवदा**—तेण हि णारिहदि एदं अंगुलीअअं अंगुलीविओअं । अज्जस्स वअणेण अणिरिणा दाणिं एसा । ( किंचिद्विहस्य ) हला सउंदले ! मोइदासि अणुअपिणा अज्जेण, अहवा महाराएण; गच्छ दाणिं ।

[ तेन हि नार्हत्येतदङ्गुलीयकमङ्गुलीवियोगम् । आर्यस्य वचनेनानृणेदानीमेषा । हला शकुन्तले ! मोचितास्यनुकम्पिनार्येण, अथवा महाराजेन; गच्छेदानीम् । ]

---

अथाद्यवाक्ये विशेषणद्वयमपि विधेयम् । द्वितीये द्वयमप्यनुवाद्यम्, इतरयोरेकं विधेयमेकमनुवाद्यमित्येव क्रम इति न तत्प्रक्रमभङ्गोऽपि । पूर्वमंसौ नतौ न, बाहू रक्ततलौ न, अधुना बाहू अनूद्य त्रस्तासत्वादे 'सोमेन यजेत' इतिवद्विशिष्टस्य विधानात् नाविमृष्टविधेयाशता, नाप्यनुवाद्यविधेयव्यत्यय शङ्कनीयः । यतस्तस्यामत्यन्तानुरक्तस्य राज्ञस्तत्सुकुमारतरत्वमालोच्य 'अस्यामिदमत्यन्तमनुचितम्' इति विधेयमेव बुद्धिस्थीभूतमिति तदेव वाक्यचतुष्टये प्रथमतो निबद्धमित्यवहितैः सहृदयैर्भाव्यम् । यद्यपि घर्मोऽम्भोरूप एव, तथापि पूर्वं कर्णावतंसरोधित्वेन बिन्दुस्तबकरूपता परस्तात्स्रंसनं च 'अम्भ'पदोपादानव्यतिरेकेण न स्फुरतीति तदुपादानम् । शार्दूलविक्रीडित वृत्तम् । अनेन दृष्टमिति भूषणमुपक्षिप्तम् । तल्लक्षणं तु—'यथादेशं यथाकालं यथारूप च वर्ण्यते । यत्प्रत्यक्षं परोक्षं वा तद्दृष्टं दृष्टवद्भवेत्' इति । 'प्रियंवदा—शकुन्तला निरुध्य' इत्यादिना 'इच्छती'त्यन्तेन करणं नामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'प्रकृतार्थस्य चारम्भ करणं नाम तद्भवेत्' इति । अलंकारार्थं तु मुद्रिका, नामाक्षरयुक्ता तु मुद्रेत्यनयोर्भेदः । नामरूपाणि 'दुष्यन्ते'ति नामस्वरूपाणि यानि मुद्राक्षराणीति समास । नाममुद्राया अक्षराणीति विग्रह आर्थं पौनरुक्त्यम्, मुद्रेत्येतावतैव गतार्थत्वात् । अन्यथेति राजत्वेन । राज्ञः परिग्रहः परिजनो मूल चाय मल्लक्षण इति हेतो राज्ञः पुरुषः, राजा चासौ पुरुषश्च तम् । 'परिग्रह परिजने पत्न्या स्वीकारमूलयो' इति विश्व । तेन हि नार्हत्येतदङ्गुलीयकमङ्गुलीवियोगम् । आर्यस्य वचनेनानृणेदानीमेषा । मोचितास्यनुकम्पिनार्येण, अथवा महाराजेन । गच्छेदानीम् । यद्यात्मन प्रभविष्यामि । अनेनोद्भेदनामकमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'बीजार्थस्य प्ररोहो य स उद्भेद इति स्मृतः' इति ।

---

पाठा०—१ 'अलमन्यथा'. २ '°परिग्रहोऽयम् । प्रियं०—'. ३ 'अंगुरीअविओअं कादुं अज्जो' ४ 'वअणादो ज्जेव अरिणा एसा भोदु'.

**शकुन्तला**[1]—( आत्मगतम् ) जइ अत्तणो पहविस्सं । ( प्रकाशम् ) का तुमं विसज्जिदव्वस्स रुंधिदव्वस्स वा ? । [ यद्यात्मनः प्रभविष्यामि । का त्वं विसर्जितव्यस्य रोद्धव्यस्य वा ? । ]

**राजा**—( शकुन्तलां विलोक्य, आत्मगतम् ) किं नु खलु यथा वयमस्यामेवमियमप्यस्मान्प्रति स्यात् । अथवा लब्धावकाशा मे प्रार्थना । कुतः

**वाचं न मिश्रयति यद्यपि मद्वचोभिः**
**कर्णं ददात्यभिमुखं**[2] **मयि भाषमाणे ।**
**कामं न तिष्ठति मदाननसंमुखीना**[3]
**भूयिष्ठमन्यविषया न तु दृष्टिरस्याः ॥ २७ ॥**

---

**दशरूपके** तु ( १।२९ )—'उद्भेदो गूढभेदनम्' इति । राजभावस्य गूढस्योद्भेदनात् । का त्वं विसर्जितव्यस्य रोद्धव्यस्य वा ? । **वाचमिति** । यद्यपीयं मम वचोभिर्वाचं न मिश्रयति, मया सह न वक्तीत्यर्थः । इयमुक्तिर्ग्राम्यत्वादुपेक्षिता। अथ च 'वाचं वचोभि' इति स्त्री-नपुंसकलिङ्गनिर्देशेन स्वीया सखीमपि तन्मित्रेण मेलयतीति ध्वनि. । तथापि मयि भाषमाणेऽभिमुखं कर्णं ददाति, मदुक्त सादरं शृणोतीत्यर्थ । यद्यपि काममत्यर्थं मदाननसमुखीना मन्मुखाभिमुखी न तिष्ठति । 'यथामुखसमुखस्य-' इति खः । तथापि भूयिष्ठमतिशयेन । बहु यथा स्यात्तथा । 'बहु'शब्दादतिशायने, 'अजादी गुणवचनादेव' इतीष्ठनि 'बहोर्लोपो भू च बहो.' ( पा. ६।४।१५८ ) 'इष्ठस्य यिट् च' ( पा ६।४।१५९ ) इति भ्वादेश इष्ठन आदिलोपे यिडागमरूपम् । अस्या दृष्टिरन्यविषया मदाननव्यतिरिक्तविषया। न तु, नैवेत्यर्थ । चरणत्रयेऽस्मदा सौभाग्यातिशयो ध्वन्यते । छेकवृत्त्यनुप्रासौ । वसन्ततिलका वृत्तम् । अनेन मुग्धाया नायिकाया गात्रजो विलास इति भाव उक्त । तल्लक्षणं तु **नागरसर्वस्वे**-'यो वल्लभासन्नगतो विकारो गत्यासनस्थानविलोकनादौ । नानाविधाकूतचमत्कृतिश्च पराङ्मुखं चास्यमयं विलासः ॥' इति । अनुरागेङ्गितं च । तदुक्तं **मदनोदये**—'विकारो नेत्रवक्त्रस्य तद्वाक्यश्रवणादरः । अन्यव्याजेन तद्वीक्षा अनुरागेङ्गितं भवेत् ॥' इति । पूर्वोक्तं प्राप्तिलक्षणमङ्गमनेन चोपक्षिप्तम् । प्रकृतकथाविच्छेदार्थ-

---

**पाठा०**—१ 'अनसूया-हला सउंतले, मोआविदासि अणुकंपिणा अज्जेण अथ वा महाराएण । ता कहिं दाणिं गमिस्ससि ? शकुं०—( आत्मगतम् ) ण एदं परिहरिस्सं जइ अत्तणो पहवे । प्रियं०-संपदं किं ण गच्छीअदि ? शकुं०—इदाणिं पि किं तुह आअत्त म्हि । जदा मे रोअदि तो गमिस्सं ।' २ 'ददात्यवहिता'. ३ '°संमुखीयं'.

( नेपथ्ये )

भो भोस्तपस्विनः ! [1]संनिहितास्तपोवनसत्त्वरक्षायै भवत । प्रत्यासन्नः किल मृगयाविहारी पार्थिवो [2]दुष्यन्तः ।

तुरगखुरहतस्तथा हि रेणु-
विटपविष[3]क्तजलार्द्रवल्कलेषु ।
पतति परिणतारुणप्रकाशः
शलभसमूह इवाश्रमद्रुमेषु ॥ २८ ॥

अपि च[4]—

तीव्राघातप्रतिहत[5]तरुः स्कन्धलग्नैकदन्तः
पादाकृष्टव्रततिवलयासङ्गसंजातपाशः ।

---

मन्तरसंधिमुपक्षिपति—**नेपथ्य** इति । 'दुष्यन्त' इति राजनामश्रवणाच्छकुन्तलाया: प्रोत्साहनाद्भेदलक्षणमङ्गमुपक्षिप्तम् । 'भेद: प्रोत्साहना मता' इति तल्लक्षणस्य **धनिकेनो**क्तत्वात् । 'प्रत्यासन्न' इति यदुक्तं, तत्र हेतुं श्लोकाभ्यां दर्शयति—**तुरगेति** । तथा हि तुरगखुरहतो रेणुराश्रमद्रुमेषु पततीति योजना । कीदृशेषु ? विटपेषु शाखासु विषक्तान्यासक्तानि जलार्द्राणि वल्कलानि येषु तेषु । आर्द्रत्वं विषक्तत्वे हेतुः । अनेन विटपेभ्यो वल्कलापसारणं क्रियतामिति ध्वन्यते । 'तुरग' इत्यनेन सेनाया बाहुल्यं ध्वनितम् । इदं च तपोवनसत्त्वरक्षावहितत्व आर्थो हेतु: । 'आश्रमे'त्यनेन निकटत्वं द्रुमेष्विति विशेषणोपादानार्थम् । जलग्रहणं तस्मिन्समयेऽप्यशुष्कताभिधानार्थम् । कीदृग्रेणु ? परिणतः सायंकालीनो योऽयमरुणः सूर्यस्तद्वत्प्रकाशः अस्फुट:, तद्वद्वर्णे इत्यर्थ: । 'अरुणोऽस्फुटरागे च सूर्ये सूर्यस्य सारथौ' इति धरणिः । 'प्रकाशोऽतिप्रसिद्धे स्यात्प्रहासातपयोः स्फुटे' इति विश्व । अयमेवोपमाया सामान्यधर्मो ज्ञेय: । क इव ? शलभसमूहः पतङ्गनिकर इव । अनया रेणोर्बहलत्वं घनत्वं च ध्वन्यते । वृत्त्यनुप्रास उपमा च । अत्र पार्थिवप्रत्यासन्नत्वे कारणे प्रस्तुते तत्कार्यं रेणूद्धूलनादिकमुक्तमित्यप्रस्तुतप्रशंसा । न पर्यायोक्तम्; कार्यस्याप्रस्तुतत्वात् । यथात्र राज्ञ प्रत्यासन्नत्वमवश्यं वक्तव्यं तद्वत्कार्यस्यावश्यकत्वाभावात् । पर्यायोक्ते तु कारणवत्कार्यमपि प्रकृतमेव । तत्र कारणापेक्षया तद्वर्णनमतिचमत्कारकृदिति स्थितमाकरे । काव्यलिङ्गं च । पुष्पि-

---

**पाठा०**—१ 'तपोवनसंनिहितसत्त्वरक्षणाय सज्जीभवन्तु भवन्तः'. २ 'दुःषन्तः'. ३ '°निषक्त°'. ४ '°राजा—( स्वगतम् ) अहो धिक्...°रुन्धन्ति ? । ( पुनर्नेपथ्ये ) भोस्तपस्विनः ! पर्याकुलीकुर्वन्वृद्धस्त्रीकुमारकानेष दुष्यन्तः प्राप्त:,–तीव्राघातादभिमुखतरु°'. '°तरुस्कन्ध°'.

मूर्तो विघ्नस्तपस इव नो भिन्नसारङ्गयूथो
धर्मारण्यं प्रविशति गजः स्यन्दनालोकभीतः ॥ २९ ॥

(सर्वाः कर्णं दत्त्वा किंचिदिव सम्भ्रान्ताः)

**राजा**—(आत्मगतम्) अहो धिक् । पौरा अस्मदन्वेषिणस्तपोवनमुपरुन्धन्ति । भवतु; प्रतिगमिष्यामस्तावत् ।

**सख्यौ**—अज्ज ! इमिणा आरण्णअवुत्तंतेण पज्जाउल म्ह । अणुजाणीहि णो उडअगमणस्स । [आर्य ! अनेनारण्यकवृत्तान्तेन पर्याकुलाः स्मः । अनुजानीहि न उटजगमनाय । ]

---

ताम्रा वृत्तम् । **तीव्रेति** । स्यन्दनस्य रथस्यावलोकनाद्भीतो गजो धर्मारण्यं प्रविशतीति संबन्धः । कीदृग्गजः ? तीव्रो य आघातः पलायनविषये स्वाभाविकः संवेगः संघट्टस्तेन प्रतिहता भग्नास्तरवो येन सः । स्कन्धे स्कन्धभागे पार्श्वावलोकनेन लग्न एको दन्तो यस्य सः । तत्र स्कन्धभागो दक्षिणः । दन्तोऽपि दक्षिण इति साम्प्रदायिकाः । उक्तं च **पालकाप्ये**—'दक्षिणे वलितुं शक्तो गजो वामे प्रयत्नतः' इति । अन्ये त्वेकपदत्वेन व्याचक्षते–तीव्रेणाघातेनाघातोद्यमेन प्रतिहतो यस्तरुस्कन्धस्तत्र लग्न एकदन्तो यस्य । यद्वा,–तीव्रेणोग्रेण क्वचित्कठिने वस्तुन्याघातेन प्रतिहतस्ततं उच्चलितः सन्, तरुस्कन्धे लग्न एको दन्तो यस्य सः । उभयमपि नातिसमञ्जसम्, अर्थासगतेः । तथा हि—तरुस्कन्धे भग्नत्वं लग्नत्वं वा । आद्ये भग्नैकदन्त इत्येव पठेत् । द्वितीये प्रविशतीति क्रियया विरोधस्तेन सदानितत्वात् । लग्नदन्तत्वं दन्ताकार आघात इति चेन्न,–प्रकृतार्थपोषाभावात् । अथ तत्त्वत एकदन्त एव गजस्तत्र तीव्रेत्यादिगम्योत्प्रेक्षा । तथापि पूर्वोक्त एव दोषः । आघात-प्रतिहतपदयोरन्यतरस्यावकरत्वं दुष्परिहरणीयम् । पादाभ्यामाकृष्टं यद्गुनतिवलयं लताजालं तस्यासङ्गेन समन्तात्संबन्धेन जातः पाशो यस्य सः । भिन्नानि सारङ्गाणां मृगाणां यूथानि कुलानि यस्मात्सः । विशेषणचतुष्टयेन वेगातिशयो व्यज्यते । नोऽस्माकम् । तपसो मूर्तः शरीरी विघ्न इवेत्युत्प्रेक्षा । पूर्वश्लोकोक्तक्रमेणाप्रस्तुतप्रशंसा च । पूर्वार्धे वृत्त्यनुप्रास–श्रुत्यनुप्रासयोरेकवाचकानुप्रवेशलक्षणः संकरः । उत्तरार्धे श्रुत्यनुप्रास एव । परिकरालंकारश्च । मन्दाक्रान्ता वृत्तम् । अत्रापि भयानको रसः । गजगतभयं स्थायिभावः । दुष्यन्तसेनारथावलोकनं विभावः । पार्श्वावलोकनपलायनादयो व्यभिचारिणः । लक्षणं पूर्वमेवोक्तम् । अहो धिगिति भिन्नं वाक्यम् । आर्य ! अनेनारण्यकवृत्तान्तेन पर्याकुलाः

---

**पाठा०**—१ 'विरुजति'. २ 'कथमपराद्धस्तपस्विनामस्मि ? भवतु, तावत्प्रतिगच्छामि'. ३ 'हत्थिसंभमेण'. ४ 'पज्जाउलाओ...उडअगमणे'.

राजा—(ससंभ्रमम्) [1]गच्छन्तु भवत्यः। वयमप्याश्रमपीडा यथा न भवति तथा प्रयतिष्यामहे।

(सर्वे उत्तिष्ठन्ति)

सख्यौ—अज्ज! [2]असंभाविदअदिहिसक्कारं भूओ वि पेक्खणणिमित्तं लज्जेमो अज्जं विण्णविदुं। [आर्य! असभावितातिथिसत्कारं भूयोऽपि प्रेक्षणनिमित्तं लज्जावहे आर्यं विज्ञापयितुम्।]

राजा—मा मैवम्, दर्शनेनैवात्रभवतीनां पुरस्कृतोऽस्मि[3]।

(शकुन्तला राजानमवलोकयन्ती सव्याजं विलम्ब्य सह सखीभ्या निष्क्रान्ता)

राजा—[4]मन्दौत्सुक्योऽस्मि नगरगमनं प्रति। यावदनुयात्रिकान्समेत्य नातिदूरे तपोवनस्य निवेशयेयम्। न खलु शक्नोमि शकुन्तलाव्यापारादात्मानं निवर्तयितुम्। मम हि,—

गच्छति पुरः शरीरं धावति पश्चाद[5]संस्तुतं चेतः।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य॥ ३०॥

(इति निष्क्रान्ताः सर्वे)

[6]इति प्रथमोऽङ्कः।

---

स्म। अनुजानीह्यनुज्ञा देहि नोऽस्मानुटजगमनाय। असभावितातिथिसत्कारमप्रापितातिथिपूजम्। प्राप्तौ भू। भूयोऽपि प्रेक्षणनिमित्तं लज्जावहे आर्यं विज्ञापयितुम्। पुरस्कृतः पूजित.। 'पुरस्कृत पूजितेऽरात्यभियुक्तेऽग्रत· कृते' इत्यमर.। 'सव्याजं विलम्ब्य'इत्यनेन सखीद्वय पूर्व निष्क्रान्तं स्वयं च पश्चात। इत्यनेन प्रतिमुखसंधावुच्यमानम् 'दर्भाङ्कुरेण' (२।१२) इत्यादि समर्थित भवति। सहैवेति लज्जा ध्वनिता। **गच्छतीति**। शरीरं पुरोऽग्रे गच्छति। चेत· पुनः पश्चाच्छकुन्तलाभिमुखं धावति। शरीरं तु शनैर्गच्छति। सबन्धेऽसबन्धलक्षणा असंबन्धे सबन्ध-

---

**पाठा०-१ 'अनु०-हला सउंतले, आउला अज्जा गोदमी भविस्सदि। ता एहि, सिग्घं एक्कत्थाओ होम्ह। शकुं०-(** गतिसंरोधं रूपयित्वा **) हद्धी हद्धी, ऊरुत्थंभविअल म्हि संवुत्ता। राजा-स्वैरं स्वैरं गच्छंतु'** २ **'विदिदभूइट्ठो सि। णं संपदं जं उव आरमज्झत्थदाए अवरद्धाओ म्ह तं मरिसेसि', ३ 'शकुं०-अहिणवकुससूइपरिक्खदं मे चलणं। कुरुवअसाहापरिलग्गं च मे वक्कलं। ता पडिवालेध मं जाव णं मोआवेमि'. ४ '(** नि·श्वस्य **) गताः सर्वाः। अहमपि गच्छामि। शकुन्तलादर्शनादेव मन्दौत्सुक्यो०'. ५ '°दसंस्थितं चेतः'. ६ 'इत्याखेटको नाम'.**

लक्षणा च द्वय्यतिशयोक्तिः । असंस्तुतं शरीरेणापरिचितमवैतीति गम्योत्प्रेक्षा । 'संस्तवः स्यात्परिचय-' इत्यमर-। प्रतिवातं वातसंमुखं नीयमानस्य केतोर्ध्वजस्य चीनदेशस्थं वस्त्रं चीनांशुकं तदिव तस्यातिसूक्ष्मत्वादल्पेऽपि वाते वाताभिमुखे ध्वजे तत्पश्चादेव गच्छतीति वृत्त्यनुप्रास उपमा । अनया च हृदयशून्यत्वात्परेण नीय-मानकाष्ठतुल्यत्वं शरीरस्य ध्वनितम् । 'चीन'पदोपादानाच्चेतसोऽतिचाञ्चल्यं चेति । निष्क्रान्ता सर्वे इति । तदुक्तं **दशरूपके** ( ३।३६-३७ )—'एकाहाचरितैकार्थ-मित्थमासन्ननायकम् । पात्रैस्त्रिचैतुरैरङ्कं तेषामन्तेऽस्य निर्गमः ॥' इति अत्र च तपोवनसरोधस्य प्राप्तत्वात्स च नाटके साक्षान्न निदर्शनीयः, अङ्कान्ते निबद्धव्य इत्यत्राङ्कसमाप्ति-। तदुक्तं **दशरूपके** ( ३।३४ )—'दूराध्वानं वधं युद्धं राज्य-देशादिविप्लवम् । सरोधं भोजनं स्नानं सुरतं चानुलेपनम् । शस्त्रस्य ग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत् ॥' इति । अङ्कलक्षणं **दशरूपके** ( २।२९-३० )—'यदा तु सरस वस्तु मूलादेव प्रवर्तते । आदावेव तदाङ्क- स्यादामुखाक्षेपसश्रय- ॥ प्रत्यक्ष-नेतृचरितो बिन्दुव्याप्तिपुरस्कृत । अङ्को नानाप्रकारार्थसविधानरसाश्रय ॥' इति । आदि**भरते** च—'अङ्क इति रूढिशब्दो भावैश्च रसैश्च रोहयत्यर्थान् । नानावि-धानयुक्तो यस्मात्तस्माद्भवेदङ्क ॥ यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः । किंचिदवलग्नबिन्दुः सोऽङ्क इति सदाऽवगन्तव्यः ॥ ये नायका निगदितास्तेषा प्रत्यक्षचरितसंयुक्तः । नानावस्थान्तरित- कार्यस्त्वङ्को यथार्थरस- ॥' इति ॥

**इति श्रीमदभिज्ञानशाकुन्तलटीकायामर्थद्योत-
निकायां प्रथमोऽङ्कः समाप्तः ॥**



# द्वितीयाङ्कस्य कथावस्तु



अत्र सवितरि मूर्ध्नि स्थितेऽपि ग्रीष्मविरलपादपच्छायासु चेतस्ततोऽटवीतोऽटवीं भ्रममाणस्य मृगयाशीलस्य दुष्यन्तस्य स्नेहप्रवणेन विदूषकेन सनिःश्वासं दुःखानुभवो वर्ण्यते । ततश्च मृगवराह-शार्दूलादीननुसरता नृपेण कण्वमुन्याश्रमपदप्रविष्टेन दुष्यन्तेन तपस्विदुहिता शकुन्तलाऽवलोकिता । सकृद्दर्शने तल्लावण्यलुब्धो दुष्यन्तस्तामेवानिशं चिन्तयन्निशां कथमप्यत्यवाहयत् । 'वयस्येन सांप्रतं नगरगमनमेव श्रेयः' इत्यावेदितोऽपि न तथानुष्ठातुं दुष्यन्तः प्रभवति इति विदूषको दूनमनस्कस्तदैव सपरिवारस्य दुष्यन्तस्य प्रवेशमावेदयति । राज्ञश्चित्तवृत्तिमनुवर्तिष्यमाणेन सेनापतिना मृगयां प्रति प्रेरितोऽपि मन्दोत्साहो नृपस्तपोवनसन्निधावेव परिसरे विश्राममनुज्ञापयामास । परश्चानन्यमनस्को दुष्यन्तः शकुन्तलाविषयकं वार्तालापं वयस्येन सममन्वतिष्ठत् । ततस्तपस्वियुगलेनाश्रमसनाथीकरणार्थं यज्ञान्तरायभूतरक्षोभ्यो रक्षणार्थं कृतं सानुनयमभ्यर्थनं दुष्यन्तः स्वीचकार। एतस्मिन्नेवान्तरे नगरादम्बाज्ञाहरः करभकः 'आगामिनि चतुर्थदिवसे प्रवृत्तपारणो मे उपवासो भविष्यति, तत्र दीर्घायुषाऽवश्यं संभावनीया' इत्यम्बासंदेशं दुष्यन्तायार्पयत् । शकुन्तलानुराग-पुत्रकर्तव्याभ्यां चाकुलीभूतो दुष्यन्तः पुत्रकृत्यमनुष्ठातुमम्बया पुत्रत्वेन प्रतिगृहीतं वयस्यं प्रेष्य तपोवनं प्रविशतीत्यत्रांशः प्रस्तुतः ।



# द्वितीयोऽङ्कः

( ततः प्रविशति विषण्णो विदूषक )

**विदूषकः**—( निःश्वस्य ) भो दिट्ठं । एदस्स मअआसीलस्स रण्णो वअस्सभावेण णिव्विण्णो म्हि । अअं मओ अअं वराहो अअं सद्दूलो त्ति मज्झण्णे वि गिम्हविरलपाअवच्छाआसु वणराईसु आहिडीअदि अडवीदो अडवी । पत्तसंकरकसाआइं कडुआइं गिरिणईजलाइं पीअंति । अणिअदवेलं सुल्लमंसभूइट्ठो आहारो अण्हीअदि । तुरगाणुधावणकंडिदसंधिणो रत्तिम्मि वि णिकामं सइदव्वं णत्थि । तदो

---

**तत इति** । विषण्णत्वे हेतुर्वक्ष्यमाण । विदूषकलक्षणं तु **सुधाकरे**—'विकृताङ्गवचोवेषैर्हास्यकारी विदूषक·' इति । अस्य प्राकृतं पाठ्यम् । उक्तं च—'विदूषकविटादीनां पाठ्यं तु प्राकृतं भवेत्' इति । भो दृष्टमिति भिन्नं वाक्यम् । वाक्यार्थस्य कर्मत्वम् । एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन स्निग्धत्वेन । 'वयस्य· स्निग्ध· सवया·' इत्यमरः । निर्विण्णोऽस्मि दुःखितोऽस्मि । अयं मओ मृगः । 'ऋतोऽत्' इति ऋकारस्याकार· । **'मिओ'** इति पाठस्तु 'इत्कृपादौ वा' इति कृपादेराकृतिगणत्वात्साधुः । अयं वराहोऽयं शार्दूल इति मध्याह्नेऽपि ग्रीष्मविरलपादपच्छायासु वनराजिष्वाहिण्ड्यतेऽटवीतोऽटवी । 'अटव्यरण्यं विपिनम्' इत्यमरः । 'आहिडीअदि' इत्यत्र यक· 'ईअइज्जो वयस्' इति ईअआदेशे तप्रत्ययस्य 'त्यादीनामाद्यत्रयस्याद्यस्येचेचौ' इति इचादेशे 'दि·' इत्यनुवर्तमाने 'अतो दिश्च' इति दिरादेश । अटवीमिति 'सप्तम्या द्वितीया' इति सूत्रे 'प्रथमाया अपि' इति वार्तिकम् । तेन प्रथमार्थे द्वितीया । पत्राणा संकरो भिन्नजातीयानामेकत्र पतनं, तेन कषायाण्यत एव कटूनि । क· स्वार्थे, 'स्वार्थे कश्च वा' इति सूत्रेण । गिरिनदीजलानि पीयन्ते । 'पीअंति' इत्यत्र 'बहुष्वाद्यस्य न्ति न्ते इरे' इति न्यादेश । अन्यत्समम् । **'कदुण्हाइं'** इति पाठे कदुष्णानि, ईषदुष्णानीत्यर्थ· । अनियतवेलं विषमसमयम् । सुल्लमंसभूइट्ठो शूल्यमासभूयिष्ठः । लोहशलाकया मास संप्रथ्य यत्पच्यते तच्छूल्यमांसम् । 'शूलाकृतं भटित्रं स्याच्छूल्यम्' इत्यमरः । आहारः । अण्हीअदि भुज्यते । 'अण्हीअदि' इत्यत्र 'भुजो भुंजजिमजेमकम्माणण्हसमाण—' इत्यण्हादेशः । शेषं समानम् । तुरगानुधावनेन

महंते एव्व पच्चूसे दासीए-पुत्तेहिं सउणिलुद्धएहिं वणग्गहणकोलाहलेण पडिबोधिदो म्हि । एत्तएण दाणि वि पीडा ण णिक्कमदि । तदो [1]गंडस्स उवरि पिडओ संवुत्तो । हिओ किल अम्हेसु ओहीणेसु तत्तहोदो मआणुसारेण अस्समपदं पविट्ठस्स तावसकण्णआ सउदला मम अधण्णदाए दंसिदा । संपदं णअरगमणस्स मणं कहं वि ण करेदि । अज्ज वि से तं एव्व चिंतअंतस्स अक्खीसु पभादं आसि । का गदी ? जाव णं किदाचारपरिक्कमं पेक्खामि । ( इति परिक्रम्यावलोक्य च ) एसो बाणासणहत्थाहिं जवणीहिं वणपुप्फमालाधारिणीहिं पडिवुदो इदो एव्व आअच्छदि पिअवअस्सो । होदु; अंगभंगविअलो विअ भविअ चिट्ठिस्सं । जइ एव्वं वि णाम विस्समं लहेअं ।] [ भो ! दृष्टम् । एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन निर्विण्णोऽस्मि । अयं मृगोऽयं वराहोऽयं शार्दूल इति मध्याह्नेऽपि ग्रीष्मविरलपादपच्छायासु वनराजीष्वाहिण्ड्यतेऽटवीतोऽटवी । पत्रसंकरकषायाणि कटूनि गिरिनदीजलानि पीयन्ते । अनियत-

---

कण्डितसंधे· कुड्डिताङ्गसंधेः रात्रावपि निकाममत्यर्थं मे शयितव्यं नास्ति । ततो महत्येव प्रत्यूषेऽतिप्रातर्दास्या -पुत्रै । तस्योद्वेगदायित्वाद्गालिप्रदानम् । शकुनिलुब्धकैः पक्षिव्याधै । 'व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः' इत्यमरः । वनग्रहणेऽरण्यवेष्टने य कोलाहलस्तेन प्रतिबोधितोऽस्मि । एतावता कालेनेदानीमधुना पीडा न निष्क्रामति नापगच्छति । ततो गण्डस्योपरि पिटकः सवृत्त । अयमाभाणक । स्फोटस्योपरि स्फोट इत्यर्थ· । प्रकृते त्वेकस्मिन्दुःखकारणे सत्येव द्वितीयं दु.खकारणमित्यर्थ । तदेवाह—ह्यः पूर्वदिने किल । 'ह्यो गतेऽह्नि' इत्यमरः । अस्मास्ववहीनेषु पश्चात्स्थितेषु तत्तहोदो तत्रभवतो मृगानुसारेणाश्रमपदमाश्रमस्थानं प्रविष्टस्य तापसकन्यका शकुन्तला ममाधन्यतया दर्शिता । 'तत्रभवतः' इत्यत्र 'सर्वत्र लवराम्–' इति रलोपे 'अनादौ शेष–' इति द्वित्वे तत्तेति सिद्धम् । 'भुवेर्होहुवहवाः' इति भुवतेर्होआदेश. । 'अतो डो विसर्गस्य' इति डोकारे टिलोपे 'होतो' इति । तत 'कगच–' इति तलोपे प्राप्ते शौरसेनीत्वात् 'तोदोऽनादौ शौरसेन्याम्' इति तस्य दः । तेन 'तत्तहोदे' इति सिद्धम् । साम्प्रतं नगरगमनस्य नगरगमनाय । 'चतुर्थ्या· षष्ठी' इति षष्ठी । मनः कथमपि न क'ोति । अद्यापि तस्य तामेव चिन्तयतोऽक्ष्णोः प्रभातमासीत् । चिन्तनेन सुखम्, निद्राच्छेदेन दु.खमिति । अनेन विधानं नामाङ्गमुपक्षिप्तम् ।

---

पाठा०–१ 'गंडस्स उवरि पिंडिआ संवुत्ता.'

केवलं शूल्यमांसभूयिष्ठ आहारो भुज्यते । तुरगानुधावनकण्डितसंधे रात्रावपि निकामं शयितव्यं नास्ति । ततो महत्येव प्रत्यूषे दास्याः-पुत्रैः शकुनिलुब्धकैर्वनग्रहणकोलाहलेन प्रतिबोधितोऽस्मि । इयतेदानीमपि पीडा न निष्क्रामति । ततो गण्डस्योपरि पिटकः संवृत्तः । ह्यः किलास्मास्ववहीनेषु तत्रभवतो मृगानुसारेणाश्रमपदं प्रविष्टस्य तापसकन्यका शकुन्तला ममाधन्यतया दर्शिता । सांप्रतं नगरगमनस्य मनः कथमपि न करोति । अद्यापि तस्य तामेव चिन्तयतोऽक्ष्णोः प्रभातमासीत् । का गतिः ? यावत्तं कृताचारपरिक्रमं पश्यामि । एष बाणासनहस्ताभिर्यवनीभिर्वनपुष्पमालाधारिणीभिः परिवृत इत एवागच्छति प्रियवयस्यः । भवतु, अङ्गभङ्गविकल इव भूत्वा स्थास्यामि । यद्येवमपि नाम विश्रामं लभेय । ] ( इति दण्डकाष्ठमवलम्ब्य स्थितः )

( ततः प्रविशति यथानिर्दिष्टपरिवारो राजा )

**राजा**—( आत्मगतम् )

**कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनायासि ।**
**अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥ १ ॥**

---

तल्लक्षणं तु—'सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतम्' इति । का गदी ? का गतिः ? । यावत्तं कृताचारपरिक्रमं कृत आचारस्य स्नानादेः परितः क्रमो येन तं पश्यामि । एष बाणासनं धनुर्हस्ते यासा ताभिर्वनपुष्पमालाधारिणीभिरिति मृगयावेषसूचनम् । यवनीभिः परिवृत इत एवागच्छति प्रियवयस्य· प्रियसखः । 'वक्रादावन्तः' इति सूत्रेणानुस्वारागमे 'वयंस' इति रूपम् । बहुलाधिकाराद्यलोपद्वित्वयोः 'वअस्स' इत्यपि । भवतु, अङ्गभङ्गविकल इव भूत्वा स्थास्यामि । यद्येवमपि नाम विश्रामं लभेय । अत्र यवन्यो नाम संचारिकापर्याय । तल्लक्षणं **मातृगुप्ताचार्यै**रुक्तम्—'गृहकक्षाविचारिण्यस्तथोपवनसंचरा । यामेषु च नियुक्ताना यामशुद्धिविशारदाः ॥ सचारिकास्तु ता ज्ञेया यवन्योऽपि मता क्वचित्' इति । यथानिर्दिष्टपरिवारः, यवनीवृत इत्यर्थ· । **काममिति** । सा काममत्यर्थं प्रिया, प्रियतमेत्यर्थ· । तर्हि सम्यगेव । न सम्यगित्याह—यतो न सुलभा प्राप्या, किंतु सुखेन लभ्या । तर्हि दुष्प्रापे वस्तुनि प्रयत्नेनापि किमित्याशङ्कायामाह—**मन इति** । तु इति शङ्कोच्छेदे । मनस्तस्या नायिकाया भावाश्चेष्टास्तासा दर्शन आयासि सखेदं, प्रयत्नपूर्वकं लालसमित्यर्थ· । स्यात्त्वदुक्तं यदि पूर्वमभिलाषो न जातः स्यादित्याशयः । **अकृतेति** । मनसिजेऽकृतार्थेऽप्युभयप्रार्थना स्वस्याभिलाषो रतिं

---

**पाठा०—१ 'तद्भावदर्शनाश्वासि'.**

( स्मितं कृत्वा ) एवमात्माभिप्रायसंभावितेष्टजनचित्तवृत्तिः प्रार्थयिता विडम्ब्यते[1] ।

**स्निग्धं वीक्षितमन्यतोऽपि नयने यत्प्रेषयन्त्या[2] तया**
**यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव ।**

---

रागं यतः । कुरुते प्रीतिमुत्पादयति । अहं तत्र गमिष्यामि, तामेवं वक्ष्य इत्यात्माभिलाषः । एवं प्रति मा तस्या अप्यभिलाषो मनसिजेऽकृतार्थे संभवति । जातरत्योः संभवतीत्यर्थः । अत्राकृतार्थेऽप्यजातरत्योरपीति 'अपि'शब्दार्थः । तेनैतदुक्तं भवति— यथा मन्मनसस्तद्भावदर्शनलालसत्वं कार्यं समर्थ्यते । तेनार्थान्तरन्यास । उक्तं च **राजानकरुय्यकेन** ( अलं स )—'सामान्यविशेषकार्यकारणभावाभ्यां निर्दिष्टं प्रकृतसमर्थनमर्थान्तरन्यास ' इति । स च हिशब्दोपादानानुपादानाभ्या द्विधेत्युक्त । अत्र च हिशब्दानुपादाने बोद्धव्यः । उद्भटादिमते सामान्यविशेषभाव एवार्थान्तरन्यासाङ्गीकारादत्र काव्यलिङ्गमेव । येषा मते कार्यकारणभावेऽर्थान्तरन्यासस्तेषा मत एतद्व्यतिरिक्तविषयत्वं काव्यलिङ्गस्येत्यवधेयम् । अथ च मनसिजः कन्दर्पोऽकृतार्थः । रतिः कामभार्या चेति विरोधः । व्याख्यातप्रीतिपर्यायत्वेन विरोधाभास । 'रतिः कामस्त्रियां रागे सुरतेऽपि रतिः स्मृता' इति धरणि. । श्रुत्यनुप्रासश्च । अनेन पूर्वानुरागविप्रलम्भाद्यभिलाषो नामावस्थोक्ता । तल्लक्षणं तु **सुधाकरे**—'सगमोपायरचिता प्रारब्धाध्यवसायत । सकल्पेच्छासमुद्भूतिरभिलाष इतीरित ॥' इति । 'अद्यापि तस्य तामेव चिन्तयत ' इति विदूषकवचसा चिन्तोपनिबद्धा । तल्लक्षणं तु—'केनोपायेन ससिध्येत्कदा कुत्र समागम । का चेयं किस्वभावा च चिन्तनं तदुदीरितम् ॥' इति । न च पूर्वापरविपर्ययः शङ्कनीय, वाक्यद्वयस्याप्यनुवाद्यत्वात् । **स्मितं कृत्वेति** । अलीकेऽपि सत्यबुद्धि कामिनामिति भावः । तदेव प्रकटयति—**एवमिति** । आत्माभिप्रायेण स्वाभिप्रायेण सभाविता संभावनया नीता, कल्पितेति यावत् । इष्टजनस्य प्रार्थ्यजनस्य चित्तवृत्तिर्येन स प्रार्थयिता कामी विडम्ब्यत इति कर्मकर्तरि । उपहासास्पदं भवतीत्यर्थ । विशेषे प्रस्तुते सामान्योक्तेरप्रस्तुतप्रशंसा । तेन पूर्वोक्तोऽभिलाषो मन्मनस्थ एव, मत्कल्पितस्तु तस्या प्रतिभातीति प्रकृते पर्यवसानम् । तदेव विशिष्य दर्शयति—**स्निग्धमिति** । अन्यतोऽपि निर्लक्ष्यमेव.। अत एव नयने प्रेषयन्त्या तया यद्विलासादिव स्निग्धं वीक्षितं स्निग्धदृष्ट्याऽवलोकितमिति विशिष्ट विधेयम् । साभिलाषं व्याजावलोकनं कृतमिति भाव. । स्निग्धदृष्टिलक्षणं यथा—'विकाशिस्निग्धमधुरा चतुरे बिभ्रती भ्रुवौ । कटा-

---

पाठा०—१ 'विप्रलभ्यते'. २ 'यत्प्रेरयन्त्या तया'.

**मा गा इत्युपरुद्धया यदपि सा[1] सासूयमुक्ता सखी**
**सर्वं तत्किल मत्परायणमहो कामी[2] स्वतां पश्यति ॥ २ ॥**

**विदूषकः**—( तथास्थित एव ) भो वअस्स ! ण मे हत्थपाआ[3] पसरंति । वाआमेत्तएण जीआवइस्सं । [ भो वयस्य ! न मे हस्तपादं प्रसरति । वाङ्मात्रेण जापयिष्यामि । ]

**राजा**—( सस्मितम् ) कुतोऽयं गात्रोपघातः ? ।

**विदूषकः**—कुंदो[4] किल सअं अच्छी आउलीकरिअ अस्सुकारणं पुच्छेसि ? । [ कुतः किल स्वयमक्ष्याकुलीकृत्याश्रुकारणं पृच्छसि ? । ]

**राजा**—न खल्ववगच्छामि ?

---

क्षिणी साभिलाषा दृष्टि· स्निग्धाभिधीयते ॥' इति । नितम्बयोर्गुरुतया विलासादिव यच्च मन्दं यातम्, विलम्बो भवत्विनीति भाव । 'नितम्बयो ' इति द्विवचनेन मध्यनिम्नतागौरवाद्याधिक्यं यौवनोज्जृम्भणं च ध्वनितम् । 'मा गा ' इत्युपरुद्धया तया साविप्रियतरा हृदयरूपा सखी विलासादिव यदपि सासूयं सेर्ष्यमुक्ता । तत्र स्थित्यर्थमिति भावः । अपि समुच्चयार्थे । सर्वं स्निग्धवीक्षणमन्दगमनसेर्ष्यवचनादि मत्परायणम् । व्याख्यातप्रकारेणार्थान्तरन्यासमाह—अहो आश्चर्ये । कामी स्वतामात्मीयतां सर्वत्र स्वाभिप्रायरूपता पश्यतीत्यर्थ । 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रिया धने' इत्यमर· । विलासादिवेत्युत्प्रेक्षा । तेन सभाव्यमानत्वात् । विलासलक्षणं तु—'यो वल्लभासङ्गतो विकारो गत्यासनस्थानविलोकनादौ' इत्यादि पूर्वोक्तमेव । मध्यकारकदीपकालंकार । हेतुस्वभावोक्ती च नयनेयेति यन्त्यायातमिति तयातयेति छेकानुप्रासः । नयनेयेति यतोयदिति यातयेति तस्यैवैकवाचकानुप्रवेशलक्षण सकर· । स एव वृत्त्यनुप्रासेनापि पूर्वार्धे । उत्तरार्धे तु वृत्त्यनुप्रास· । शार्दूलविक्रीडितं वृत्तम् । 'विदूषकेण वक्तव्यो वयस्येति च भूपति ' इत्युक्तेर्वयस्येति सबुद्धि । न मे हस्तपादं प्रसरति । वाङ्मात्रेण जापयिष्यामि, जय इति शब्दमुच्चरिष्यामीत्यर्थ· । वाङ्मात्रेणेति हस्तोत्क्षेपणासामर्थ्यमुक्तम् । कुत किल स्वयमक्ष्याकुलीकृत्याश्रुकारणं पृच्छसि ? कुत· पृच्छ-

---

**पाठा०—१ 'तत्सासूय°'. २ 'कामः'. ३ 'हत्थो पस्सरदि' ४ 'कधं कुदो त्ति ? सअं जेव अच्छी भंजिअ अस्सु°'.**

**विदूषकः**—भो वअस्स ! जं वेदसो खुज्जलीलं विडंबेदि तं किं अत्तणो पहावेण णं णईवेअस्स ? । [भो वयस्य ! यद्वेतसः कुब्जलीलां विडम्बयति, तत्किमात्मनः प्रभावेण ननु नदीवेगस्य ? ।]

**राजा**—नदीवेगस्तत्र कारणम् ।

**विदूषकः**—मम वि भवं । [ममापि भवान् ।]

**राजा**—कथमिव ? ।

**विदूषकः**—एव्वं राअकज्जाणि उज्झिअ तारिसे आउलप्पदेसे वणचरवुत्तिणा तुए होदव्वं । जं सच्चं पच्चहं सावदसमुच्छारणेहिं संखोहिअसंधिबंधाणं मम गत्ताणं अणीसो म्हि संवुत्तो । ता पसादइस्सं विसज्जिदुं मं एक्काहं वि दाव विस्समिदुं । [एवं राजकार्याण्युज्झित्वा तादृश आकुलप्रदेशे वनचरवृत्तिना त्वया भवितव्यम् । यत्सत्यं प्रत्यहं श्वापदसमुत्सारणैः संक्षोभितसंधिबन्धानां मम गात्राणामनीशोऽस्मि संवृत्तः । तत्प्रसादयिष्यामि विसर्जितुं मामेकाहमपि तावद्विश्रमितुम् ।]

---

सीति संबन्ध । अवगच्छामि जानामि । यद्वेतसो वृक्षविशेषः कुब्जलीला विडम्बयत्यनुकरोति तत्किमात्मन प्रभावेण सामर्थ्येन ? । किमिति प्रश्ने । णं ननु परमताक्षेपे । नदीवेगस्य । 'प्रभावेण' इत्यनुषज्यते । 'नन्विति परमताक्षेपानुज्ञैषणापृष्टप्रतिवचनेषु' इति **दण्डनाथः** । एतेन त्वयैवेदं कृतमिति भावः । दृष्टान्तालंकारः । प्रकृते निगमयति—**एवमिति** । एवं राजकार्याण्युज्झित्वा तादृशे मनुष्यदु सचार आकुलप्रदेशे श्वापदाकुलस्थाने वनचरवृत्तिना त्वया भवितव्यम्, अद्याप्याखेटापरित्यागादिति भाव । यत्सत्य प्रत्यहं श्वापदसमुत्सारणैः संक्षोभितसंधिबन्धाना मम गात्राणामहमनीश सवृत्तोऽस्मि, मम गात्राणि ममैव न भवन्तीत्यर्थ. । यद्यस्मात्सत्यं संवृत्तोऽस्मीति सबन्ध । ता तस्मात् । 'शौरसेन्याम्' इत्यनुवृत्तौ 'तस्मात्ता' इति सूत्रेण ता आदेश । प्रसादयिष्यामि विस-

---

पाठा०-१ 'जुत्तं णाम एदं जं तए रज्जकज्जाइं तादिसं च अवखलिदपदं पदेसं उज्झिअ वणचरवित्तिणा भविदव्वं ति । किं एत्थ मंतीअदु ? अहं उण बम्हणो पचहं सावदाणुसरणेहिं संखोहिदसंधिबंधणाणं अत्तणो अंगाणं अणीसो म्हि । ता'.

**राजा**—( स्वगतम् ) अयं चैवमाह—[1]ममापि काश्यपसुतामनुस्मृत्य [2]मृगयाविक्लवं चेतः । कुतः ?

**न नमयितुमधिज्यमस्मि शक्तो**
**धनुरिदमाहितसायकं मृगेषु ।**
**सहवसतिमुपेत्य यैः प्रियायाः**
**कृत [3]इव मुग्धविलोकितोपदेशः ॥ ३ ॥**

**विदूषकः**—( राज्ञो मुखं विलोक्य ) [4]अत्तभवं किं वि हिअए करिअ मंतेदि । अरण्णे मए रुदिअं आसि । [ अत्रभवान् किमपि हृदये कृत्वा मन्त्रयते । अरण्ये मया रुदितमासीत् । ]

---

र्जितुं मामेकाहमपि तावद्विश्रमितुम् । काश्यपसुता शकुन्तलाम् । अनेन किमप्याभिजात्यं ध्वनयति । तथा तामित्येव ब्रूयात् । मृगयाया विक्लवं विह्वलम्, विरक्तमिति यावत् । अथ च मृगयेति स्त्रीलिङ्गनिर्देशादन्याङ्गनासक्तौ पूर्वाङ्गनाया विरक्तत्वमुचितमिति दर्शितम् । **न नमयितुमिति ।** तेषु मृगेषु मृगविषयेऽधिज्यमारोपितज्यमाहितसायकं सधितबाणमिदं प्रत्यक्षेण परिदृश्यमानं धनुर्नमयितुं कर्णान्तमाकृष्टुं न शक्तोऽस्मि । त्रयमपि विधेयम् । अत एव नार्थपौनरुक्त्यम् । यैर्मृगैः सहवसतिमेकत्र वासमुपेत्य प्राप्य प्रियायाः शकुन्तलाया मुग्धानि स्वभावसुन्दराणि । अथ च बालत्वाद्ब्रह्मचारित्वाच्चानधिगतहावभावानि विलोकितानि विलोकनानि तेषामुपदेशः कृत इवेत्युत्प्रेक्षा । अज्ञानज्ञापनमुपदेशः । सामान्यविशेषणसंबन्धेन विशेषं लक्षयन्ननायासेन तत्प्रतिपत्तिं ध्वनयति । उत्तरार्धार्थस्य शक्त्यभावे हेतुत्वेनोपात्तत्वात् काव्यलिङ्गम् । एतयोरङ्गाङ्गिभावः संकरः । अत्र चेतोविक्लवत्वे कारणे प्रस्तुते तत्कार्यस्य धनुरानमनादेरुक्तत्वात् पर्यायेणोक्तम्, नाप्रस्तुतप्रशंसा । यतोऽत्र कारणवत्कार्यमपि प्रकृतमेव । तद्वर्णनमात्रत्वेनाप्रस्तुतस्यैव कार्यस्य वर्णनमिति महान्भेदः । वृत्त्यनुप्रासेन सह श्रुत्यनुप्रासस्य संसृष्टिः । नरकादीनां षोडशवर्णानां दन्त्यानां सत्त्वाच्छुत्यनुप्रासः । पुष्पिताग्रा वृत्तम् ।

'एवमात्माभिप्राय-' इत्यादिनैतदन्तेनानुस्मृतिस्तृतीयावस्था सूचिता । तल्लक्षणं तु—'अर्थानामनुभूतानां देशकालानुवर्तिनाम् । सातत्येन परामर्शो मानसः स्यादनुस्मृतिः ॥ तत्रानुभावा निःश्वासः कृत्यनुत्साहचिन्तने ॥' इति । अत्रभवान् किमपि हृदये कृत्वा मन्त्रयते, अन्तःकरण एव किमपि जल्पतीत्यर्थः ।

---

**पाठा०**—१ 'ममापि कण्वसुता°'. २ 'मृगयां प्रति निरुत्सुकं चेतः, तथा हि-'. ३ 'इव लोचनकान्तिसंविभागः'. ४ 'अत्थभवं'.

**राजा**—(सस्मितम्) किमन्यत्? अनतिक्रमणीयं[1] मे सुहृद्वाक्यमिति स्थितोऽस्मि।

**विदूषकः**—[2]चिरं जीअ। [चिरं जीव।] (इति गन्तुमिच्छति)

**राजा**—वयस्य! तिष्ठ; सावशेषं मे वचः।

**विदूषकः**—आणवेदु भवं। [आज्ञापयतु भवान्।]

**राजा**—विश्रान्तेन भवता ममाप्यनायासे कर्मणि सहायेन भवितव्यम्।

**विदूषकः**—किं मोदअखंडिआए[3]? तेण हि अअं सुगहीदो खणो। [किं मोदकखण्डिकायाम्? तेन ह्ययं सुगृहीतः क्षणः।]

**राजा**—यत्र वक्ष्यामि। कः[4] कोऽत्र भोः?।

(प्रविश्य)

**दौवारिकः**—(प्रणम्य) आणवेदु भट्टा। [आज्ञापयतु भर्ता।]

**राजा**—रैवतक! सेनापतिस्तावदाहूयताम्।

**दौवारिकः**—तह। [तथा।] (इति निष्क्रम्य सेनापतिना सह पुनः प्रविश्य)

---

अरण्ये मए मया रुदितमासीत्। रुदितमिति भावे निष्ठा। त्वयि मद्विज्ञापनमरण्यरुदितवद्व्यर्थमित्यर्थः। त्वच्चित्तानुवर्तनं मया क्रियत इति विदूषकं प्रति ज्ञापनात् सस्मितमिति। किमन्यदिति भिन्नं वाक्यम्। आज्ञापयतु भवान्। किं मोदकखण्डिकायाम्? खण्डिका खण्ड, मोदकखण्ड इत्यर्थः। तेन ह्ययं सुगृहीतक्षणः, मोदकभक्षणं चेदमङ्गीकृतमित्यर्थः। 'नीचेषु प्राकृतं भवेत्' इत्युक्तेर्दौवारिकस्य प्राकृतं पाठ्यम्। आज्ञापयतु भर्ता। 'भट्टेति चाधमैः' इत्युक्तेः। रैवतकेति दौवारिकनाम। सेनापतिलक्षणमुक्तं **मातृगुप्ताचार्यैः**—'शीलवान्सत्त्वसपन्नस्त्यक्तालस्य प्रियंवदः। पररन्ध्रान्तराभिज्ञो यात्राकालविशेषवित्॥ अस्त्रशस्त्रादितत्त्वज्ञो लोके चाक्रम(वक्र)ता गत। देशवित्कालविच्चैव भवेत्सेनापति-

---

**पाठा०—१ '°क्रमणीयं सुहृद्वाक्य°'. २ 'तेण हि चिरं मे'. ३ '°खंडिआए? राजा—यद्वक्ष्यामि'. ४ 'विदू०—गहदो क्षणो। राजा—कः'.**

एसो अण्णावअणुक्कंठो भट्टा इदो दिण्णदिट्ठी एव्व चिट्ठदि । उवसप्पदु अज्जो । [ एष आज्ञावचनोत्कण्ठो भर्ता इतो दत्तदृष्टिरेव तिष्ठति । उपसर्पत्वार्यः । ]

**सेनापतिः**—( राजानमवलोक्य ) दृष्टदोषापि स्वामिनि मृगया केवलं गुण एव संवृत्ता । तथा हि देवः,—

> **अनवरतधनुर्ज्यास्फालनक्रूरपूर्वं**
> **रविकिरणसहिष्णु स्वेदलेशैरभिन्नम् ।**
> **अपचितमपि गात्रं व्यायतत्वादलक्ष्यं**
> **गिरिचर इव नागः प्राणसारं बिभर्ति ॥ ४ ॥**

( उपेत्य ) जयतु स्वामी; गृहीतश्वापदमरण्यम् । किमन्यत्रावस्थीयते ? ।

---

गुणैः' इति । आज्ञाया वचने दान उत्कण्ठा यस्य सः । आज्ञाया वचनायोन्नत कण्ठ उन्नमिता ग्रीवा यस्य सः । भर्तेतो दत्तदृष्टिरेव तिष्ठति । उपसर्पत्वार्य । अस्यापि संस्कृतं पाठ्यम् । तथा पूर्वमुक्त. । गुण एवेति व्यस्तरूपकम् । 'देवः स्वामीति नृपतिर्भृत्यै.' इत्युक्तेर्देवेत्युक्ति । **अनवरतेति** । गिरिचरः पर्वतचरो नागो हस्तीव देवो राजा । प्रकरणाद्देवशब्दो राजवाचक । प्राणो बलमेव सारः स्थिरांशो यत्र तत् । 'प्राणोऽनिले बले' इति हैम. । 'सारो बले स्थिरांशे च' इत्यमरः । गात्रं वपुर्बिभर्ति । 'गात्रं वपु संहननम्' इत्यमरः । 'गिरिचर'पदेन स्वातन्त्र्यं सूचितम् । कीदृक् ? अनवरतं निरन्तरं यद्धनुर्ज्याया आस्फालनं तेन क्रूर. कठिनः पूर्वं पूर्वभागो यस्य तत् । 'क्रूर भयंकर ज्ञेयं क्रूरौ कठिन-निर्दयौ' इति धरणि । अनेन दनुजास्त्रप्रहारक्षमं बलं ध्वन्यते । रविकिरण-सहिष्णु, आतपेऽप्यक्लान्तमित्यर्थ । अनेन दु.खसहिष्णुत्वम् । स्वेदलेशैरभिन्नम्, स्वेदैस्तु न मिश्रं तल्लेशैरपि न सबद्धमित्यर्थ । अनेन श्रमजयित्वम् । अपचितं कृशमपि व्यायतत्वात्प्रकाण्डत्वादलक्ष्यम्, कृशत्वेन न लक्ष्यत इत्यर्थः । अनेन महा-पुरुषचिह्नं शालप्रांशुत्वादि । हस्तिगात्रपक्षेऽपि विशेषणानि योज्यानि । अनवरतं धनुर्ज्याया प्रियालद्रुमभूमौ यदास्फालनमर्थात्प्रियालद्रुमाणामेव तेन कठिनपूर्व-भागम् । 'धनुःसंज्ञा प्रियालद्रौ राशिभेदे शरासने' इति विश्व. । 'ज्या मौर्वी च वसुंधरा' इति धरणिः । अन्यानि विशेषणानि स्पष्टानि । वररवि णसणसेति च्छेकवृत्तिश्रुत्यनुप्रासाः । परिकरालंकारः, श्लेषः, उपमा च । मालिनी वृत्तम् ।

---

**पाठा०—१ 'आलावदिण्णकंठो'. २ 'णं अज्जो'. ३ 'कथं दृष्ट°'. ४ 'गुणा-यैव संवृत्ता'. ५ '°क्रूरकर्मा'. ६ '°सहिष्णुः.. रभिन्नः'. ७ 'जयति जयति स्वामी ! गृहीतमृगप्रचारसूचितश्वापदमरण्यम् । तत्किमन्यदनुष्ठीयतां ?'.**

**राजा**—मन्दोत्साहः कृतोऽस्मि मृगयापवादिना माढव्येन ।

**सेनापतिः**—(जनान्तिकम्) सखे! स्थिरप्रतिबन्धो भव । अहं तावत्स्वामिनश्चित्तवृत्तिमनुवर्तिष्ये । (प्रकाशम्) प्रलपत्वेष वैधवेयः । ननु प्रभुरेव निदर्शनम्,—

**मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः**
**सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।**

---

ननु 'धनुर्ज्या'शब्देनैव गतार्थत्वादर्थपौनरुक्त्यमिति चेन्न । 'धनुर्ज्याध्वनौ धनुःप्रतीतिरारूढेः प्रतिपत्त्यै' इति (काव्या सू ५।२।१३) **वामनोक्तेः** । आरूढप्रतीतिरास्फालनशब्देनैव जातेति दोषस्तदवस्थ एवेति चेन्न । भिन्नपदेन व्याख्यानात् । कीदृग्गात्रम्? न नवमनवं रतं सबद्धं धनुर्यत्र तत् । सर्वदासन्नधनुरित्यर्थः । द्वितीयेऽनवं च तत्सबद्धप्रियालु चेति योज्यम् । 'शिखरिचरकरीव प्राणसारम्' इति पठित्वा प्रयोगनियमभङ्ग परिहर्तव्यः । यतस्त इवादयो यत्पुर श्रूयन्ते तस्यैवोपमानत्वं कल्पयन्ति । अथवा विशेषणात्प्रयुक्ता नोपमानबुद्धि तत्र जनयन्त्यसभवात् । ततो विशेष्य एव पर्यवसानादिति यथास्थितमेव चारु । एतच्चोपमानप्रपञ्चे मया सुनिरूपितम् । अनेन पद्येनाग्रिमेण 'मेद' इत्यादिना च वीथ्यङ्गं मृदवं नामोपक्षिप्तम् । तल्लक्षणम्—'दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत्' इति । यद्यप्येषामानुरथा (न्युरवा) नुषङ्गत्वमुक्तं तथाप्यभिनवभारत्यामाचार्याभिनवगुप्तपादैः प्रथमसंध्युपलक्षणत्वं द्वादशानामुक्तम् । तथैवोदाहृतं धनिकेन । अत एव च त्रिगत लक्षणे **धनिकः**—'नटादित्रितयालाप पूर्वरङ्गे तदिष्यते' इति योज्यम् । क्वचित् **'किमत्रावस्थीयते'** इति पाठः । क्वचित् **'किमन्यदवस्थीयते'** इति पाठः । तदैकवाक्यम् । अद्य किमवसन्नं कर्तव्यम्? किमप्यस्तीत्यर्थः । **मन्दोत्साह** इति । अर्थान्मृगयायाम् । मृगयापवादिना आखेटकनिन्दकेन । 'अपवादौ तु निन्दाज्ञे' इत्यमरः । माढव्येन विदूषकेण । स्थिरः प्रतिबन्धो मृगयाप्रतिबन्धो यस्य सः । क्वचित् **'वैधेयः'** इति पाठः । स श्रेयान्, मूर्ख इत्यर्थः । 'अज्ञे मूढयथाजातमूर्खवैधेयबालिशा' इत्यमरः । तेनायमर्थः—असौ मूर्खः प्रलपतु, मृगयापवादं वदत्वित्यर्थ । ननु प्रभुरेव निदर्शनम् । मृगयागुणवत्त्वे 'अनवरत—' इति पूर्वमुक्तेस्तमेवार्थमप्रस्तुतप्रशंसया समर्थयते—**मेद इति** । मेदसो वसायाश्छेदेनाल्पीभावेन कृशमुदरं यस्य तत् । अतो लघु । तत एवोत्थानयोग्यमुद्योगयोग्यम् । 'उद्योगे च तथोत्थानम्' इति धरणि. । सत्त्वाना जन्तूनाम् । 'सत्त्वमस्त्री तु जन्तुषु' इत्यमरः । भयक्रोधयोर्निमित्तयोर्विकृतिमद्विकारयुक्तं चित्तं लक्ष्यते । अपिः पूर्ववाक्यसमु-

---

**पाठा०**—१ 'भद्रसेन! भग्नोत्साहः...माधव्येन'. २ 'दृढप्रतिज्ञो'. ३ 'प्रलपत्वेष वैधेयः'. ४ 'भवत्युत्साहयोग्यं'.

उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ? ॥ ५ ॥

**विदूषकः**—[1]अत्तभवं पकिदिं आपण्णो । तुमं दाव अडवीदो अडवीं आहिंडंतो णरणासिआलोलुवस्स जिण्णरिच्छस्स कस्स वि मुहे पडिस्ससि । [अत्रभवान्प्रकृतिमापन्नः । त्वं तावदटवीतोऽटवीमाहिण्डमानो नरनासिकालोलुपस्य जीर्णऋक्षस्य कस्यापि मुखे पतिष्यसि ।]

**राजा**—[2]भद्र सेनापते ! आश्रमसंनिकृष्टे स्थिताः स्मः । अतस्ते वचो नाभिनन्दामि । अद्य तावत्,—

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
[3]विश्रब्धं क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥ ६ ॥

त्वये । भये जन्तोरीदृशं चित्तम्, क्रोधे चेदृगिति ज्ञायत इत्यर्थः । स च धन्विनां धानुष्काणामुत्कर्षः । यच्चले चञ्चले लक्ष्य इषवो बाणाः सिध्यन्ति चञ्चललक्ष्यवेधका भवन्ति चेति । चः समुच्चये । तेन क्रियासमुच्चयालंकारः । ईदृग्विनोदः कौतुकं कुतः कुत्र ? न कुत्रापीत्यर्थः । अथ चेदृग्विनोदः कुतः ? क इत्यर्थः । सार्वविभक्तिकस्तसिल् । मृगयाया व्यसनत्वाभावे पूर्ववाक्यं हेतुत्वेनोपात्तमिति काव्यलिङ्गम् । वृत्त्यनुप्रासश्च । शार्दूलविक्रीडितं वृत्तम् । 'जयति स्वामी' इत्यादिनैतदन्तेन दाक्षिण्यं नाम भूषणमुपक्षिप्तम् । तल्लक्षणम्—'चित्तानुवर्तनं यत्र तद्दाक्षिण्यमितीरितम्' इति । अत्रभवान्प्रकृति स्वभावमापन्नः प्राप्तः । त्वं तावदटवीतोऽटवीमाहिण्डमानो नरनासिकालोलुपस्येति स्वभावोक्तिः । जीर्णऋक्षस्य वृद्धभल्लूकस्य कस्यापि मुखे पडिस्ससि पतिष्यसि । 'आशंसाया भूतवच्च' इति चकाराद्वर्तमानवच्चेत्याशंसाया वर्तमानवत्प्रत्ययः । अद्य तावदिति श्लोकशेषः । **गाहन्तामिति** । महिषाः शृङ्गैर्मुहुर्वारंवारं ताडितमुत्फालितं निपानसलिलमाहावजलं गाहन्तामालोडयन्तु । अनेन त्रासाभावात्प्रकृतिप्रत्यासत्तौ शृङ्गाभ्यां पर्यायेण जलताडनं महिषजातिरुक्ता । एवमग्रिमयोरपि जातिकथनमुन्नेयम् । 'आहावस्तु निपानं स्यादुपकूपजलाशये' इत्यमरः । छायायां बद्धं

---

**पाठा०**—१ 'अवहिरे उच्छाहहेतुअ ।'; 'पइदिं आवण्णो'. २ 'भद्रसेन ! आश्रमसंनिकृष्टे स्थितोऽस्मीति वचस्ते नाभिनन्दामि'. ३ 'विस्रब्धैः'.

कदम्बकं समूहो येन तन्मृगकुलं रोमन्थमुद्रिलितकवलचर्वणमभ्यस्यत्वित्यनेन परस्परवार्तानभिज्ञाना पलायनपरायणाना रोमन्थोऽपरिचितचर इवासीत्तस्येदानी शिक्षाक्रमेण परिचयदार्ढ्यं भवत्वित्युक्तं भवति । कदम्बाना बहुत्वात्कुलमत्रान्यपदार्थ । वराहपतिभिः सूकरश्रेष्ठैरित्यनेन तादृशानामस्मन्मृगयासरम्भगोचरत्वमिति प्रकाश्यते । आपातशौण्डा· परिणतिभीरवो महिषा, स्वभावभीता मृगा, वराहास्तु परावृत्तिचतुरा· प्रकारकोविदाश्चेति श्रेष्ठत्वम् । विश्रब्धं साश्वास पल्वले । 'वेशन्त· पल्वलं चाल्पसर·' इत्यमरः । मुस्ताक्षति· मुस्तोत्खननं क्रियताम् । पूर्ववाक्ययोर्विश्वासमन्तरेण तादृशं विशिष्टं कर्म कर्तुमेव न शक्यत इति तत्र विश्वासोऽर्थायातः । अत्र तुरगवदाद्यन्त (दात्त) घासग्रासन्यायेनापि मुस्ताक्षति सभवतीति विश्रब्धमित्युपात्तम् । इदं नानाविधदानवसेनाविनाशित्वाद्यर्थान्तरसङ्क्रमितवाच्यम् । अस्मद्धनुश्च शिथिलज्यावन्धमवरोपितज्याबन्धं विश्रामं लभताम्, अव्यापार तिष्ठत्वित्यर्थ । अत्र राजवचनेनैव धनुष स्वसबन्धे ज्ञाते पुनरस्मादित्ववकररूपमिति ये मन्यन्ते तै पञ्चमीवहुवचनतया भिन्नपदत्वेन व्याख्येयम् । अस्मत्सकाशाद्विरतं भवत्वित्यर्थ । विश्रान्तेर्व्यापारविरामत्वादवधौ पञ्चमी । चकारेण चेदमस्मद्धनुरारूढमवतीर्णं वा तदैव सरम्भगोचराणा भयविस्रम्भाविति कोऽपि प्रकर्षो व्यज्यते । अत एवास्मदिति बहुवचनमपि सबीजम् । अन्ये तु राज्ञो नायिकावियोगेन दु खितस्यान्येषा तद्वियोगाद्दु·खं मा भवत्वित्यभिप्रायेणोक्तिरिति वदन्ति, तेषा महिष्यश्च महिषाश्चेत्येकशेषेण, मृग्यश्च मृगाश्चेत्येकशेषेण, अथवा 'कुलं जनपदे गृहे' इति कोशान्मृगमिथुनाक्षेपकेण 'कुल'शब्देन मुस्ताविश्रान्तिज्यानां नायिकात्वारोपवशेन क्षतौ नखदन्तक्षतारोपेण । 'आबन्धो दृढबन्धे स्यात्प्रेमालंकारयोरपि' इति कोशात् 'आबन्ध'शब्दस्य स्नेहार्थत्वेनेति व्याख्येयम् । श्रुतिवृत्त्यनुप्रासौ । स्वभावोक्तिः । पादत्रये क्रियासमुच्चय· सर्वेस्मिन्स्वस्याक्रियत्वादन्येषा नानाक्रियाजननाद्विरोधः । वस्तुस्वाभाव्यादाभासत्वं काव्यलिङ्गं व्यङ्ग्यम् । कार्यकारणयो· समकालत्वेनोक्तेरतिशयोक्तिश्च । वृत्तमनन्तरोक्तम् । अत्र केचन कारकप्रक्रमभङ्गभिया 'कुर्वन्त्वस्तभियो वराहपतयो मुस्ताक्षतिम्' इति पाठमपठन् । ननु कारकप्रक्रमभङ्गे परिहृते सति प्रक्रमभङ्गो नैव परिहृत इति चेत्,—मैवं वोच ; अनेन पाठेन सोऽपि परिहृत एव । यत· पूर्वमात्मनेपदं, पश्चात्परस्मैपदं, पुनः परस्मैपदं, पुनरात्मनेपदमित्यारोहावरोहरूप· क्रमोऽस्तु । किंच महिषादिविषयतया आशंसालक्षणोऽर्थोऽभिप्रेत· कवे· । स च निर्व्यूढ एव कविनेति नायं प्रक्रमभङ्गदोषस्य विषयः । यथा 'पृथ्वि ! स्थिरा भव भुजंगम ! धारयैना त्वं कूर्मराज ! तदिदं द्वितयं दधीथाः । दिक्कुञ्जराः ! कुरुत तत्त्रितये दिधीर्षां देवः करोति हरकार्मुकमाततज्यम् ॥' (बाल. रा. )—इत्यत्र । एवं वचनप्रक्रमभङ्गोऽपि परिहृतो भवति । पूर्वं बहुवचनं, पुनरेकवचनं, पुनर्बहुवचनं, पुनरेकवचनमित्येव क्रमः । विशे-

**सेनापतिः**—[1]यत्प्रभविष्णवे रोचते ।

**राजा**—तेन हि निवर्तय पूर्वगतान्[2]वनग्राहिणः । [3]यथा न मे सैनिकास्तपो[4]वनमुपरुन्धन्ति तथा निषेद्धव्याः । पश्य,—

**शमप्रधानेषु [5]तपोधनेषु**
**गूढं हि दाहात्मकमस्ति तेजः ।**

षणप्रक्रमभङ्गोऽपि 'घ्नन्तो विषाणैर्मुहुः' इति परिहृतो भवति । एवं पुंनपुंसककर्तृनिर्देशाल्लिङ्गप्रक्रमभङ्गोऽपि परिहृतः । न चात्र द्वितीयचरण इव कर्तृविशेषणकर्तृकर्मक्रियाक्रमेण निबन्धाभावात्क्रमप्रक्रमभङ्ग इति वाच्यम् । कर्त्रादिव्यस्तत्वस्य विधिवाक्य एव दुष्टत्वान्नानुवादवाक्ये । प्रकृतस्य चानुवादवाक्यत्वात् । विशेषणव्यस्तत्वस्यापि न दूषकत्वम् । तद्धि द्विविधम्—अन्तरङ्गं बहिरङ्गं च । तत्रोपसर्गनिपातरूपमन्तरङ्गम् । तेषां धातुनाम्नोः पूर्वं पश्चाच्च क्रमेण प्रयोगस्य नियतत्वात् । तत्र निपातरूपाणि विशेषणानि येष्वनन्तरं प्रयुज्यन्ते तेष्वेव विशेषमाधातुमलं नान्यत्र । तेनायथास्थाननिवेशिनो हि तेऽर्थान्तरमनभिमतमेव स्वोपरागेण रञ्जयेयुः । ततश्च प्रस्तुतार्थस्यासामञ्जस्यप्रसङ्गात्तद्दूषकत्वम् । बहिरङ्गं तु व्यवहितमपि स्वां शक्तिं विशेष्योपदधात्येवेति । तदुक्तं **महिमभट्टेन**—'विशेषणं हि द्विविधमान्तरं बाह्यमेव च । तत्राव्यवहितं सद्यदर्थकारि तदान्तरम् ॥ स्फटिकस्येव लाक्षादि द्वितीयमुभयात्मकम् । अयस्येव त्वयस्कान्तं तदपि द्विविधं मतम् ॥ असमानसमानाधिकरणत्वविभेदतः । विशेषोऽपि द्विधा ज्ञेयो धातूनामर्थभेदतः ॥ साध्यत्वार्थत्वभेदेन नाम्नोऽर्थोऽपि द्विधा मतः । तत्रोपसर्गाणां प्रायो धात्वर्थो विषयो मतः ॥ चादीनां तु निपातानामुभयं परिकीर्तितम् । केवलं हि विशेष्यात्स्युः पूर्वं पश्चाच्च ते क्रमात् ॥ विशेषणानामन्येषां पौर्वापर्यमयन्त्रितम् । अत एव व्यवहितैर्बुधा नेच्छन्ति चादिभिः ॥ संबन्धं ते हि शक्तिं स्वामुपदध्युरनन्तराः । सान्तरत्वे तु तां शक्तिमन्यत्रोपदधत्यमी । ततश्चार्थासामञ्जस्यादनौचित्यं प्रसज्यते ॥' इति । किंच रसप्रतीतिव्याहतिकृत्त्वं दोषत्वम्; न चात्र तदस्ति । सहृदयहृदयानां तत्प्रतीतेरव्याहतत्वात् । तथाह्यत्राभिलाषविप्रलम्भ एतत्प्रकरणव्यङ्ग्यस्तत्तृतीयानुस्मृत्यवस्थायाः कार्यानुत्पादलक्षणस्यानुभवस्यातिस्फुटत्वात् । 'विश्रामम्' इत्यपाणिनीयः पाठः । **'विश्रान्तिम्'** इति पठनीयम् । प्रभवति तच्छीलः प्रभविष्णुस्तस्मै राज्ञे । 'भुवश्च–' (पा. ३।२।१३८) इतीष्णुच् । **शमेति** । शमः शान्तिरेव प्रधानं येषां तेष्वत एव तप एव धनं येषां तेषु । दाहजनकं लक्षणया दाहस्वभावं शीघ्रकार्यकारित्वफलम् । गूढं गुप्तम् । अन्यजनादृश्यं तेजोऽस्ति ।

**पाठा०**—१ 'यथा प्रभ°'. २ '°धनुर्ग्राहिणः'. ३ 'यथा च सैनिका°'. ४ '°वनं नाभिरुन्धन्ति दूरात्परिहरन्ति च'. ५ 'तपोवनेषु'.

स्पर्शानुकूला इव सूर्यकान्ता-
स्तदन्यतेजोभिभवाद्वमन्ति ॥ ७ ॥

**सेनापतिः**—यदाज्ञापयति स्वामी ।

**विदूषकः**—धंसदु दे उच्छाहवुत्तंतो । [ध्वंसतां त उत्साहवृत्तान्तः ।]

(निष्क्रान्तः सेनापतिः)

**राजा**—(परिजनं विलोक्य) अपनयन्तु भवत्यो मृगयावेशम् । रैवतक ! त्वमपि स्वं नियोगमशून्यं कुरु ।

**परिजनः**—जं देवो आणवेदि । [यद्देव आज्ञापयति ।]

(इति निष्क्रान्तः)

**विदूषकः**—किदं भवदा णिम्मच्छिअं । संपदं एदस्सिं पादवच्छाआए विरइदलदाविदाणदंसणीआए आसणे णिसीददु भवं, जाव अहं वि सुहासीणो होमि । [कृतं भवता निर्मक्षिकम् । सांप्रतमेतस्यां

हि यस्मात्स्पर्शोऽनुकूलो येषा पदादिनाशकत्वात्ते सूर्यवत्कान्ता मनोहरास्ते तपस्विनः । अन्यस्य राजादेस्तेजसाभिभवः पराभवस्तस्मात्तत्स्वीयं तेजो वमन्ति प्रकटयन्ति । क इव ? । स्पर्शे सत्यदाहका सूर्यकान्ताः पाषाणविशेषा यथाऽन्यस्य सूर्यस्य तेजसोऽभितो भवो भवनं प्राप्तिः । संबन्ध इति यावत् । तेन स्वकीयं तेजः प्रकटयन्ति तथेत्यर्थः । श्लेषोपमा, अनुमानं, काव्यलिङ्गं च । धावनेऽस्ति तेजस्तेज इति छेकश्रुत्यनुप्रासौ । इन्द्रवज्रोपेन्द्रवज्रयोर्भवमुपजातिवृत्तम् । अत्र वमन्तीत्यश्लीलशङ्का न कार्या । यत्र स्ववाच्ये 'वान्त'शब्दः प्रयुज्यते तत्र दोषः । 'तेऽन्यैर्वान्ते समश्नन्ति' इत्यत्रोद्गिरणसबन्धात्प्राकट्यं लक्षयंस्तस्यावश्यकत्वं, प्राकट्ये चोपायसहस्रैरप्यप्रतीकार्यत्वमन्यविलक्षणत्वादिधर्मसहस्रं ध्वनयति । यथा 'वमद्भिरिवेक्षणैः' इत्यादिषु । तदुक्तं **काव्यादर्शे** (१।९५)—'निष्ठ्यूतोद्गीर्णवान्तादिगौणवृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यत्र ग्राम्यकक्षा विगाहते ॥' इत्यत्रापि तथैवोक्ते । ध्वंसता त उत्साहवृत्तान्तः । स्वं नियोगं द्वारस्थितिरूपम् । यद्देव आज्ञापयति । कृतं भवता निर्मक्षिकम्, जनराहित्यमित्यर्थः । सांप्रतमेतस्यां पादपच्छायाया विरचितेन लतावितानेन वल्लीचन्द्रातपेन दर्शनीयायां रमणीयाया-

**पाठा०**—१ '°स्ते ह्यन्यतेजोभिभवाद्दहन्ति'. २ 'यथा°'. ३ 'भो, उच्छाहइत्थआ णिक्कम णिक्कम'. ४ 'मृगयावेषमपनयन्तु भवन्तः'. ५ 'महाराजो'. ६ 'पादवच्छाआविरइदविदाणसणाधे'.

पादपच्छायायां विरचितलतावितानदर्शनीयायामासने निषीदतु भवान्, यावदहमपि सुखासीनो भवामि ।]

**राजा**—गच्छाग्रतः ।

**विदूषकः**—एदु भवं । [एतु भवान् ।]

(इत्युभौ परिक्रम्योपविष्टौ)

**राजा**—माढव्य ! अनवाप्तचक्षुःफलोऽसि । येन त्वया दर्शनीयं न दृष्टम् ।

**विदूषकः**—णं भवं अग्गदो मे वट्टदि । [ननु भवानग्रतो मे वर्तते ।]

---

मासने निषीदतु भवान्, यावदहमपि सुखासीनो भवामि । अहं तु कण्डितसधित्वेन क्षणमप्युपवेशनं विना स्थातुं न शक्नोमि । तवोपवेशनेन विना मम तदत्यन्तमनुचितमिति शीघ्रमुपविशेति भाव । एतु भवान् । 'राजा—माढव्य ! अनवाप्तचक्षुःफलोऽसि' इत्यारभ्य तृतीयाङ्कसमाप्तिपर्यन्तं प्रतिमुखसंधिः । तल्लक्षणं तु **सुधाकरे**—'बीजप्रकाशनं यत्र दृश्यादृश्यतया भवेत् । तत्स्यात्प्रतिमुखम्' इति । तत्र 'अज्जवि से तं एव्व चिंतअंतस्स अक्खीसु पभादं आसी' । 'विश्रान्तेन भवता ममाप्यनायासे कर्मणि सहायेन भवितव्यम्' इत्यनेन च विदूषकेण दृश्यस्य तत्सखीभ्यामदृश्यस्य च । **दशरूपके** ( १।३१ )—'बिन्दुप्रयत्नानुगमादङ्गान्यस्य त्रयोदश । विलासः परिसर्पश्च विधूतं शर्मनर्मणी ॥ नर्मद्युतिः प्रगमनं निरोधः पर्युपासनम् । वज्रं पुष्पमुपन्यासो वर्णसंहार इत्यपि ॥' इति । अङ्गलक्षणं तत्र तत्र व्याख्यानावसरे वक्ष्यामः । बिन्दु-प्रयत्नयोर्लक्षणे यथादि**भरते**—'प्रयोजनानां विच्छेदे यदविच्छेदकारणम् । यावत्समाप्तिं बन्धस्य स बिन्दुरिति संज्ञितः ॥' इति । यथात्र मृगयावृत्तान्तेन विच्छेदे सति । 'राजा—माढव्य ! अनवाप्तचक्षुःफलोऽसि' । 'तामाश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि' इत्यादिना । 'अपश्यतः फलप्राप्तिं यो व्यापारः फलं प्रति । परं चौत्सुक्यगमनं प्रयत्नः स प्रकीर्तितः ॥' इति । यथाऽत्र 'राजा—तपस्विभिः कैश्चित्परिज्ञातोऽस्मि । चिन्तय तावत्केनापदेशेन सकृदप्याश्रमे वसामः' इति । दर्शनीयं मनोरमम् । ननु भवानग्रतो मे वर्तते । भवन्तं मुक्त्वाऽन्यः कः सुन्दर इत्यर्थः । किंत्वाश्रमललाम-

---

पाठा०-१ 'द्रष्टव्यानां परं न दृष्टम्'.

**राजा**—सर्वः खलु कान्तमात्मीयं पश्यति । तामाश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि ।

**विदूषकः**—(स्वगतम्) होदु; से अवसरं ण दाइस्सं । (प्रकाशम्) भो वअस्स ! ते तावसकण्णआ अब्भत्थणीआ दीसदि । [भवतु अस्यावसरं न दास्ये । भो वयस्य ! ते तापसकन्यकाभ्यर्थनीया दृश्यते ।]

**राजा**—सखे ! न परिहार्ये वस्तुनि पौरवाणां मनः प्रवर्तते ।

**सुरयुवतिसंभवं किल मुनेरपत्यं तदुज्झिताधिगतम् ।**
**अर्कस्योपरि शिथिलं च्युतमिव नवमालिकाकुसुमम् ॥ ८ ॥**

**विदूषकः**—(विहस्य) जह कस्स वि पिंडखज्जूरेहिं उव्वेजिदस्स

---

भूतामधिकृत्येति योजनीयम् । ललामं प्रधानम् । 'ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु' इत्यमरः । तत्र क्षीरस्वामी प्रधानेऽपि प्राधान्येन व्याख्यातवान् । अनेन सौन्दर्यातिशयो ध्वन्यते । भवतु, अस्यावसर वर्णनावसरं न दास्ये । हे वयस्य ! ते तापसकन्यकाभ्यर्थनीया दृश्यते । **सुरेति** । किलेति प्रसिद्धौ । सुरयुवतिर्मेनका तत्संभवम् । मुन्यपत्यता तर्हि कथमित्याह—**मुनेरिति** । तयोज्झितं त्यक्तं सत् ततोऽधिगतं प्राप्तं मुनेरपत्यम् । तत्रोपमामाह—**नवमालिकाकुसुममिवेति** । अनयातिशयपेलवत्वं ध्वन्यते । कीदृक् ? अर्कस्योपरि च्युतम् । 'अर्कस्य' इत्यनेन मुन्युपमानेन तदीयत्वस्यात्यन्तासंभावनीयत्वं व्यज्यते । 'उपरी'त्यनेन शङ्काबीजम् । अधःपतितस्य शङ्कापि नायाति । स्थापनं हि संनिवेशविशेषेण भवतीति 'च्युत'मित्युक्तम् । कदाचित्काकतालीयन्यायेन च्युतस्यापि संनिवेशविशेषः स्यादित्यत आह—शिथिलम् । एतेन तवापि चक्षुर्मात्रगोचरत्व एव तदीयत्वभ्रमोऽपि न भविष्यतीत्युक्तम् । श्रुतिवृत्त्यनुप्रासौ । 'च्युतमभिनवमालिकाप्रसूनमिव' इति पठित्वा प्रयोगप्रक्रमभङ्ग परिहरणीय । मुनिसङ्गादनुत्कृष्टत्वं मन्यमानस्य विहस्येत्युक्ति । यथा कस्यापि पिण्डखर्जूराः खर्जूरविशेषास्तैरुद्वेजितस्य तिन्तिण्या

---

पाठा०—१ 'कान्तमात्मानं'. २ 'अहं तु तामेवाश्रम°'. ३ 'भोदु ण से पसरं वड्ढाइस्सं'. ४ 'जदो सा तावस°'. ५ 'अणभत्थणीआ तदो ताए किं दिट्ठाए'. ६ 'मूर्ख ! निराकृतनिमेषाभिर्नेत्रपंक्तिभिरुन्मुखः । नवामिंदुकलां लोकः केन भावेन पश्यति ? ॥ न च परि°'. ७ 'दुःषंतस्स'. ८ 'विदू०—ता कधेहि । राजा०—ललिताप्सरोभवं किल'.

तिंतिणीए अहिलासो भवे, तह इत्थिआरअणपरिभाविणो भवदो इअं अब्भत्थणा। [ यथा कस्यापि पिण्डखर्जूरैरुद्वेजितस्य तिन्तिण्यामभिलाषो भवेत्, तथा स्त्रीरत्नपरिभाविनो भवत इयमभ्यर्थना। ]

राजा—न तावदेनां पश्यसि येनैवमवादीः।

विदूषकः—तं खु रमणिज्जं जं भवदो वि विम्हअं उप्पादेदि। [ तत्खलु रमणीयं यद्भवतोऽपि विस्मयमुत्पादयति। ]

राजा—वयस्य! किं बहुना,—

चित्रे निवेश्य परिकल्पितसत्त्वयोगा
रूपोच्चयेन मनसा विधिना कृता नु।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः॥ ९॥

---

विद्धायामभिलाषो भवेत्तथा स्त्रीरत्नानि परिभवितुं तिरस्कर्तुं शीलं यस्य तस्य भवत इयमभ्यर्थना। पुनःपुनरुच्यमानराजवचनेन यथार्थप्रतीत्याह-तत्खलु निश्चितं रमणीयं यद्भवतोऽपि विस्मयमुत्पादयति। 'अपि'शब्देनास्मदादीनां विस्मयोत्पादने किं वक्तव्यमिति सूचितम्। 'किं बहुना'इत्यनेन प्रत्यङ्गवर्णना कर्तुं न शक्येत्युक्तम्। **चित्र इति।** विधिना ब्रह्मणा चित्र आलेख्ये निवेश्य परिकल्पितसत्त्वयोगा कृतप्राणयोगा नु। 'द्रव्यासुव्यवसायेषु सत्त्वम्' इत्यमरः। यावद्बुद्धिमार्जनलेखनयोस्तत्र संभवादित्याशय। रूपाणामुच्चय. समुदायस्त्रिभुवनवर्तिरूपसमुदायः तेनोपादानकारणेन। मनसा करणेन। कृता नु। अत एव करस्पर्शाद्यभावात्तादृशं कान्तिमत्त्वमेतादृग्लक्षणत्वादिकमिति भावः। अनेन 'यत्स्पर्शासहताङ्गेषु कोमलस्यापि वस्तुन.। तत्सौकुमार्यम्' इति सौकुमार्यं ध्वनितम्। संदेहालंकारः। केचन 'नु'शब्दस्य वितर्कवाचित्वादुत्प्रेक्षा मन्यन्ते। असबन्धे सबन्धरूपोभयत्रातिशयोक्तिश्च। क्वचित् **'रूपोच्चयेन घटिता मनसा कृता नु'** इति पाठः। तत्र मनसा कृता ध्याता। रूपोच्चयेन घटिता योजिता नु इति योजनीयम्। मनसि ध्याताया रूपनिवेशनेन श्लक्ष्णत्वं तादृशकान्तिमत्त्वादि व्यज्यते। सा स्त्रीरत्नसृष्टिरुत्कृष्टा स्त्रीसृष्टिः। 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः। अपरा जगत्स्त्रीसृष्टिविलक्षणेत्यभेदे भेदरूपातिशयोक्ति॰। धातुर्विभुत्वं सामर्थ्यं तस्या वपुश्चानुचिन्त्येत्यपरार्धे हेतुत्वेन योज्यम्। तृतीयचतुर्थ-

---

पाठा०—१ 'अंतेउरइत्थीरदणपरिभोइणो'. २ 'येन त्वमेवंवादी'. ३ 'चित्ते'. ४ '°सर्वयोगान्' ५ 'महता मनसा'.

**विदूषकः**—जइ एव्वं पच्चादेसो दाणिं रूववदीणं। [यद्येवं प्रत्यादेश इदानीं रूपवतीनाम्।]

**राजा**—इदं च मे मनसि वर्तते,—

**अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-**
**[2]रनाविद्धं रत्नं मधु नवमनास्वादितरसम्।**
**अखण्डं पुण्यानां फलमिव च तद्रूपमनघं**
**न जाने भोक्तारं कमिह समुपस्थास्यति [3]विधिः॥ १०॥**

---

चरणयोर्व्यत्ययपाठेन समाप्तपुनरात्तदोष परिहर्तव्य। केचनापरेत्यतिशयोक्तावत्युत्कृष्टस्य हेतो 'अण्णं लडहत्तणं' इवेत्यादावर्थस्य गम्यमानत्वाच्चतुर्थचरणस्य छन्द पूरणमात्रप्रयोजनत्वेनावकरत्वं मन्यमाना दूरान्वयेनेति पदाध्याहारेण च सा स्त्रीरत्नसृष्टिर्मे इति प्रतिभाति। इतीति किम्? विधिना चित्रे निवेश्येत्याद्युत्प्रेक्षाद्वयं संयोज्यम्। तत्रोभयोरत्यन्तासंभावनीयतया ल्यबन्तद्वयं यथाक्रमं प्रत्येकं वा सबध्य तदुत्थापितामपरेवेति गम्यादुत्प्रेक्षामाहुः। अन्ये त्वेवं व्याचक्षते—परस्य वितर्कं स्वयमेवानुवदति। चित्रे निवेश्येत्यादि कश्चित्। अन्यस्तु रूपोच्चयेनेत्यादि मन्यते। मम तु सा स्त्रीसृष्टिरपरा एतद्द्वयविलक्षणा प्रतिभाति। प्रसिद्धसृष्टेस्ताभ्यामेव निराकरणादुत्प्रेक्षाद्वयस्यात्मना निराकरणादन्यस्याभावमाशङ्क्य तत्र हेतुत्वेन ल्यबन्तद्वययोजना। तेन ब्रह्मणोऽलौकिकसामर्थ्यात्तद्रूपस्य च लोकातिक्रान्तत्वात्तत्स्रष्टावन्य एव प्रकारो भविष्यतीति भाव। काव्यलिङ्गश्रुतिवृत्त्यनुप्रासौ। वसन्ततिलका वृत्तम्। यद्येवं प्रत्यादेश इदानी रूपवतीनाम्। 'प्रत्यादेशो निराकृति' इत्यमर। **अनाघ्रातमिति।** अनाघ्रातम् अकृताघ्राणम्। अनेनामोदसत्ता ध्वन्यते। कररुहैर्नखैररलूनमच्छिन्नम्। अनेनाक्रान्तत्वम्। अनाविद्धमासमन्ताद्वेधरहितम्। स्थूलवेधनत्वं दोषाय भवति। अथवाऽनाविद्धमकुटिलम्; कुटिलस्य दुष्टत्वात्। 'आविद्धं कुटिलं भुग्नम्' इत्यमरः। अनेन निर्दोषत्वम्। तथा च **रत्नसारसमुच्चये**—'वृत्तं स्निग्धसमुज्ज्वलं शुचि गुरु श्वेतं बृहत्कोमलं स्वच्छान्तं समसूक्ष्मवेधसुरभि त्रासादिभिर्वर्जितम्' इति। तथा 'दग्धं रत्नमवर्तुलं लघु' इति। नवं मधु क्षौद्रं तत्कालनीतत्वेन नवत्वम्। अनास्वादितरसं अगृहीतास्वादम्, तादृक्त्वेनाननुभूतरसमित्यर्थ। 'मधु मद्ये पुष्परसे क्षौद्रेऽपि' इत्यमर। अनेनातिहृद्यत्वम्। केचन 'मधु'शब्देन मद्यं व्याचक्षते,—तदसत्; तत्र 'नवम्' इति विशेषणं विरुद्धं स्यात्, जीर्णस्यैव तस्योत्तमत्वात्। तथा च—'जिण्णसुरा सहीणा' इति। असावेव **रघौ** (१६।५२)—'पुराणसीधुं नवपाटलं

---

**पाठा०—१ 'सव्वधा पच्चादेसो खु सा रूवदीणं'. २ '°रनामुक्तं'. ३ 'भुवि'.**

**विदूषकः**—तेणं हि लहु परित्ताअदु णं भवं। मा कस्स वि तवस्सिणो इंगुदीतेल्लमिस्सचिक्कणसीस्सस्स हत्थे पडिस्सदि। [तेन हि लघु परित्रायतामेनां भवान्। मा कस्यापि तपस्विन इङ्गुदीतैलमिश्रचिक्कणशीर्षस्य हस्ते पतिष्यति।]

---

च' इति। अखण्डं पूर्णम्। अनेनात्यन्ताभिलषणीयता। एतद्रूपमेतदेवेति मालोपमा। अन्यास्पृष्टत्वमभिन्नो गम्य. सामान्यधर्मं। यद्वा,—म्लानता विच्छायतोत्कृष्टतानुच्छिष्टता मनोज्ञता एते वाऽभिन्नगम्याः सामान्यधर्मा.। तत्र रूपलक्षणं **सुधाकरे**—'अङ्गान्यभूषितान्येव प्रक्षेप्याद्यैर्विभूषणै.। येन भूषितवद्भान्ति तद्रूपमिति कथ्यते' इति। 'अनाघ्रात'मित्यादिकैर्विशेषणै कन्यात्वेन स्वयोग्यता सूचयन् पुष्पादिभिरुपमानैः क्रमेण परिभोगयोग्यता कान्तिमत्ता मुग्धता हृद्यतोत्तमजनाभिलषणीयता च ध्वनिता। अथ पञ्चभिरुपमानपदैर्घ्राणस्य चक्षूरसनेन्द्रियतर्पकत्वमपि ध्वनितम्। पुण्यफलस्य श्रवणरूपत्वात्तेन प्रत्यक्षालंकारो ध्वन्यते। विधिर्ब्रह्मा। इह जगति। अनघमदुःखं निष्पापं च। 'अहोदुःखव्यसनेष्वघम्' इत्यमर। अमलं मनोज्ञं वा। 'अनघो निर्मलाऽपापमनोज्ञेषु च भेद्यवत्' इति विश्व। तादृशस्यैव तद्भोक्तु. सभवात्। कं भोक्तारमुपस्थास्यत्युपसक्रमिष्यति? उपगमिष्यतीत्यर्थ.। अहं न जाने। स्वदृष्टेरगोचरत्वादेतद्रूपानुरूपतरुणस्रष्टेरभावादिति भाव.। उपपूर्वात्तिष्ठतेर्मन्त्रकरणाद्यर्थासंभवान्नात्मनेपदम्। अनघममलमिति रूपविशेषणं वा। अथवाऽनघमिति मधुव्यतिरिक्तपुष्पादेर्विशेषणत्वेन योज्यम्। तेन विशेषणप्रक्रमभङ्ग परिहृतो भवति। आद्ये मनोज्ञं, द्वितीयेऽपापं, लक्षणयाऽकठोरं, तृतीयेऽमलं, पञ्चमेऽदुःखमिति योजनीयम्। यद्वाऽनघमिति मालोपमायामभिन्नो वाच्य. सामान्यधर्मं। नवमिति मध्येऽप्युपात्तं सर्वेषा विशेषणत्वेन योज्यम्। **'फलमपि च'** इति पाठे व्यस्तं मालारूपकं ज्ञेयम्। **भोजस्तु** (स. कं ४।२६)—'पुष्पकिसलयरत्नमधुपुण्यफलानामनाघ्रातमित्यादिविशेषणापादितव्यतिरेकाणा प्रतीयमानसादृश्येन शकुन्तलारूपेण रूपणाद्व्यतिरेकवद्रूपकम्' इत्याह स्म। अत्र च विशेषणविशेष्यविशेषणक्रमेणैवोपनिबन्धान्न प्रक्रमभङ्ग। श्रुतिवृत्त्यनुप्रासौ। शिखरिणी वृत्तम्। एताभ्यां पद्याभ्यां गुणकीर्तनं नाम चतुर्थ्यवस्थोक्ता। तल्लक्षणं तु—'सौन्दर्यादिगुणश्लाघा गुणकीर्तनमत्र हि' इति। तेन कारणेन। लघु शीघ्रम्। 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः। परित्रायताम्, स्वीयत्वेनाङ्गीकरणमेव परित्राणम्। एनां भवान्। कस्यापि तपस्विन इङ्गुदी तापसतरुस्तस्य तैलेन मिश्रमत एव चिक्कणं शीर्षं यस्य तस्य हस्ते पतिष्यति। तन्मा इति निषेधे। परवती

---

**पाठा०—१ 'तेण हि लहुं लहुं गच्छदु भवं दाव सा तवस्सिणी कस्स वि इंगुदी......णिवडिस्सदि'.**

**राजा**—परवती खलु तत्रभवती। न च [1]संनिहितोऽत्र गुरुजनः।

**विदूषकः**—[2]अत्तभवंतं अंतरेण कीदसो से दिट्ठिराओ?।
[ अत्रभवन्तमन्तरेण कीदृशस्तस्या दृष्टिरागः ? । ]

**राजा**—[3]निसर्गादेवाप्रगल्भस्तपस्विकन्याजनः। तथापि तु,—

**अभिमुखे मयि [4]संहृतमीक्षणं**
**हसितमन्यनिमित्त[5]कृतोदयम्।**
**विनयवारितवृत्तिरतस्तया**
**[6]न विवृतो मदनो न च संवृतः॥ ११॥**

---

पराधीना। 'परतन्त्रः पराधीनः परवान्नाथवान्' इत्यमरः। तत्रभवती पूज्या। कामिनीरत्नभूतत्वात् पूज्यत्वम्। यतः परवत्त्वं स एव प्रतिच्छन्दनीय इत्यत आह—**न चेति**। 'अत्तभवंतं' इति सप्तम्यर्थे द्वितीया। 'सप्तम्या द्वितीया' इति सूत्रेण। उदाहरणं च—'विज्जुज्जोअ मरइ रत्ति', विद्युद्द्योतं स्मरति रात्रावित्यर्थः। तेनात्रभवन्तं पूज्यमन्तरेण विशेषेण कीदृशस्तस्या दृष्टिरागः? 'अन्तरं रन्ध्रावकाशयोः। मध्ये विनार्थे तादर्थ्ये विशेषेऽवसरेऽवधौ' इति हैमः। अत्रान्तरेण तत्रभवन्तमिति द्वितीयेति तु यत्स भ्रम एव। तस्य 'अन्तराऽन्तरेण–' (पा. २।३।४) इत्यत्र सूत्रे निपातस्यैव ग्रहणात्। तेनार्थासंगतेः। तथा हि—तस्मिन्सूत्रे **वृत्तिकारेण** व्याख्यातम्—'अन्तराऽन्तरेणशब्दौ निपातौ साहचर्याद्गृह्येते। तत्र 'अन्तरा'शब्दो मध्यामाधेयप्राधान्यमाचष्टे। द्वितीयस्तु तच्च विनार्थं च' इति। उदाहृतं च—'अन्तरा त्वा मा च कमण्डलु। अन्तरेण पुरुषकारं किंचिन्न लभ्यते' इति,—प्रकृते एतदर्थद्वयमप्यसंगतमेव, तथा चास्यैव कवे**र्मालविकाग्निमित्रे** नाटके प्रयोगः (अ. १)—'अचिरप्पवुत्तोवदेसअं छलिअअणामं णट्टं अंतरेण कीरिसी मालविअ त्ति अज्ज णट्टाअरिंअं गणदासं पुच्छिदुं ति'। निसर्गा**देव** स्वभावादेव। 'निसर्गः शीलसर्गयोः' इति विश्वः। अप्रगल्भोऽप्रौढः। यतस्तपस्विकन्याजन इत्यर्थहेतुत्वेन योज्यम्। इति यद्यपि तथापि त्विति श्लोकेनान्वेति। **अभिमुख इति।** अभिमुखे मयीक्षणमवलोकनं संहृतम्। अनेन शृङ्गारलज्जा ध्वन्यते। अन्यनिमित्तमन्यहेतुकं यथा स्यात्तथा कृत उदयो यस्य। अनेनापि सैव व्यज्यते। एतादृशं हसितम्। तल्लक्षणं **मातृगुप्ते**—'विकासितकपोलान्तमुत्फुल्लामललोचनम्। किंचिल्लक्षितदन्ताग्रं हसितं तद्विदो विदुः' इति। अनेनास्या उत्तमनायिकात्वमपि ध्वनितम्। यदुक्तं तत्रैव—'उत्तमस्य समुद्दिष्टं स्मितं

---

**पाठा०**— १ 'संनिहितगुरुजना'. २ 'अध तुह उवरि कीदिसो उण से चित्तराओ'. ३ 'स्वभावादप्रगल्भास्तपस्विकन्यकाः'. ४ 'संवृतमीक्षितं'. ५ '°कथोदयम्'. ६ 'न मदनो विवृतो न च संवृतः'.

**विदूषकः**—[1]ण खु दिट्ठमेत्तस्स तुह अंकं समारोहदि । [न खलु दृष्टमात्रस्य तवाङ्कं समारोहति ।]

**राजा**—[2]मिथःप्रस्थाने पुनः शालीनतयापि काममाविष्कृतो भावस्तत्रभवत्या । तथा हि,—

**दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे**
**तन्वी स्थिता कतिचिदेव पदानि गत्वा ।**
**आसीद्विवृत्तवदना च विमोचयन्ती**
**शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥ १२ ॥**

हसितमेव च' इति । अनेनानुरागो ध्वनित । उक्त च—'उत्फुल्लगण्डमण्डलमुल्लसितदृगन्तसूचिताकूतम् । नमयन्त्यापि मुखाम्बुजमुन्नमितं रागसाम्राज्यम् ॥' इति । विनयेन वारिता वृत्ति· प्रसरो यस्य स· । विनयलक्षणं पूर्वमुक्तमेव । मदनो न विवृत । ईक्षणसहरणेनान्यनिमित्तकृतोदयेन हसितेन च । अनेन मुग्धानायिकात्वमुक्तम् । न च सवृत· । हेलामोट्टायितादेर्भावस्य प्रकाशिना विरोधाभासो वृत्त्यनुप्रासश्च । द्रुतविलम्बितं वृत्तम् । **सुधाकरे**—'तत्र कन्या त्वरूढा स्यात्सलज्जा पितृपालिता । सखीकेलिषु विस्रब्धा प्रायो मुग्धा गुणान्विता ॥' इत्युक्त्वा 'मुग्धा नववय कामा' इत्युक्तम् । तेन नवकामत्वेन मुग्धात्वम् । अनेनास्या प्रथमं यौवनमपि ध्वनितम् । 'सर्वासामपि नारीणा यौवनं च चतुर्विधम्' इत्युक्त्वा प्रथमयौवने 'ईषच्चपलनेत्रान्तं स्मरस्मेरमुखाम्बुजम्' इत्याद्युक्तम् । हेलालक्षणं तत्रैव—'नानाविकारैः सुव्यक्त· शृङ्गाराकृतिसूचकै· । हाव एव भवेद्धेला' इति चित्तज· । मोट्टायितलक्षणं तत्रैव—'स्वाभिलाषप्रकटनं मोट्टायितमितीरितम्' इति गात्रज । न खलु दृष्टमात्रस्य तवाङ्क समारोहति । 'खलु' इति जिज्ञासायाम् । 'निषेधवाक्यालंकारजिज्ञासानुनये खलु' इत्यमर । प्रस्थाने गमनारम्भे शालीनतयाऽधृष्टतयाप्येकान्ते काममत्यर्थमाविष्कृतो भावश्चित्ताभिप्राय· । 'शालीनकौपीने अधृष्टाकार्ययो' (पा ५।२।२०) इति निपात· । अत एव प्रथमाङ्कान्ते 'सव्याजं विलम्ब्य' इत्युक्ति । 'मिथोऽन्योन्यं रहस्यपि' इत्यमर· । **दर्भेति** । तन्वी सा कतिचिदेव द्वित्राण्येव, नतु त्रिचतुराणि । तेनोत्कण्ठातिशयो ध्वनित । पदानि गत्वाऽकाण्डेऽनवसरेऽकस्मात्स्थिता । 'काण्डं चावसरे बाणे' इति धरणि· । तन्वीत्वादेव गमनासहत्व भविष्यतीत्यत आह—**दर्भाङ्कुरेण चरणः क्षत इति** । न तु दर्भेण, तस्य सत्त्वे व्याजो न स्यात् । अङ्कुरस्यादृश्यमानतया, व्याजसभवात् । अत· 'अङ्कुर'पदे व्याजेन विलम्बितमिति ध्वनितम् ।

**पाठा०—१ 'किं णु खु दिट्ठमेत्तस्स ज्जेव भवदो अंकं आरोहदु'. २ 'सखीभ्यां मिथःप्रस्थाने'. ३ 'तत्रभवत्या मयि भूयिष्ठमाविष्कृतो भावः ।'**

**विदूषकः**—तेणं[1] हि गहीदपाहेओ होहि। किदं तुए उववणं तवोवणं त्ति पेक्खामि। [तेन हि गृहीतपाथेयो भव। कृतं त्वयोपवनं तपोवनमिति पश्यामि।]

**राजा**—सखे! तपस्विभिः[2] कैश्चित्परिज्ञातोऽस्मि। चिन्तय तावत् केनापदेशेन सकृदप्याश्रमे वसामः।

**विदूषकः**—को अवरो अवदेसो तुम[3] राआणं[2]। णीवारछट्ठभाअं अम्हाणं[4] उवहरंतु त्ति। [कोऽपरोऽपदेशस्तव राज्ञः? नीवारषष्ठभागमस्माकमुपहरन्त्विति।]

**राजा**—मूर्ख! अन्यद्भागधेयमेतेषां[5] रक्षणे निपतति, यद्रत्नराशीनपि विहायाभिनन्द्यम्। पश्य,—

**यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तत्फलम्[6]।**
**तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः॥ १३॥**

---

द्रुमाणा शाखास्वसक्तमपि वल्कलं विमोचयन्ती विवृत्तवदनासीत्। अत्र बहुवचने विवृत्तवदनात्वस्य वृत्तिर्व्यक्ता। विरोधाभासो हेतुश्च। श्रुतिवृत्त्यनुप्रासौ। रेणरण इति दानिदनेति छेकानुप्रासोऽपि। वसन्ततिलका वृत्तम्। अथानुरागेङ्गितमित्यधिकृत्योक्तं **रतिविलासे**—'विलम्बस्तु पथि व्याजात्परीवृत्त्यापि दर्शनम्' इत्यादि। तेन हि गृहीतपाथेयो भव। 'गृहीतपाथेय' इत्युद्योगस्यावश्यकर्तव्यता ध्वनिता। यथा क्वचिज्जिगमिषुं प्रति कश्चिद्वदति—'पाथेयं गृहाण' इति, तद्वत्। पथि साधु पाथेयम्। 'पथ्यतिथिवसतिस्वपतेर्ढञ्' (पा ४।४।१०४) इति ढञ्। कृत त्वयोपवनं तपोवनमिति पश्यामि। उद्देश्यविधेयभावे व्यत्ययो ज्ञेय। अपदेशेन व्याजेन। 'व्याजोऽपदेशो लक्ष्यं च' इत्यमरः। सकृदेकवारम्। इत्यनेनोत्कण्ठातिशयो व्यज्यते। कोऽपरोऽपदेशः[2] तुम तव राज्ञ इति। 'तुम' इति षष्ठ्येकवचने युष्मद आदेश., 'तइतुंतेतुम्हतुहतुहंतुवतुम—' इत्यादिसूत्रेण। 'ङसि तुमतुज्झतुम्हा.' इति **वररुचिसूत्रं** च। नीवारषष्ठभागस्माकमुपहरन्त्विति, अयमेवापदेश इत्यर्थ.। भागधेयं राजग्राह्यो भाग.। 'भागरूपनामभ्यो धेयः' (वा ३३३०) इति स्वार्थे धेय.। 'भागधेयं मतं भाग्यं भागधेयः स्मृतो बलिः' इति धरणि। **यदुत्तिष्ठतीति**। वर्णेभ्यो ब्राह्मणादिभ्यो यत्फलमुत्तिष्ठत्युत्पद्यते तत्क्षयि

---

**पाठा०**—१ 'गहीदपाधेओ किदोसि ताए। ता अणुरत्तं तवोवणे तुमं तक्केमि'. २ सखे! चिन्तय तावत् केनापदेशेन पुनराश्रमपदं गच्छामः'. ३ 'णं भवं राआ। राजा—ततः किम्? विदू०—णीवार०'. ४ 'मे तावसा उव०'. ५ 'अन्यमेव भागमेते तपस्विनो निर्वपन्ति यो रत्न......भिनन्द्यते।'. ६ 'तद्धनम्'.

( नेपथ्ये )

हन्त, सिद्धार्थौं स्वः ।

राजा—( कर्णं दत्त्वा ) अये ! धीर[1]प्रशान्तस्वैरस्तपस्विभिर्भवितव्यम् ।

( प्रविश्य )

दौवारिकः—जेदु भट्टा । एदे दुवे इसिकुमारआ पडिहारभूमिं उवट्ठिदा । [ जयतु भर्ता । एतौ द्वौ ऋषिकुमारकौ प्रतीहारभूमिमुपस्थितौ । ]

राजा—तेन[2] ह्यविलम्बितं प्रवेशय तौ ।

दौवारिकः—एसो[3] पवेसेमि । ( इति निष्क्रम्य, ऋषिकुमाराभ्या सह प्रविश्य ) इदो इदो भवंतो । [ एष प्रवेशयामि । इत इतौ भवन्तौ । ]

( उभौ राजानं विलोकयत )

प्रथमः—अहो दीप्तिमतोऽपि विश्वसनीयतास्य वपुपः । अथवोपपन्नमेतद्[4]ऋषिभ्यो नातिभिन्ने राजनि । कुतः

अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये
रक्षायोगादयमपि तपः प्रत्यहं संचिनोति ।

---

विनाशि । प्रकारसहस्रैरपि न स्थायीति व्यज्यते । आरण्यकास्तपस्विनो नोऽस्माकमक्षय्यमविनाशि तप.षड्भागं ददति । 'क्षय्यजय्यौ शक्यार्थे' (पा ६।१।८१) इति निपातनात्साधु । अक्षय्यमिति प्रयत्नसहस्रैरपि न नश्यतीति ध्वन्यते । व्यतिरेकालंकार । 'चिन्तय' इत्यादिनैतदन्तेन विलासो नामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'विलास. सगमार्थस्तु व्यापार. परिकीर्तित' इति । हन्तेति हर्षे । 'हन्त हर्षेऽनुकम्पायाम्' इत्यमर । सिद्धार्थौ निष्पन्नप्रयोजनौ । राज्ञो दर्शनेनैव । जयतु भर्ता । एतौ द्वौ ऋषिकुमारौ प्रतीहारभूमिं द्वारस्थानमुपस्थितौ । 'स्त्री द्वार्द्वारं प्रतीहार' इत्यमर । 'भूमि स्यात्स्थानमात्रके' इति विश्व. । एष प्रवेशयामि । इत इतो भवन्तौ । 'अहो' इत्याश्चर्ये । दीप्तिमतोऽपि तेजोयुक्तस्यापि । नातिभिन्ने सदृशे । नसमास. । सादृश्यमेव श्लोकेनाह—**अधीति** । अमुना । 'अपि'शब्दात्सर्वत्र मुनि. । सर्वैर्ब्रह्मचारिप्रमुखैर्भोग्य आश्रयणीयः सर्व-

---

**पाठा०—१ '°प्रशान्तः स्वरः । तत्तप°'. २ 'अविलम्बितं प्रवेशय ।'. ३ 'जं भट्टा आणवेदि......इदो इदो एध'. ४ '°दृषिकल्पे राजनि'.**

अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥ १४ ॥

**द्वितीयः**—[1]गौतम ! अयं स बलभित्सखो दुष्यन्तः ।

**प्रथमः**—अथ किम् ? ।

**द्वितीयः**—तेन हि,—

नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्री-
मेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ।
आशंसन्ते [2]सुरयुवतयो बद्धवैरा हि दैत्यै-
रस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥ १५ ॥

---

भोग्यस्तस्मिन्नाश्रमे गृहस्थाश्रमे । वसतिर्गृहमध्याक्रान्ता अङ्गीकृता । मुनिपक्षे सर्वैर्बटुभिर्भोग्य पाठार्थमाश्रयणीयस्तस्मिन्नाश्रमे मठे वसति स्थानमङ्गीकृतम् । 'आश्रमो व्रतिना मठे । ब्रह्मचर्यादिचतुष्के' इति 'वसतिः स्यादवस्थाने निशाया सदनेऽपि च' इति हैम· । उक्तं च **पद्मपुराणे**—'यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः । तथा गृहस्थमाश्रित्य वर्तन्ते चतुराश्रमा ॥' इति । रक्षायोगात् प्रजापरिपालनात् । तपो लोकोत्तरं धर्म सचिनोति । रक्षार्थं शरीर-रक्षार्थम् । योगोऽष्टाङ्गस्तन्निमित्तम् । तपश्चान्द्रायणादि । सचिनोति करोति । 'तपश्चान्द्रायणादौ स्याद्धर्मे लोकोत्तरेऽपि च' इति विश्व । चारणाना द्वन्द्वं स्त्रीपुरुषयुगलम् । 'स्त्रीपुंसौ मिथुनं द्वन्द्वम्' इत्यमर । तेन 'गीत' इति विशेषणमनुवाद्यम् । चारणलक्षणं **रत्नाकरे**—'किकिणीवाद्यवेदी च वृतो विकट-नर्तकै । मर्मज्ञ· सर्वरागेषु चतुरश्चारणो मत ॥' इति । केवलं राजपूर्वो मुनि-रिति शब्दः, राजर्षिरित्यर्थ । द्या स्वर्ग स्पृशति । 'द्यौ· स्वर्गसुरवर्त्मनो' इति विश्व· । श्लेषो व्यतिरेकश्च । बलभित्सख· । अनेन वक्ष्यमाणविघ्नापसारण-क्षमत्वं ध्वन्यते । **नैतदिति** । उदधिश्यामसीमामित्युक्त एकदेशेऽपि तत्संभवा-त्कृत्स्नामित्युक्तम् । 'नगर'पदेनात्यन्तदैर्घ्यं ध्वनितम् । परिघोऽर्गलः । 'परिघो योगभेदेऽस्त्रे मुद्गरेऽर्गलघातयो' इति विश्व· । तद्वत् प्रांशू दीर्घौ बाहू यस्य स । अनेन भुजसहायेन सर्वे शत्रवो हता इति कारणे वक्तव्ये समस्तोर्वीजयलक्षणकार्य-मेवोक्तमिति पर्यायोक्तालंकार । **सुरयुवतय** इति । 'युवति'ग्रहणं तासामति-भीरुत्वाद्वन्दीदु·खाद्यनुभवात्स्त्रीत्वेन युद्धाभिमानाद्यभावाच्च । प्रथममस्य धनुषो ग्रह-णादस्यैव प्राधान्यं द्योत्यते । पौरुहूते च वज्र इति पश्चादुपदेशाद्गौणत्वं ध्वन्यते ।

---

**पाठा०**—१ 'सखे ! अयं......दुःषंतः'. २ 'समितिषु सुराः सक्तवैराः'.

**उभौ**—( उपगम्य ) विजयस्व राजन् ! ।

**राजा**—( आसनादुत्थाय ) अभिवादये भवन्तौ ।

**उभौ**—स्वस्ति भवते । ( इति फलान्युपहरतः )

**राजा**—( सप्रणामं परिगृह्य ) आज्ञापयितुमिच्छामि ।

**उभौ**—विदितो भवानाश्रमसदामिहस्थस्ते भवन्तं प्रार्थयन्ते ।

**राजा**—किमाज्ञापयन्ति ? ।

**उभौ**—तत्रभवतः कण्वस्य महर्षेरसांनिध्याद्रक्षांसि न इष्टिविघ्नमुत्पादयन्ति । तत्कतिपयरात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम इति ।

**राजा**—अनुगृहीतोऽस्मि ।

**विदूषकः**—( अपवार्य ) एसा दाणिं अणुऊला ते अब्भत्थणा । [ एषेदानीमनुकूला तेऽभ्यर्थना । ]

---

आशंसन्त इति 'शसि इच्छायाम्' इत्यस्येदितो रूपम् । 'शंसु स्तुतिहिंसनयोः' इत्यस्य तु शंसतीति । तथासावेव **रघौ** ( १४।५० )—'इत्याशशंसे करणैरबाह्यैः' इति । वृत्त्यनुप्रासः समुच्चयालंकारः । वज्रधनुषोर्द्वयोः समुचितत्वात् । नैतच्चित्रमित्यर्थं प्रत्युत्तरार्थवाक्यार्थस्य हिशब्देन हेतुत्वोपादानात्काव्यलिङ्गमुपमा च । उभयोर्मन्दाक्रान्ता वृत्तम् । आभ्यां युद्धवीरो ध्वन्यते । तल्लक्षणं तु—'अविस्मयादसंमोहादविषादाच्च य सताम् । धर्माद्यर्थविशेषेषु कार्यतत्त्वविनिश्चयः ॥ तपश्च विनय. कीर्तिः पराक्रमणशक्तिता । इत्यादयो विभावा स्यु·' इति । 'युद्धवीरे हर्षगर्वामर्षाद्या व्यभिचारिणः । असहायेऽपि युद्धेच्छा समरादनिवर्तनम् ॥ भीताभयप्रदानाद्या अनुभावाः प्रकीर्तिताः । उत्साहः स्थायिभावश्च धीरा वीरं बभाषिरे ॥' इति । अत्र विभावानुभावावुपनिबद्धौ । व्यभिचार्यादयः स्वयमूहनीयाः । 'आज्ञाप्यता'मित्युक्ते तौ प्रति नियोगः कृतः स्यादित्याज्ञापयितुमिच्छामीत्युक्तम् । प्रार्थयन्त आश्रमसद इति विभक्तिविपरिणामेन संबध्यते । तत्रभवत पूज्यस्य । क्वचित् **'तत्रभगवतः'** इति पाठः । तत्र संनिधानादिति संबन्ध· । एषेदानीमनुकूलाभ्यर्थना । ते तव । बाणासनं धनु. । यद्देव आज्ञापयति· ॥

---

**पाठा०—१ 'आगमनप्रयोजनं ज्ञातुमिच्छामि'. २ 'भवानिह स्थितस्तपस्विभिस्ते च भवन्तमभ्यर्थयन्ते'. ३ 'कुलपतेरसान्निध्याद्रक्षांसि नस्तपोविघ्न°'. ४ 'अअं दाणिं अणुऊलो गलहत्थो'.**

**राजा**—( स्मितं कृत्वा ) रैवतक ! मद्वचनादुच्यतां सारथिः सबाणासनं रथमुपस्थापयेति ।[1]

**दौवारिकः**—जं देवो आणवेदि । [ यद्देव आज्ञापयति । ]

( इति निष्क्रान्त )

**उभौ**—( सहर्षम् )

**अनुकारिणि पूर्वेषां युक्तरूपमिदं त्वयि ।**
**आपन्नाभयसत्रेषु दीक्षिताः खलु पौरवाः ॥ १६ ॥**

**राजा**—( सप्रणामम् ) गच्छतं पुरो भवन्तौ ।[2] अहमप्यनुपदमागत एव ।

**उभौ**—विजयस्व । ( इति निष्क्रान्तौ )

**राजा**—माढव्य ![3] अप्यस्ति शकुन्तलादर्शने कुतूहलम् ? ।

**विदूषकः**—पढमं सपरीवाहं[4] आसि । दाणिं रक्खसवुत्तंतेण[5] बिंदुवि णावसेसिदो । [ **प्रथमं सपरीवाहमासीत् । इदानीं राक्षसवृत्तान्तेन बिन्दुरपि नावशेषितः ।** ]

**राजा**—मा भैषीः, ननु मत्समीपे[6] वर्तिष्यसे ।

---

**अनुकारिणीति** । पूर्वेषा पुरुप्रभृतीनामनुकारिणि सदृशे । चारित्र्येण रूपेण शौर्येण दानेन पावित्र्येणेत्यादि ज्ञेयम् । युक्तरूपमतिशयेन युक्तम् । प्रशंसाया रूपप् । आपन्ना आपद्युक्ताः । 'आपन्न आपत्प्राप्त स्यात्' इत्यमर । तेषा यदभयं तदेव सत्रं यज्ञविशेष, तत्र दीक्षिताः । कृतदीक्षा इति रूपकम् । अनेनावश्यकर्तव्यत्वं भयापसारणस्य ध्वन्यते । खलु यस्मादित्यनेन पूर्वार्धं प्रति हेतुत्वात्काव्यलिङ्गमपि । अनुपदं भवत्पदन्यासं लक्ष्यीकृत्य, अनन्तरमेवेत्यर्थः । 'पादन्यासे पादमुद्रा सुप्तिङन्ते पदं भवेत्' इति **क्षीरस्वामी** । प्रथमं सपरीवाहमासीत् । जलनिर्गमनमार्गवाची 'परीवाह'शब्दोऽल्पस्य लक्षको निर्गमनसंबन्धेनाधिक्यं लक्षयति । यदधिकं भवति तन्निर्गच्छति । शीघ्रप्रतिबन्ध फलम् । तदेवाह—इदानी राक्षसवृत्तान्तेन बिन्दुरपि नावशेषित । अत्रापि 'बिन्दु'शब्दो

---

**पाठा०**—१ 'उच्यतामस्मत्सारथिः'. २ 'गच्छतां भवन्तौ'. ३ 'माधव्य ! अप्यस्ति ते शकुन्तलादर्शनं प्रति कुतूहलम् ?'. ४ 'अपरिबाधं'. ५ संपदं रक्खसवुत्तंतेण सपरिबाधं'. ६ '°त्समीपे एव वर्ति°'.

**विदूषकः**—[1]एसो रक्खसादो रक्खिदो म्हि। [एष राक्षसाद्रक्षितोऽस्मि।]

(प्रविश्य)

**दौवारिकः**—सज्जो रधो भट्टिणो विजअप्पत्थाणं अवेक्खदि। एस उण णअरादो [2]देवीणं आणत्तिहरओ करभओ आअदो। [सज्जो रथो भर्तुर्विजयप्रस्थानमपेक्षते। एष पुनर्नगराद्देवीनामाज्ञप्तिहरः करभक आगतः।]

**राजा**—(सादरम्) किम[3]म्बाभिः प्रेषितः?।

**दौवारिकः**—[4]अह इं?। [अथ किम्?।]

**राजा**—[5]ननु प्रवेश्यताम्।

**दौवारिकः**—तह। (इति निष्क्रम्य करभकेण सह प्रविश्य) एसो भट्टा, [6]उवसप्प। [तथा। एष भर्ता, उपसर्प।]

**करभकः**—जेदु भट्टा। [7]देवी आणवेदि—आआमिणि चउत्थदिअहे [8]पउत्थपारणो मे उववासो भविस्सदि। तहिं दीहाउणा अवस्सं संभाविदव्वा—त्ति। [जयतु भर्ता। देव्याज्ञापयति—आगामिनि चतुर्थदिवसे प्रवृत्तपारणो मे उपवासो भविष्यति। तत्र दीर्घायुषावश्यं संभावनीया—इति।]

**राजा**—इतस्तपस्विकार्यम्; इतो गुरुजनाज्ञा। द्वयमप्यनतिक्रमणीयम्; किमत्र प्रतिविधेयम्?।

---

ऽल्पस्य लक्षक। एष राक्षसाद्रक्षितोऽस्मि। सज्जो रथो भर्तुर्विजयप्रस्थानमपेक्षते। एष पुनर्नगराद्देवीनामम्बानामाज्ञप्तिहर करभक आगत। अथ किम्?। तह इति तथेति। एष भर्ता, उपसर्प। जयतु भर्ता। देव्यम्बाज्ञापयति। आगामिनि चतुर्थदिवसे प्रवृत्तपारणो मे उपवासो भविष्यति। पूर्वमुपवासवचनश्रवणमस्य दुःखदं भविष्यतीति प्रवृत्तपारण इति प्रथममुपन्यस्तम्। तत्र दीर्घायुषा-

---

**पाठा०**—१ 'एसो खु तुह चक्करक्खी भूदो म्हि'. २ 'देवीणं सआसादो कर०'. ३ 'किमार्याभिः'. ४ 'अध'. ५ 'तेन हि प्रवे०'. ६ 'करभअ! एसो .. उवसप्पदु भवं'. ७ 'देवीओ विण्णवेंति। राजा—किमाज्ञापयन्ति?। करभकः—आआमिचदुट्ठदिअसे पुत्तपिंडपारणो णाम' ८ 'पुत्तपिंडपालणो'.

**विदूषकः**—तिसंकू विअ अंतराले चिट्ठ । [त्रिशङ्कुरिवान्तराले तिष्ठ ।]

**राजा**—सत्यमाकुलीभूतोऽस्मि,—

> कृत्ययोर्भिन्नदेशत्वाद्द्वैधीभवति मे मनः ।
> पुरः प्रतिहतं शैले स्रोतः स्रोतोवहो यथा ॥ १७ ॥

(विचिन्त्य) सखे ! त्वमम्बया पुत्र इति प्रतिगृहीतः । अतो भवानितः प्रतिनिवृत्य तपस्विकार्यव्यग्रमानसं मामावेद्य तत्रभवतीनां पुत्रकृत्यमनुष्ठातुमर्हति ।

**विदूषकः**—ण खु मं रक्खोभीरुअं गणेसि । [न खलु मां रक्षोभीरुकं गणय ।]

**राजा**—(सस्मितम्) कथमेतद्भवति संभाव्यते ? ।

**विदूषकः**—जह राआणुएण गंतव्वं तह गच्छामि । [यथा राजानुगेन गन्तव्यं तथा गच्छामि ।]

**राजा**—ननु तपोवनोपरोधः परिहरणीय इति सर्वानानुयात्रिकांस्त्वयैव सह प्रस्थापयामि ।

---

वश्यं सभावनीयेति । प्रतिविधेयं प्रतिकर्तव्यम् । त्रिशङ्कुरिवान्तराले तिष्ठेत्यादिषु विदूषकवचनेषु हास्यप्रतीतिः स्फुटैव । उक्तं च—'विदूषकस्य हास्यं तु नायके हास्यकारणम्' इति । तल्लक्षणम्—'भाषणाकृतिवेषाणा क्रियायाश्च विकारतः । लौल्यादेश्च परस्थानामेषामनुकृतेरिति । विकासश्चेतसो हासः' इति । एतत्स्थायी हास्य इति ज्ञेयम् । **कृत्ययोरिति** । कार्ययोर्मनसो द्वैधीभवनं नामैकत्रापर्यवसानम् । उपमाने तु मार्गद्वयगमनम् । उभे भिन्ने अपि समानधर्मार्थमतिशयोक्त्यैकत्वेनाध्यवसिते । पुरोऽग्रे शैले प्रतिहतमवरोधं प्राप्तं स्रोतोवहो नद्याः स्रोत इव । अन्यदल्पं स्रोत शैलावरुद्धं तिष्ठेदेवेति संबन्धिपदोपादानम् । तत्रापि नद्यादिपदाभावेन यद्विशिष्टस्य ग्रहणं तेन महानदीत्वं ध्वनितम् । वृत्त्यनुप्रासच्छेकानुप्रासयोः संसृष्टिः उपमा च । न खलु मा रक्षोभीरुकं गणय । भवति त्वयि । यथा राजानुगेन गन्तव्यं तथा गच्छामि । आनुयात्रिकान् सहागतान् ।

---

**पाठा०**—१ '°कृतोऽस्मि'. २ 'त्वमार्याभिः पुत्र इव गृहीतः'. ३ 'तपस्विकार्यव्यग्रतामस्माकं निवेद्य'. ४ 'भो, मा रक्खसभीरुअं मं अवगच्छ'. ५ 'भो महाब्राह्मण ! कथमिदं त्वयि सं°'. ६ 'तेण हि राआणुओ विअ'. ७ 'प्रेषयामि'.

**विदूषकः**—तेण[1] हि जुवराओ म्हि दाणिं संवुत्तो । [तेन हि युवराजोऽस्मीदानीं संवृत्तः । ]

**राजा**—(स्वगतम्) चपलोऽयं बटुः । कदाचिदस्मत्प्रार्थनामन्तः-पुरेभ्यः कथयेत्[2] । भवतु; एनमेवं वक्ष्ये । (विदूषकं हस्ते गृहीत्वा, प्रकाशम्) वयस्य ! ऋषिगौरवादाश्रमं[3] गच्छामि । न खलु सत्यमेव तापसकन्यकायां ममाभिलाषः । पश्य,—

**क्व वयं क्व परोक्षमन्मथो**
**मृगशावैः[4] सममेधितो जनः ।**
**परिहासविजल्पितं[5] सखे !**
**परमार्थेन न गृह्यतां वचः ॥ १८ ॥**

(इति निष्क्रान्ताः सर्वे)

## इति[6] द्वितीयोऽङ्कः ।

---

तेन हि युवराज । 'अस्मि' इत्यहमर्थे । इदानी सवृत्त । अन्त पुरेभ्यस्तात्स्थ्यात् स्त्रीभ्य । विदूषकं प्रत्याययितु तापसकन्यकायामित्युक्ति । **क्व वयमिति** । वयं क्व[?] । वयमित्यर्थान्तरसंक्रमितवाच्यम् । तेनानेकराजोपचारयुक्तत्वं नानावैदग्धीकुशलत्वं च व्यज्यते । मृगशावैर्हरिणबालकै । समं सहैधितो वृद्धिं प्राप्त. । अत एव परोक्ष-मन्मथो दूरमुक्तमनोभव, कामकलानभिज्ञ इत्यर्थ । एधितपदार्थसमर्थनार्थं 'शाव'पदम् । तेन नावकरत्वम् । परिहासेन विविधं जल्पितं यत्र तद्वच शकुन्तला-यामनुरागकथनरूपं परमार्थेन न गृह्यताम् । पुनरुक्तवदाभास । वृत्त्यनुप्रास । काव्यलिङ्ग पदार्थवाक्यार्थरूपेण । पूर्वार्धे विषमस्यैको भेद सहोक्तिश्च । वैतालीयं वृत्तम् । अन्ये त्वर्धसमं प्रबोधितं मन्यन्ते । 'राजा—स्वगतम्' इत्यादिनैतदन्तेन सवृतिर्नाम सध्यन्तराङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'सवृति· स्वयमुक्तस्य स्वयं प्रच्छादनं भवेत्' इति ॥

**इति श्रीमदभिज्ञानशाकुन्तलटीकायामर्थ-द्योतनिकायां द्वितीयोऽङ्कः समाप्तः ॥**

---

**पाठा०—१ '(सगर्वम्) ही ही जुअराओ'. २ 'कदाचिदिमां...निवेदयेत् । भवत्वेवं तावत्'. ३ '°दाश्रमपदं...कन्यकायामभिलाषो मे'. ४ 'मृगशावैः सह वर्धितो जनः'. ५ '°विकल्पितं सखे !'. ६ 'इत्याख्यानगुप्तिर्नाम'.**

# तृतीयाङ्कस्य कथावस्तु



तत्र प्रथमतो विष्कम्भके सकुशहस्तो यजमानशिष्यः प्रविश्य, आ राज्ञस्तपोवनप्रवेशात् यज्ञकर्म निराबाधं सम्पादितमिति सगौरवं दुष्यन्तस्य शौर्यं कर्मनिष्ठां च ख्यापयति ।• ततः परं कामयमानो राजा प्रविश्य शशाङ्क–मदनावुद्दिश्य स्वीयं कामव्यथावर्णनं करोति। सखीपरिवृता शकुन्तला मालिनीतटेषूग्रां वेलामतिवाहयतीति तामेवान्विष्यन् लतामण्डपे सकुसुमास्तरणं शिलापट्टमधिशयानामवलोकयति । बलवदस्वस्थशरीरायाः शकुन्तलाया. सखीभि. समं विश्रम्भालापान् संश्रोतुकामो नृपः शाखान्तरितो भूत्वावतिष्ठति । तपोवनेऽस्मिन् दुष्यन्तस्यागमनदिनादहं नितरामस्वस्थशरीरा संजातास्मि, स एवात्र मे शरणम् । इति निशम्य प्रियंवदा मदनलेखप्रेषणात्मकं सुरुचिरं प्रयोगं विचार्य देवताप्रसादापदेशेन नृपं प्रति तत्प्रापणकार्यं स्वयमुररीकरोति । तदेतत् सर्वं निशम्य संतुष्टो नृपस्तत्र सहसोपसृत्य स्वीयामप्यनिर्वर्णनीयां दशां ताः ख्यापयति । राजा च तां गान्धर्वविवाहेण परिणीय तया समं कञ्चन कालमत्यवाहयत् । एतदन्तरे शकुन्तलायाः स्वास्थ्योपलम्भार्थं गौतमी तत्रागच्छति । तस्यास्तामवस्थामवलोक्य सायंकालः संजात इत्यामन्त्र्य च सर्वाभिः सह जगामोटजम् । तेनातिखिन्नमना नृपस्तत्रैव प्रेयसीसमेतविहृतस्थलादि स्मारं स्मारमध्यगमयत् ।

---

# तृतीयोऽङ्कः

अथ विष्कम्भकः

( ततः प्रविशति कुशानादाय यजमानशिष्यः )

**शिष्यः**—अहो ! महानुभावः पार्थिवो दुष्यन्तः । प्रविष्टमात्र एवाश्रमं तत्रभवति राजनि निरुपद्रवाणि नः कर्माणि प्रवृत्तानि भवन्ति ।

**का कथा बाणसंधाने ज्याशब्देनैव दूरतः ।**
**हुंकारेणेव धनुषः स हि विघ्नानपोहति ॥ १ ॥**

यावदिमान्वेदिसंस्तरणार्थं दर्भानृत्विग्भ्य उपनयामि । ( परिक्रम्यावलोक्य च, आकाशे ) प्रियंवदे ! कस्येदमुशीरानुलेपनं मृणालवन्ति च नलिनीपत्राणि नीयन्ते ? । ( आकर्ण्य ) किं ब्रवीषि ? आतपलङ्घनाद्बलवदस्वस्था शकुन्तला; तस्याः शरीरनिर्वापणायेति ? । तर्हि त्वरितं गम्यताम् । सखि ! सा खलु भगवतः कण्वस्य कुलपतेरुच्छ्वसितम् । अहमपि तावद्वैतानिकं शान्त्युदकमस्यै गौतमीहस्ते विसर्जयिष्यामि । ( इति निष्क्रान्तः )

इति विष्कम्भकः ।

---

महाननुभावः प्रभावो यस्य स. । 'अनुभावः प्रभावेऽपि' इत्यमरः । **प्रविष्टेति ।** तत्रभवति पूज्ये । अत्र राक्षसनिराकरणे कारणे वक्तव्ये कार्यरूपकर्मनिरुपद्रवतोक्तेः पर्यायोक्तालंकार । **का कथेति ।** बाणसधाने का कथा ? शरसंधानं नापेक्षत इत्यर्थ । स धनुषो ज्याशब्देनैव विघ्नान्दूरतोऽपोहति निराकरोति । केनेव ? हुंकारेणेवेति । एकदेशविवर्तिन्युपमा । तेन राज्ञो गणपत्युपमानत्वं गम्यते । अथवा स ज्याशब्देनैव दूरतो विघ्नानपोहति । कथंभूतेनेव ? धनुषो हुंकारेणेवेति समासोक्तिगर्भोत्प्रेक्षा धनुषश्चेतनत्वारोपात् । अनयाऽनायासेन रिपुनिबर्हणं ध्वनितम् । अस्मिन्पक्षे धनुर्ज्याशब्दयोरर्थपौनरुक्त्यं परिहृतं भवति । **आकाश** इति । तल्लक्षणं तु **दशरूपके** ( ३।६७ )—'कि ब्रवीष्येवमित्यादि विनापात्रं ब्रवीति यत् । श्रुत्वेवानुक्तमप्येकस्तत्स्यादाकाशभाषितम् ॥' इति । नाट्यधर्मोऽयम् । आकर्ण्याकर्णनमभिनीय । तच्च पार्श्वानतेन शिरसा स्तब्धेन नेत्रेण । तल्लक्षणं तु—'पार्श्वस्याभिमुखं यत्तु तत्पार्श्वानतमुच्यते' । 'प्रयोज्यमाकर्णनादौ पार्श्वस्थस्यावलोकने । यत्तु स्यान्निश्चलपुटं स्तब्धनेत्रं प्रचक्षते ॥' इति । **विष्कम्भकः** । तल्लक्षणं तु **सुधाकरे**—'तत्र विष्कम्भको भूतभाविवस्त्वंशसूचकः । अमुख्यपात्ररचितः संक्षेपैक-

---

**पाठा०**—१ 'महानुभावो राजा दुषंत. । येन'. २ 'एवात्रभवति निरुपद्रवानि नः कार्याणि'. ३ 'विघ्नान्व्यपोहति'. ४ 'उपहरामि'. ५ 'प्रियंवदे ! यत्नादुपचर्यताम् । सा हि तत्रभगवतः'.

(ततः प्रविशति कामयमानावस्थो राजा)

राजा—(निःश्वस्य)

**जाने तपसो वीर्यं सा बाला परवतीति मे विदितम्।**
**अलमस्मि ततो हृदयं तथापि नेदं निवर्तयितुम्॥ २॥**

(मदनबाधा निरूप्य) भगवन्कुसुमायुध! त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसंधीयते कामिजनसार्थः। कुतः

---

प्रयोजनः॥ द्विधा स शुद्धो मिश्रश्च मिश्र. स्यान्नीचमध्यमैः। शुद्धः केवलमध्योऽयमेकानेककृतो द्विधा॥' इति। तदयमेककृतः शुद्धः। अत्र दुष्यन्तस्याश्रमाभ्यन्तरागमनं कृततपस्विकार्यत्वेन निराकुलत्वं संभूतसूचनं शकुन्तलाया आतपलङ्घनव्याजेन विरहावस्थाकथनं भविष्यत्सूचनमिति ज्ञेयम्। कामयमानो विरही तस्येवावस्था यस्य स तथा। क्वचित् **'कामयानः'** इति पाठ। सोऽप्यनित्यमागमानुशासनमिति मुख्यकृते साधु। तथा च **वामनाचार्यसूत्रम्** (काव्या. सू. ५।२-८३)—'कामयानशब्द सिद्धोऽनादिश्चेत्' इति। तत्र **राजानकमम्मटेन** व्याख्यातम्—'अनित्यमागमानुशासनम्' इति। यद्वा,-कामस्य यान उद्गमन आरोहणे वा या अवस्था अभिलाषाद्यास्ता यस्य स। **जान इति**। अहं तपसो वीर्यं जाने, प्रसह्य धर्षणीया न भवतीति भाव। प्रसह्य धर्षणीयत्वाभावे कार्ये प्रस्तुते यदप्रस्तुतं तपसो वीर्यं जान इति कार्यमुक्तं साऽप्रस्तुतप्रशंसा। तर्हि सैवागमिष्यतीत्यत आह—**सेति**। सा बालाऽप्रगल्भा परवती पराधीनेत्युभयं विधेयम्। अयं व्याजो भविष्यतीत्याह—इति मे विदितम्। मे इति मयेत्यर्थे निपातः। तदुक्तं **वामनाचार्यैः** (काव्या. सू. ५।२।१०),—'ते-मे-शब्दनिपातौ त्वया-मयेत्यर्थे' इति। नपुंसके भावे क्तस्य शेषविवक्षाया चेति वा सबन्धे षष्ठी। एवं यद्यपि तथापि तत. शकुन्तलायाः सकाशादिदं मया सह सबद्धं मां च परित्यज्य क्षणमात्रपरिचित आसक्तमिति निर्ह्रीकं हृदयं निवर्तयितुं नालं न समर्थोऽस्मि; स्वयं न निवर्तते, मयाप्यशक्यं निवर्तनमित्यर्थ। वेदनक्रियाया हृदयनिवर्तनक्रियायाश्च विरोधः, तदाभासस्तु रतिस्वाभाव्यात्। श्रुतिवृत्त्यनुप्रासौ। **मदनबाधां निरूप्येति**। लोलितेन शिरसा दोलेन हस्तकेन शून्यया दृष्ट्येत्यादि ज्ञेयम्। तल्लक्षणानि तु—'शिर स्याल्लोलितं सर्वदिक्कं शिथिललोचनैः' इति। 'लम्बमानौ पताकौ तु श्लथासौ शिथिलाङ्गुली। दोलो भवेदसौ' इति। 'समतारापुटा दृश्यदृष्टिः शून्यविलोकिनी' इति। अथवा,-दोलस्थाने कर्कटं कुर्यात्। तल्लक्षणं तु—'अन्योन्यस्यान्तरैर्यत्राङ्गुल्यो नि सृत्य हस्तयोः। अन्तर्बहिर्वा दृश्यन्ते कर्कटः सोऽभिधीयते॥

---

**पाठा०-१ 'न च निम्नादिव सलिलं निवर्तते मे ततो हृदयम्। भगवन्मन्मथ! कुतस्ते कुसुमायुधस्य सतस्तैक्ष्ण्यमेतत्? (स्मृत्वा) आं ज्ञातम्,-अद्यापि नूनं हरकोपवह्निस्त्वयि ज्वलत्यौर्व इवाम्बुराशौ। त्वमन्यथा मन्मथ मद्विधानां भस्मावशेषः कथमेवमुष्णः?। अपि च त्वया'.**

**तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-**
**र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।**
**विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-**
**स्त्वमपि कुसुमबाणान् वज्रसारीकरोषि**[१] ॥ ३ ॥

(परिक्रम्य) क्व नु खलु संस्थिते कर्मणि सदस्यैरनुज्ञातः श्रमक्लान्तमात्मानं विनोदयामि[१] । (निःश्वस्य) किं नु खलु मे प्रियादर्शना-

अन्तःस्थिताङ्गुलि· पृष्ठे त्वङ्गुलीना हनु दधत् । चिन्तायामथ खेदे च' इति । अत एवोक्तम्—'सूचयन्त्यान्तरं भावं ये कराः कर्कटादयः । विषण्णादिष्वपि प्रायः प्रयोज्यास्ते सता मता· ॥' इति । विश्वसनीयाभ्यामित्यत्रोपात्तविशेष्यार्थौ हेतुत्वेनोपात्तोऽवगन्तव्य । कामिजनसार्थौ विरहिसमूहः । अतिसधीयते वञ्च्यते । 'अतिसमौ वञ्चने' इति गणपाठात् । तदेवाह—**तवेति** । 'कुसुम'शब्देनात्यन्तपेलवत्वं ध्वनितम् । कुमुमशरस्य भाव· कुसुमशरत्वम् । अत्र **चूर्णिकाया** 'चन्द्रमसा च' इत्युक्तेस्तवेतिवत् सर्वनामपरामर्शो न्याय्यो न'इन्दु'पदोपादानम् । तेन **'त्वमस्य द्वयम्'** इति पठनीयम् । अयथार्थम्, विपरीतार्थमित्यर्थः । 'तदन्यतद्विरुद्धतदभावेषु नञ्वर्तते' इति विरुद्धार्थोऽत्र नञ् । मद्विधेषु विरहिष्वित्यर्थ । अत्रापि मयीति विशेषे प्रस्तुते सामान्योक्तेरप्रस्तुतप्रशंसा । अयथार्थत्व उत्तरवाक्यार्थ हेतुत्वेनाह—**विसृजतीति** । यत इन्दु , हिमं गर्भे येषा तै । अनेन कालत्रयेऽप्युष्णत्वशङ्कामात्रमपि नास्तीति व्यज्यते । मयूखै किरणैरग्निं विसृजति किरति । अवज्रसारान्वज्रसारान् करोषि वज्रसारीकरोषि । यद्वा,—वज्रवत्सारीकरोषि दृढीकरोषि । काव्यलिङ्गं रूपकमुपमा क्रमेण । हिमगर्भैरग्निमिति गुणद्रव्ययोर्विरोध· । विप्रलम्भस्वाभाव्यादाभासत्वं चूर्णिकया श्लोकपूर्वार्धेऽयथालंकार , कुसुमेषु यद्बाणत्वमारोपितं तद्विरहदु खदत्वेन प्रकृतोपयोगीति परिणामश्च । 'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम ' इति तल्लक्षणात् । त्वत्वेति मिन्दोर्मिदमिति छेकवृत्त्यनुप्रासौ । मालिनी वृत्तम् । उत्तरार्धे क्रमप्रक्रमभङ्गो 'विरहिणो राज्ञो वचन'मिति परिहर्तव्य· । **'त्वमिह कुसुमबाणान्वज्रसारान्विधत्से विसृजति स च वह्निं शीतगर्भैर्मयूखैः'** इति वा पाठ । अत्र च पाठे शीतपदोपादानादुद्देश्यप्रतिनिर्देश्ययोरेकपदोपादानलक्षणो गुण· । 'इन्दु'शब्दानुपादानात् कथितपददोषाभावश्च स्वीकृतो भवति । श्लोके च यथासंख्यालंकारः । संस्थितेऽवसिते । सदसि साधवः सदस्यास्तैरुपद्रष्टृभिः । 'सदस्या विधिदर्शिन ' इत्यमर । क्व नु खलु विनोदयामीत्यन्वय· । विनोदेन कौतुकेन क्लेशमपहरामीति भाव । अन्यत्र क्वचिदपि विनोदना-

**पाठा०-१ 'अथ वा, अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे । यदि मदिरायतनयनां तामधिकृत्य प्रहरतीति ॥ भगवन्! एवमुपालब्धस्य ते न मां प्रत्यनुक्रोशः । वृथैव संकल्पशतैरजस्रमनङ्ग! नीतोऽसि मयातिवृद्धिम् । आकृष्य चापं श्रवणोपकण्ठे मय्येव युक्तस्तव बाणमोक्षः ॥ क्व नु खलु निरस्तविघ्नैस्तपस्विभिरनुज्ञातः खिन्नमात्मानं विनोदयामि'.**

ऋते शरणमन्यत्? यावदेनामन्विष्यामि । (सूर्यमवलोक्य) इमामुग्रातपवेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजना शकुन्तला गमयति । तत्रैव तावद्गच्छामि[1] । (परिक्रम्य संस्पर्शं रूपयित्वा) अहो, प्रवातसुभगोऽयमुद्देशः ।

शक्यमरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम् ।
अङ्गैरनङ्गतप्तैर[2]विरलमालिङ्गितुं पवनः ॥ ४ ॥

(परिक्रम्यावलोक्य च) अस्मिन्वेतसपरिक्षिप्ते[3] लतामण्डपे संनिहितया तया भवितव्यम् । तथा हि, (अधो विलोक्य)—

---

भावाग्निश्वस्येत्युक्तिः । तत्र दीर्घत्वमुष्णत्वं विरहित्वादवसेयम् । अन्यथैतदुक्तेरेव वैयर्थ्यात्तस्य स्वभावत एव संभवात् । अन्यत्कि खलु शरणं रक्षकम्? न किंचिदित्यर्थ । 'तत. प्रविशति' इत्यादिनैतदन्तेनोद्वेगो नाम पञ्चम्यवस्था सूचिता । तल्लक्षणं तु—'मनसः कम्प उद्वेग कथितस्तत्र विक्रिया. । चित्तसतापनिश्वासौ द्वेष· शय्यासनादिषु ॥ स्तम्भचिन्ताश्रुवैवर्ण्यदीनत्वादय ईरिता·' इति । मालिनीति नदीसमाख्या । 'यावदेनाम्' इत्यादिना 'गच्छामि' इत्यन्तेन परिसर्पो नामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु (सा द ६।९०)—'दृष्टनष्टानुसरणं परिसर्प इतीरितिः इति । **अहो** इति । अकस्माद्वातस्पर्शसजातसुखेनाश्चर्यम् । प्रकृष्टो [illegible]न सुभगो मनोहर । अत्र सौभाग्यं चेतनधर्मं, स देशे न संभवतीति मुख्यार्थबाधेन यो मनोहर· स सुभगो भवतीति कार्यकारणसबन्धेन मनोज्ञत्वं लक्षयन् विरहिमनोविनोदनत्वादिकं ध्वनयति । **शक्यमिति** । एनादृश पवनोऽनङ्गतप्तैरङ्गैरविरलं गाढं यथा स्यादेवमालिङ्गितु शक्यम् । 'मालिनीतरगाणा'मित्यनेन तरगोत्पादनोक्तेर्मन्दत्वं ज्ञेयम् । अत्र पवनोऽङ्गान्यालिङ्गतीति कर्तृकर्मवद्भावे वाच्ये यद्वैपरीत्यं कृतं तेषामतितानवमतिशयसतापत्वं तस्य च तद्दूरीकरणेन दुःखदायित्वं व्यज्यते । अत्र प्रियादर्शनेनात्मविनोदनकार्यमारभमाणस्य पवनोऽपि तत्कार्ये सहायत्वेनोपात्त इति समाहितालंकार. । 'कार्यारम्भे सहायाप्तिः' (स कं. ३।३४) इति तल्लक्षणात् । अत्र मालिमालीति ङ्गचतुष्टयस्योपादानाच्छेकानुप्रासः । श्रुत्यनुप्रासस्य त्वनेन सहैकवाचकानुप्रवेशलक्षणः सकरः । वृत्त्यनुप्रासश्च । अरविन्दवन्मनोज्ञ शीतल पवनः पवित्र· समालिङ्गनेन सुखमुत्पादयतीति समासोक्तिरपि । 'सुगन्धौ च मनोज्ञे च वाच्यवत्सुरभि स्मृत.' इति विश्व । ननु पवनस्य सर्वतावप्युद्दीपकत्वात्तस्य च विरहित्वात्पवन आलिङ्गितुं शक्य इति तस्य मनोविनोदसेतुत्वं कथमिति चेत्,—'इमामुग्रातपवेला

---

**पाठा०—१ 'अनया बालपादपवीथ्या सुतनुरचिरगतेति तर्कयामि । कुतः । संमीलन्ति न तावद्बन्धनकोशास्तयावचितपुष्पाः । क्षीरस्निग्धाश्चामी दृश्यन्ते किसलयच्छेदाः ॥ अहो, प्रवात°'. २ '°तप्तैर्निर्दयमालिंगितुं. ३ 'अस्मिन्नेव वेतसलतामण्डपे भवितव्यं शकुंतलया'.**

**अभ्युन्नता पुरस्तादवगाढा जघनगौरवात् पश्चात् ।**
**द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥ ५॥**

यावद्विटपान्तरेणावलोकयामि । (परिक्रम्य, तथा कृत्वा, सहर्षम्) अये, लब्धं नेत्रनिर्वाणम् । एषा मे मनोरथप्रियतमा सकुसुमास्तरणं

---

मालिनीतीरेषु शकुन्तला गमयति' इति (पृ. ८९) पूर्वमुक्तेरत्र च मालिनीतरंगाणां कणवाहीत्युक्तेर्नायिकासस्पृष्टत्वं व्यज्यते । तेन विनोदकारित्वमुक्तमेव । अनेनैवान्यत्राप्युक्तम् (मेघ० उ. ४४)–'आलिङ्ग्यन्ते गुणवति ! मया ते तुषाराद्रिवाता पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति'। ननु 'शकिसहोश्च' (पा ३।१।९९) इति कर्मणि यकि कृते सह्यं शक्यमिति रूपम्। तेन सह पवनस्य भिन्नलिङ्गस्य सामानाधिकरण्यं कुत.? इति चेन्न, –**महाभाष्य**वचनात्सिद्धम् 'शक्य च श्वमासादिभिरपि क्षुत्प्रतिहन्तुम्' इति । तथा च **वामन**सूत्रम् (काव्य सू. ५।२।२३)—'शक्यमिति रूपं विलिङ्गवचनस्यापि कर्माभिधाया सामान्योपक्रमात्' इति । **अभ्युन्नतेति ।** पुरस्तात्पादाग्रभागेऽभ्युन्नता । उन्नतत्वं च सापेक्षमिति पश्चाद्भागापेक्षयोन्नतत्वं ज्ञेयम् । पश्चात्पार्ष्णिदेशे । जघनगौरवान्नितम्बगौरवात् । 'जघनं कटौ । स्त्रिय. श्रोणिपुरोभागे' इति हैम । अवगाढा निम्नेति स्वभावोक्ति । प्रतिबिम्बितपदपङ्क्ति । 'पदं शब्दे च वाक्ये च पादतच्चिह्नयोरपि' इति विश्वः । 'पादन्यासे पादमुद्रा सुप्तिङन्ते पदं भवेत्' इति **क्षीरस्वामी ।** अस्य वेतसलतामण्डपस्य। पाण्डु सिकता यत्र तस्मिन् । एतेन तत्प्रतिबिम्बयोग्यत्वं ध्वनितम् । 'पाण्डु'शब्देनोद्दीपकत्वम्। 'यावद्रम्यमुज्वलं च' इत्युक्ते । द्वारे दृश्यते तत्प्रवेशसूचनार्थं द्वारग्रहणम् । अनेन पथा लतामण्डपं प्रविष्टेति कारणे वक्तव्ये यत्तत्कार्यरूपपदपङ्क्तिवर्णनं तत्पर्यायोक्तम् । हेतुश्च । अत्र राजा लतामण्डपद्वारि न गतोऽस्ति । तत्पृष्ठभाग एवास्ति । तत एव पदपङ्क्तौ दृष्टि· पतिता । पदपङ्क्तिश्च प्रवेशसूचिका । अत एव पूर्वं पुरोभागस्य पश्चात्पश्चाद्भागस्य वर्णनमिति वर्ण्यक्रमभङ्गो नाशङ्कनीयः। **भोजेन** तु (स. कं ३।४६) 'प्रत्यक्षमक्षजं ज्ञानम्' इति प्रत्यक्षालंकारोऽङ्गीकृत । उदाहृत च—'वीक्ष्यते स्म शनकैर्नववध्वा' इति । तेन पदपङ्क्तिर्दृश्यत इति प्रत्यक्षालंकार । 'सदृशात्सदृशज्ञानमुपमानं द्विधेह तत्। स्यादेकमनुभूतेऽर्थेऽननुभूते द्वितीयकम्' (स कं ३।५०) इति। तेनैवोपमानालंकार उक्त· । तेनात्राप्यभ्युन्नतेत्यादिविशिष्टपदपङ्क्तौ तस्या इयमिति ज्ञानं सोऽयमनुभूतार्थविषय उपमानालंकार । अथ च विशिष्टपदपङ्क्त्या वेतसगृहे तत्सद्भावादनुमानालंकारोऽपि । यदाहु —'अपि चास्त्यनुमानेऽपि सादृश्यं लिङ्गलिङ्गिनोः । पादेन यत्र कुब्जेन कुब्जपादोऽनुमीयते ॥' इति । श्रुत्यनुप्रासश्च । विटपान्तरेण शाखावकाशेन । 'अन्तरमवकाशावधि' इत्यमर· । नेत्रनिर्वाणं

शिलापट्टमधिशयाना सखीभ्यामन्वास्यते[1] । भवतु; श्रोष्याम्यासां विश्रम्भकथितानि । ( इति विलोकयन्स्थितः )

( तत. प्रविशति यथोक्तव्यापारा सह सखीभ्या शकुन्तला )

**सख्यौ**—( उपवीज्य सस्नेहम् ) हला सउंदले ! अवि सुहेदि दे णलिणीपत्तवादो ? । [हला शकुन्तले ! अपि सुखयति ते नलिनीपत्रवातः ? ।]

**शकुन्तला**—किं वीअअंति मं सहीओ ? । [ किं वीजयतो मां सख्यौ ? । ]

( सख्यौ विषादं नाटयित्वा परस्परमवलोकयत )

**राजा**—बलवदस्वस्थशरीरा शकुन्तला दृश्यते । ( सवितर्कम् ) तत्किमयमातपदोषः स्यात्, उत यथा मे मनसि वर्तते ? । ( साभिलाषं निर्वर्ण्य ) अथवा कृतं संदेहेन,—

**स्तनन्यस्तोशीरं शिथिलितमृणालैकवलयं**
**प्रियायाः साबाधं [2]किमपि कमनीयं वपुरिदम् ।**

---

नयनानन्दमित्यतिशयोक्तिः । नायिकालक्षणस्य विषयस्य निगीर्णत्वात् । मनोरथप्रियतमेति रतेरनिर्वाहात् । विश्रम्भकथितानि विश्वासभणितानि । 'समौ विश्रम्भविश्वासौ' इत्यमरः । यथोक्तव्यापारा । मदनबाधया शीतलशयनतलनिपतना-(ननलिनीपत्रवाता ) दिर्व्यापार । अपीति प्रश्ने । सुखयति ते नलिनीपत्रवातः ? । कि वीजयतो मा सख्यौ ? अनेन तापाधिक्यं तेनान्यविषयासवेद्यत्व च ध्वनितम् । विषयनिवृत्तिश्चावस्थोक्ता । अनेन विधूतं नामाङ्गमुपक्षिप्तम् । तल्लक्षणं **दशरूपके** (१।३३)—'विधूतं स्यादरति·' इति । **विषादं नाटयित्वेति** । धुतेन शिरसा विषण्णया दृष्ट्या चेति ज्ञेयम् । तल्लक्षणं तु—'पर्यायेण शनैस्तिर्यग्गतमुक्तं धुतं शिरः । विषादेऽनीप्सिते ज्ञेयम्' इति । 'या दृष्टिः पतितापाङ्गा विस्तारितपुटद्वया । निमेषिण्यस्ततारा च विषण्णा सा विषादिनी ॥' इति । परस्परमवलोकयत इति शङ्कासूचकम् । बलवदधिकम् । कृतम्, अलमित्यर्थं । 'कृतमिति निवारणनिषेधयो·' इति **भोजकृतसरस्वतीकण्ठाभरणवृत्तौ** । **स्तनेति** । स्तनयोर्न्यस्तमुशीरं नलदानुलेपो यत्र तत् । अत्र तरुणीस्तनौ हिमकाल उष्णौ,

---

**पाठा०—१ '°मुपास्यते । शृणोमि तावदासां'. २ 'तदपि कमनीयं'.**

समस्तापः कामं मनसिजनिदाघप्रसरयो-
र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥ ९ ॥

प्रियंवदा—(जनान्तिकम्) अणसूए! तस्स राएसिणो पढम-दंसणादो आरहिअ पेज्जुस्सुआ विअ सउंदला। किं णु खु से तण्णिमित्तो अअं आतंको भवे?। [अनसूये! तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्युत्सुकेव शकुन्तला। किं नु खलु तस्यास्तन्निमित्तोऽयमातङ्को भवेत्?।

ग्रीष्मकाले शीतलाविति कामशास्त्रमर्यादा, तत्काले तु तयोस्तादृशोरपि स्तनयोस्तापाधिक्यं द्योतयितुं स्तनन्यस्तेत्युक्ति, न हृदि न्यस्तेति। शिथिलितं शिथिलं संजातं मृणालस्यैकं मुख्यं वलयं यत्र। सतापाच्छुष्कत्वेन शैथिल्यम्। 'एकम्' इत्यनेन वलयान्तरासहत्वं ध्वन्यते। 'एके मुख्यान्यकेवला' इत्यमरः। वलयस्य करनियमितस्थितेः प्राप्तत्वात्तद्ग्रहणम्। आसमन्ताद्बाधया पीडया सह वर्तमानम्। 'पीडा बाधा व्यथा' इत्यमर। आङा पीडाया सर्वाङ्गगतत्वं व्यज्यते। पीडायुक्तं न, अपि तु पीडया सह वर्तमानम्। एतेन कतिपयकालकलाजनितापि पीडा शरीरोत्पत्तिकालादारभ्यैव वर्तत इति ध्वन्यते। कीदृशम्? 'प्रियायाः' इति साभिप्रायम्। वपु किमपि लोकोत्तरचमत्कारि। कमनीयमिति विधेयम्। एतादृशसतापेऽपि सत्यतिशयशोभायुक्तमिति भाव। 'कामम्' इत्यनुमतौ। 'निकामानुमतौ कामम्' इत्यमर। मनसिज-निदाघप्रसरयोः काम-ग्रीष्मवेगयोस्ताप समस्तुल्यो यद्यपि तथापि ग्रीष्मस्य निदाघस्य युवतिष्वपराद्धं तापरूपम्। एवं लावण्यशेषतया परिदृश्यमानं सुभगं न तु नैवेति व्यतिरेक। 'तु स्याद्भेदेऽवधारणे' इत्यमरः। तेन कामकृत परिताप इति भाव। 'युवतिषु' इति सामान्यनिर्देशादप्रस्तुतप्रशंसा। ग्रीष्मस्येति सबन्धमात्रे षष्ठी। स्तस्तो इति किमकमेति छेकवृत्तिश्रुत्यनुप्रासा। अत्र यद्यपि कथितपददोषभिया ग्रीष्मापराद्धपदे उपात्ते, तथापि तन्नोचितम्। अत्रोद्देश्यविधेयभावविषयतया तदेव दातव्यं भवेत्। 'उदेति सविता ताम्रस्ताम्र एवास्तमेति च' (का प्र ७।२४४) इतिवत्। एतद्व्यतिरिक्तविषयत्वात् कथितपदस्यापवादविषयं परित्यज्यैवोत्सर्गस्य प्रवृत्तेः। तेन 'निदाघस्यैतादृग्युवतिषु न तापस्तु सुभगः' इति पठनीयम्। अस्मिन्पाठे षष्ठीदोषोऽपि परिहृत। अनसूये! तस्य राजर्षे प्रथमदर्शनादारभ्य पर्युत्सुकेव शकुन्तला। तस्या मिथ्यारोपभियेवशब्दोपादानम्।

पाठा०—१ 'पज्जस्सुअमणा सउंतला'. २ 'क्खण्णणिमित्तो'.

**अनसूया**—सहि! मंमवि[1] ईदिसी आसंका हिअअस्स। होदु; पुच्छिस्सं दाव णं। (प्रकाशम्) सहि! पुच्छिदव्वासि किंपि। बलवं[2] खु दे संदावो[3]। [सखि! ममापीदृश्याशङ्का हृदयस्य। भवतु; प्रक्ष्यामि तावदेनाम्। सखि! प्रष्टव्यासि किमपि। बलवान्खलु ते संतापः।]

**शकुन्तला**—(पूर्वार्धेन शयनादुत्थाय) हला! [4]किं वत्तुकामासि?। [हला! किं वक्तुकामासि?।]

**अनसूया**—हला सउंदले! अणब्भंतरा खु अम्हे मदणगदस्स वुत्तंतस्स। किंदु जादिसी इदिहासणिबंधेसु कामअमाणाणं अवत्था सुणीअदि[5] तादिसीं दे पेक्खामि, कहेहि किंणिमित्तं दे[6] संदावो। विआरं खु परमत्थदो अजाणिअ अणारंभो पडिआरस्स। [हला शकुन्तले! अनभ्यन्तरे खल्वावां मदनगतस्य वृत्तान्तस्य। किंतु यादृशीतिहासनिबन्धेषु कामयमानानामवस्था श्रूयते तादृशीं तव पश्यामि; कथय किंनिमित्तं ते संतापः। विकारं खलु परमार्थतोऽज्ञात्वाऽनारम्भः प्रतीकारस्य।]

---

किं नु खलु तस्यास्तन्निमित्तोऽयमातङ्को भवेत्। सखि! ममापीदृश्याशङ्का हृदयस्य। ममापि हृदयस्येति सबन्ध। 'हृदय'ग्रहणेन तस्मिन्स्फुरणमात्रमुक्त, न तु तत्त्वत। अत एवाशङ्कापदम्। भवतु। प्रक्ष्यामि तावदेनाम्। सखि! प्रष्टव्यासि किमपि। बलवान्खलु ते सताप। **पूर्वार्धेनेति**। शरीरस्येति शेष.। **'पूर्वेण'** इति पाठे शरीरार्धेनेत्यार्थम्। कि वक्तुकामासि?। अनभ्यन्तरास्तत्त्वेनाज्ञाः खलु निश्चितं वयं मदनगतस्य वृत्तान्तस्य। तथा मिथ्यारोपमियैवाज्ञानप्रकाशनपूर्वप्रश्न। कि तु यादृशीतिहासनिबन्धेषु कामयमनाना विरहिणामवस्था श्रूयते, तादृशीमवस्था तव पश्यामि। ज्ञानेऽपि श्रवणमेव कारणमुक्तम्। न तु स्वयमन्यस्य प्रत्यक्षतो दर्शनमवस्थायाः तस्मिन्सत्यस्य सत्यत्वसभावना स्यात्। किं च निरूपणेऽपि तत्सादृश्येनैव निरूपणं न तत्त्वेन। कथय किंनिमित्तं ते सताप। विकार खलु परमार्थतोऽज्ञात्वाऽनारम्भ प्रतीकारस्य। उक्तं च—

---

**पाठा०**—१ 'ममावि एरिसी आसंका। भोदु, पुच्छिस्सं। सहि'. २ 'बलीओ खु'. ३ 'राजा—वक्तव्यमेव,—शशिकरविशदान्यस्यास्तथा हि दुःसहनिदाघशंसीनि। भिन्नानि श्यामिकया मृणालनिर्माणवलयानि'. ४ 'भण जं वत्तुकामासि'. ५ 'तादिसी तुहत्ति तक्केमि'. ६ 'दे आआसो'.

**राजा**—अनसूयामप्यनुगतो मदीयस्तर्कः । नहि स्वाभिप्रायेण मे दर्शनम् ।

**शकुन्तला**—(आत्मगतम्) बलवं खु मे अहिणिवेसो । दाणिं वि सहसा एदाणं ण सक्कणोमि णिवेदिदुं । [बलवान्खलु मेऽभिनिवेशः। इदानीमपि सहसैतयोर्न शक्नोमि निवेदयितुम् ।]

**प्रियंवदा**—सहि सउंदले ! सुट्ठु एसा भणादि । किं अत्तणो आतंकं उवेक्खसि² । अणुदिअहं खु परिहीअसि अंगेहिं । केवलं लावण्णमई छाआ तुमं ण मुंचदि । [सखि शकुन्तले ! सुष्ठ्वेषा भणति । किमात्मन आतङ्कमुपेक्षसे ? । अनुदिवसं खलु परिहीयसेऽङ्गैः । केवलं लावण्यमयी छाया त्वां न मुञ्चति ।]

**राजा**—अवितथमाह प्रियंवदा । तथा हि,—

**क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं**
**मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा³ ।**

---

'व्याधेस्तत्त्वपरिज्ञानम्' इति । दर्शनं ज्ञानम् । बलवानधिकः खलु निश्चितं मेऽभिनिवेश आग्रहः । अकथन इत्यार्थम् । 'अभिनिवेश इति ग्रहे' इति गणपाठात् । इदानीमप्येतदवस्थायामपि । एतादृक्प्रश्नसद्भावे सत्यपीति 'अपि'शब्दार्थः । सहसाऽकस्मात् । अग्रेऽवश्यं वक्ष्यमाणत्वात्सहसेत्युक्तिः । एतयोरिति सख्योः । तत्रापि प्रियसख्योः । रहस्याभेदिन्योर्मदर्थं प्राणपरित्यागिन्योरित्यर्थान्तरसङ्क्रमितम् । शक्नोमि नितरां सामस्त्येन वेदितुम् । सुष्ठ्वेषा भणति । किमात्मन आतङ्कमुपेक्षसे ? । अनेन ममापि प्रश्नेऽभिप्रायोऽस्तीत्युक्तम् । अनुदिवस खलु परिहीयसेऽङ्गैः । पूर्वं स्वभावत एव कृशा, अधुना ततोऽपीति भाव । केवलं लावण्यमयी छाया त्वा न मुञ्चति । तथा कार्श्यं यथा प्रधानं लावण्यमेव दर्शनयोग्यं नावयवा इति भाव. । अवितथं सत्यम् । यस्तु प्रियं वदति स सत्यं न वदति । इयं प्रियंवदा सत्यवचनापीति विरोध । नाम्ना तदाभास । तया 'अङ्गैः परिहीयसे' इत्युक्तम् । अतो राजापि तदेव दर्शयति—**तथा हीति । क्षामेति** । क्षामक्षामौ कृशतरौ पूर्वं कृशावधुना कृशतरौ कपोलौ यत्र तदाननं मुखम् । उर काठिन्येन मुक्तौ स्तनौ यत्र तत् । इदमपि कार्श्यादेव । पूर्वं क्लान्तः कृश., अधुना क्लान्ततरो मध्य ,

---

**पाठा०—१** 'अनुसूययापि मदीयस्तर्कोऽनुगतः । शकुं०—बलीओ खु मे आआसो । ण सहसा सक्कणोमि'. २ 'सहि ! सुट्ठु खु एसा...किं एदं अत्तणो

शोच्या च प्रियदर्शना च मदनक्लिष्टेयमालक्ष्यते
पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥ ७ ॥

**शकुन्तला**—सहि ! कस्स वा अण्णस्स कहइस्सं ? आआसइत्तिआ दाणि वो भविस्सं । [सखि ! कस्य वाऽन्यस्य कथयिष्यामि ? । आयासयित्रीदानीं वां भविष्यामि ।]

**उभे**—अदो एव्व खु णिब्बंधो । सिणिद्धजणसंविभत्तं हि दुक्खं सज्झवेदणं होदि । [अत एव खलु निर्बन्धः । स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवति ।]

**राजा**—

पृष्टा जनेन समदुःखसुखेन बाला
नेयं न वक्ष्यति मनोगतमाधिहेतुम् ।

---

असौ पूर्वमेव विनतौ, अधुना प्रकाममत्यर्थं विनतौ । छविः पाण्डुरेति विरहकार्यादेव । शोच्या शोचनीया च प्रियदर्शना च हृद्यदर्शना चेति विरोध । शोच्यानुकम्पार्हेति तदाभासः । मदनेन क्लिष्टेति शोच्यत्वे हेतुत्वोपादानात् काव्यलिङ्गम् । केव ? माधवी वासन्ती लतेव । कीदृशी ? शोष्यतेऽनेनेति शोषण, 'करणाधिकरणयोश्च' (पा ३।३।११७) इति ल्युट् । तेन पत्राणा शोषणेन मरुता पश्चिमवायुना स्पृष्टा । स तु तस्या अपि शोषक इति क्लिष्टत्वम् । 'माधवी'शब्देन प्रियदर्शनत्वमुक्तं, लतामात्रस्यैव कार्श्यसंभवात् । उपमानुप्रासौ । शार्दूलविक्रीडितं वृत्तम् । 'वक्त्रं क्षामकपोलयुग्मृशमुरः' इति **'क्लान्ततरोंऽसयुग्ममधिकं नम्रं छविः'** इति पाठ उद्देश्यप्रतिनिर्देशप्रक्रमभङ्गः प्रकामविशब्दयोरर्थपौनरुक्त्यं च परिहृतं भवति । 'संस्पृष्टा दलशोषणेन मरुता सा माधवीव प्रिया' इति पाठ इव प्रयोगप्रक्रमभङ्गो लताशब्दस्यावकरत्वं च परिहृतं भवति । सखि ! कस्य वाऽन्यस्य कथयिष्यामि ? आयासयित्री युवयोरिदानी भविष्यामि, अतो न कथयामीत्यर्थः । अत एव खलु निर्बन्ध । यदेवाकथने कारणत्वेन निबद्धं तदेव कथने हेतुत्वेनोपात्तमिति व्याघातालंकारः । 'सौकर्येण कार्यं विरुद्धं क्रिया च' इति लक्षणात् । स्निग्धजनसंविभक्तं हि दु.खं सह्यवेदनं भवतीत्यर्थान्तरन्यासः । **पृष्टेति** । जनेनाधिहेतुं मनःपीडाकारणं पृष्टा । 'पुंस्याधिर्मानसी व्यथा' इत्यमर । इयं बाला मनोगतं सत्यं

---

**पाठा०**—१ 'मदनग्लानेयमालक्ष्यते'. २ 'कधइस्सं । किंतु आआसइत्तिआ वो भविस्सं'. ३ 'सहि ! अदो ज्जेव णो'. ४ 'संविभत्तं खु दुक्खं सज्झवेअणं भोदि'.

**दृष्टो निवृत्य बहुशोऽप्यनया सतृष्ण-**
**मत्रान्तरे श्रवणकातरतां गतोऽस्मि ॥ ८ ॥**

**शकुन्तला**—सहि! जदो पहुदि मम दंसणपहं आअदो सो तवोवणरक्खिदा रायसी, तदो आरहिअ तग्गदेण अहिलासेण एतद्वत्थम्हि संवुत्ता। [सखि! यतः प्रभृति मम दर्शनपथमागतः स तपोवनरक्षिता राजर्षि, तत आरभ्य तद्गतेनाभिलाषेणैतदवस्थास्मि संवृत्ता।]

**राजा**—(सहर्षम्) श्रुतं श्रोतव्यम्;

**स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः।**
**दिवस इवार्धश्यामस्तपात्यये जीवलोकस्य ॥ ९ ॥**

**शकुन्तला**—तं जइ वो अणुमदं ता तह वट्टह जह तस्स राएसिणो अणुकंपणिज्जा होमि। अण्णहा अवस्सं सिंचध मे तिलोदअं। [तद्यदि वामनुमतं तदा तथा वर्तेथां यथा तस्य राजर्षेरनुकम्पनीया भवामि। अन्यथाऽवश्यं सिञ्चतं मे तिलोदकम्।]

न वक्ष्यतीति न अपि तु वक्ष्यत्येव। एतदर्थमेव नञ्द्वयम्। बालेति कैतवानभिज्ञत्वं ध्वन्यते। सत्यवचने हेतुगर्भं विशेषणमाह—**समदुःखसुखेनेति**। तेन काव्यलिङ्गम्। हि निश्चितमनया तरलायतलोचनया सतृष्णं साभिलाषं यथा स्यादेवं निवृत्य परावृत्य बहुशो दृष्टोऽप्यहमत्रान्तरेऽस्मिन्नवसरे तद्वच श्रवणे कातरता भीतिं प्राप्तोऽस्मि। किं वक्ष्यतीति भयमित्यर्थः। नवा नवेति मतमतेति (गतगतेति) छेकवृत्तिश्रुत्यनुप्रासाः। वसन्ततिलका वृत्तम्। सखि! यतः प्रभृति मम दर्शनपथमागतः स तपोवनरक्षिता राजर्षिस्तत आरभ्य तद्गतेनाभिलाषेणैतदवस्थास्मि संवृत्ता। **स्मर इति**। यस्तापहेतुः स एव निर्वापयितेति विरोधाभासः। वस्तुतस्तु–तद्गतः स्मरस्तापहेतुर्नायिकागतो निर्वापयितेत्यर्थः। अत एव मे प्रतिकूलं दैवं स्मरेण मा तापयतीयं तेनैव मा निर्वापयतीति प्रतीतेर्व्यङ्ग्यो व्याघातालङ्कारः। 'यथासाधितस्य तथैवान्येनाऽन्यथाकरणं व्याघातः' इति तल्लक्षणात्। तत्रोपमामाह—**दिवस इवेति**। तपात्यये निदाघात्यये। प्रावृडारम्भ इत्यर्थः। 'उष्ण ऊष्मागमस्तपः' इत्यमरः। अर्धश्यामोऽर्धे मेघाक्रान्तत्वाच्छ्यामः सच्छायः, पूर्वाह्णे सातपोऽपरत्र सच्छायो वा दिवसो जीवलोकस्य प्राणिवर्गस्य तापयिता निर्वापयिता च यथा भवति। वृत्त्यनुप्रासः। तद्यदि युव-

**पाठा०**—१ 'विवृत्य'. २ 'सहि! जदो'. ३ 'सो तवोवणरक्खिदा राएसी मम दंसणपधं गदो—(इत्यर्धोक्ते लज्जां नाटयति) उभे—कधेदु पिअसही। शकुं०—तदो पहुदि तग्गदेण अहिलासेण एदावत्थ म्हि संवुत्ता। उभे—दिट्ठिआ इदाणिं दे अणुरूवे वरे अहिणिवेसो। अध वा, साअरं उज्झिअ कहिं वा महाणदीए पविसिदव्वं?।'. ४ 'यच्छ्रोतव्यम्'. ५ 'दिवस इवाभ्रश्यामस्तपा°'. ६ 'तदो तथा पअत्तध जधा तस्स'. ७ 'अण्णधा सुमरेध मं'.

राजा—[1]संशयच्छेदि वचनम् ।

प्रियंवदा—(जनान्तिकम्) अणसूए ! दूरगअमन्महा अक्खमा इअं काल[2]हरणस्स । जस्सि बद्धभावा एसा सो ललामभूदो पोरवाणं । ता जुत्तं से अहिलासो अहिणंदिदुं । [अनसूये ! दूरगतमन्मथाक्षमेयं कालहरणस्य । यस्मिन्बद्धभावैषा स ललामभूतः पौरवाणाम् । तद्युक्तमस्या अभिलाषोऽभिनन्दितुम् । ]

अनसूया—तह जह भणसि । [तथा यथा भणसि । ]

प्रियंवदा—(प्रकाशम्) सहि ! दिट्ठिआ अणुरूवो दे अहिणिवेसो । साअरं उज्झिअ कहि वा महाणई ओदरइ ? को दाणिं सहआरं अंतरेण अदिमुत्तलदं पल्लविदं सहेदि ? । [सखि ! दिष्ट्यानुरूपस्तेऽभिनिवेशः । सागरमुज्झित्वा कुत्र वा महानद्यवतरति ? क इदानीं सहकारमन्तरेणातिमुक्तलतां पल्लवितां सहते ? ]

---

योरनुमतं तदा तथा वर्तेथा यथा तस्य राजर्षेरनुकम्पनीया भवामि । अन्यथाऽवश्यं सिञ्चतं मे तिलोदकम् । अनेन शमो नामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु— 'तस्योपशमनं यत्तु शमन तदुदाहृतम्' इति । दूरगतमन्मथाऽक्षमा कालहरणस्य । अत्राद्यावस्थात्रयं प्रथममेवोक्तम् । तनुताऽनन्तरमेवोक्ता । 'किं वीजयतो मा सख्यौ ?' इति विषयनिवृत्ति । एतयोरग्रेऽभिलाषकथनादेव त्रपानाश उक्त । परिहार्यावस्थात्रयमेवावशिष्टमिति दूरगतमन्मथत्वम् । तथा च **कद्रये**—'नयनप्रीति· प्रथमं चित्तासङ्गस्ततोऽर्थसकल्प । निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाश· ॥ उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्यु ' इति । ननु पूर्वमभिलाषचिन्तनेत्यादिदशावस्था उक्ता. । अधुना तु नयनप्रीत्यादय उक्ता इति पूर्वापरानाकलनादिति चेत्—न, आचार्यमतभेदमात्रत्वात् । अत एवोक्तम्—'अभिलाषाद्यवस्थानां चक्षुःप्रीत्यादिकास्वपि । संभवादितरत्रापि तासा स्यादैक्यमेव तत् ॥ चिरतनप्रसिध्द्या तु विविच्य कथिता इमा.' इति । यस्मिन्बद्धभावा सानुरागैषा स ललामभूत प्रधानं पौरवाणाम् । तस्माद्युक्तमस्या अभिलाषोऽभिनन्दितुम् । युक्तमिति प्राकृतत्वाल्लिङ्गविपर्ययः । प्रथमायां वा द्वितीया । यथा भणसि तत्तथैवेत्यर्थ । दिष्ट्या दैवेनानुरूपस्तेऽभिनिवेश. । सागरमुज्झित्वा कुत्र वा महानद्यवतरति ? क इदानी सहकारमन्तरेणातिमुक्तलता पल्लविनी सहते ?

---

**पाठा०—१ 'विमर्शच्छेदि'. २ '°हरणस्स । अनु०—पिअंवदे ! को उवाओ भवे जेण अविलंबिदं णिहुदं च सहीए मणोरधं संपादेमो ।'.**

**राजा**—किमत्र चित्रं यदि विशाखे शशाङ्कलेखामनुवर्तेते ? ।

**अनसूया**—को उण उवाओ भवे जेण अविलंबिअं णिहुअं अ सहीए मणोरहं संपादेम्ह ? । [ कः पुनरुपायो भवेद्येनाविलम्बितं निभृतं च सख्या मनोरथं संपादयावः ? । ]

**प्रियंवदा**—णिहुअंत्ति चिंतणिज्जं भवे । सिग्घंत्ति सुअरं । [ निभृतमिति चिन्तनीयं भवेत् । शीघ्रमिति सुकरम् । ]

**अनसूया**—कहं विअ ? [ कथमिव ? ]

**प्रियंवदा**—णं सो राएसी इमस्सिं सिणिद्धदिट्ठीए सूइदाहिलासो इमाइं दिअहाइं पज्जाअरकिसो लक्खीअदि । [ ननु स राजर्षिरेतस्यां स्निग्धदृष्ट्या सूचिताभिलाष एतान्दिवसान् प्रजागरकृशो लक्ष्यते । ]

**राजा**—सत्यमित्थंभूत एवास्मि । तथा हि,–

> इदमशिशिरैरन्तस्तापाद्विवर्णमणीकृतं
> निशि निशि भुजन्यस्तापाङ्गप्रसारिभिरश्रुभिः ।

---

स्वीयत्वेन परिगृह्णातीत्यर्थः । मालादृष्टान्तः । पूर्वत्र नायिकायाः कर्तृत्वमुक्तम् । उत्तरत्र नायकस्येति विशेषः । द्विदैवत्वाद्विशाखयोर्द्वित्वम् । युक्तमेवैतयोरेतस्या अनुमोदनमिति भावः । एतदभिप्रायमेव विशाखयोर्द्वित्वम् । शशिलेखात्वेन स्त्रीलिङ्गनिर्देशश्च । विशाखे शशाङ्कलेखा चाप्रस्तुता । तासा वचनादप्रस्तुतप्रशंसा । तया च सख्योः शकुन्तलायाश्च प्रकृताना योग्यसमागमत्वेन समालंकारो व्यज्यते । कः पुनरुपायो भवेद्येनाविलम्बितं शीघ्रं निभृतं गुप्तं च सख्या मनोरथं सपादयावः ? । निभृतमिति चिन्तनीयं भवेत् । शीघ्रमिति सुकरम् । कथमिव ? ननु स राजर्षिरेतस्या स्निग्धदृष्ट्या सूचिताभिलाष एतान्दिवसान्प्रजागरकृशो लक्ष्यते । उक्तस्य पुरुषत्वाद्विशेषतो राजत्वात्तत्रापि स्वयं दुष्यन्त इति विषयनिवृत्तित्रपानाशलक्षणे अवस्थे एनं प्रति न वर्णिते, अधीरत्वेनानौचित्यप्रसङ्गात् । **इदमिति ।** निशि निशि प्रतिरात्रम् । अनेन दर्शनात्प्रभृत्यद्य यावदेतदवस्था द्योतिता । भुज उपधानीकृते न्यस्तो योऽयमपाङ्गो नेत्रान्तस्तत्र प्रसर्तुं शीलं येषा

---

**पाठा०–१ 'अशिशिरतरैरन्तस्तापैर्विवर्ण°'. २ 'प्रवर्तिभिरश्रुभिः'.**

अनभिलुलितज्याघाताङ्कं मुहुर्मणिबन्धनात्
कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्यते ॥ १० ॥

**प्रियंवदा**—( विचिन्त्य ) हला ! मअणलेहो से करीअदु । इमं देवप्पसादस्सावदेसेण सुमणोगोविदं करिअ से हत्थअं पावइस्सं । [ हला ! मदनलेखोऽस्य क्रियताम् । इमं देवप्रसादस्यापदेशेन सुमनोगोपितं कृत्वा तस्य हस्तं प्रापयिष्यामि । ]

**अनसूया**—रोअइ मे सुउमारो पओओ । किं वा सउंदला भणादि ? । [ रोचते मे सुकुमारः प्रयोगः । किं वा शकुन्तला भणति ? । ]

**शकुन्तला**—को णिओओ विकप्पीअदि ? । [ को नियोगो विकल्प्यते ? । ]

---

तैः । अत्र प्रजागराच्छय्याया परिवृत्तिविवर्तनै सत्यप्युपधाने तस्य निष्फलत्वाद्भुजोपधानत्वमुक्तम् । अन्तस्तापादशिशिरैरुष्णैरश्रुभिर्विवर्णा मणयो यत्र तत् । अविवर्णमणि विवर्णमणि सपादितं विवर्णमणीकृतम् । अनेनापि दीर्घकालमियमवस्था व्यज्यते । स्वभावत एव वलयस्य शिथिलत्वे कामावस्थाकृततनुताप्रतीतिर्न भवतीति तस्य स्वभावस्थितिसूचकं विशेषणमाह । अनभिलुलितोऽस्पृष्टो ज्याघाताङ्को येन तत् । तदुपरिभागे गाढत्वेन स्थितत्वात् । एतादृशं कनकवलयम् । कनकेति शैत्यद्योतनाय । 'वलयम्' इत्येकवचनेन विरहित्वात्सर्वाभरणपरित्यागो द्योत्यते । स्रस्तं स्रस्तं वारंवारं पाणिमूलमागतं कार्श्यात् । मणेर्बन्धनमत्र मणिबन्धनं भुजस्य पाणेश्च संधिः । तस्मान्मया राज्ञा दुष्यन्तेनापि सता मुहुर्वारंवारं न तु सकृत्प्रतिसार्यत ऊर्ध्वं नीयते । स्वभावोक्तिः । अथ च प्रजागरत्वे कृशत्वे च कारणे वक्तव्ये यत्तयोरश्रुभिर्विवर्णो बन्धनान्निःसार्यत इत्युक्तिः स लेशः । हरिणी वृत्तम् । मदनलेखस्तस्यै क्रियताम् । इमं मदनलेखं देवप्पसादस्सावदेसेण देवप्रसादस्यापदेशेन व्याजेन सुमनोगोपितं पुष्पगोपितं कृत्वा तस्य हस्तं प्रापयिष्यामि । सुमनोगोपितं कृत्वा देवप्रसादव्याजेन हस्त प्रापयिष्यामीत्यन्वयः । विरहिण्या स्वावस्थासूचको निबद्धो लेखो मदनलेख इत्युच्यते । रोचते मे सुकुमारः प्रयोग । किं वा शकुन्तला भणति ? । को नियोग आज्ञा विकल्प्यते विचार्यते ? दातुमिति शेषः । तेन

---

**पाठा०**—१ 'अनतिलुलितज्याघाताङ्कान्'. २ 'हला अणसूए ! मअणलेहो दाणिं से'. ३ 'तं अहं सुमणोगोविदं कदुअ देवदासेसावदेसेण तस्स रण्णो हत्थं'. ४ 'सहि ! रोअदि मे'. ५ 'णिओओ वि विक०'

---

**टिप्प०**—1 मेघदूते( १।२ )ऽपीद 'कनकवलयभ्रंशरिक्तप्रकोष्ठ' इति विरहजनितकार्श्यवर्णन लभ्यते ।

**प्रियंवदा**—तेण हि अत्तणो [1]उवण्णासपुव्वं चिंतेहि दाव ललिअपदबंधणं। [तेन ह्यात्मन उपन्यासपूर्वं चिन्तय तावल्ललितपदबन्धनम्।]

**शकुन्तला**—हला! [2]चिंतेमि अहं। अवहीरणभीरुअं पुणो [3]वेवइ मे हिअअं। [हला! चिन्तयाम्यहम्। अवधीरणाभीरु पुनर्वेपते मे हृदयम्।]

**राजा**—(सहर्षम्)

**अयं स ते तिष्ठति संगमोत्सुको**
**विशङ्कसे भीरु! यतोऽवधीरणाम्।**
**लभेत वा प्रार्थयिता न वा [4]श्रियं,**
**श्रिया दुरापः कथमीप्सितो भवेत्?॥ ११॥**

---

ह्यात्मन उपन्यासपूर्वं चिन्तय तावल्ललितपदबन्धनम्। ललितं च तत् पदबन्धनं चेतीदमेव विशेष्यम्। केषुचित्पुस्तकेषु **'ललियपदबंधणं छलियं'** इति पाठः। छलितकमिस्रर्थे। तदुक्तं **सरस्वतीकण्ठाभरणे**—(२।१४२) 'यदाङ्गिकैकनिर्वर्त्यमुज्झितं वाचिकादिभिः। नर्तकैरभिनीयेत प्रक्ष्वेडो वल्लिकादि यत्॥ तल्लास्यं ताण्डवं चैव छलितम्' इत्यादिना। 'लास्यच्छलितशम्पादि प्रेक्ष्यार्थम्' (१।३९) इति **काव्यादर्शेऽ**पि। छलितलक्षणं यथा—'रतिक्रोधोत्साहभावप्रधानं छलितं मतम्' इति। चिन्तयाम्यहम्। अवधीरणा तिरस्कारस्तेन भीरु पुनर्मे वेपते हृदयम्। मे हृदयं पुनर्वेपत इति संबन्धः। क्रियाया विशेषणं हेतुत्वेन योज्यम्। **अयमिति**। हे भीरु! अनेन तिरस्कारशङ्कासंभावना व्यज्यते। यतो यस्मान्मल्लक्षणाज्जनादवधीरणा तिरस्कारं विशङ्कसे। स्यादवधीरणाशङ्का यदि केवलं मत्प्रार्थनैव त्वदीयप्राप्तिहेतुः स्यादिति भावः। सोऽयमिति प्रत्यक्षेण निर्दिशति। सुन्दरीभियं प्रति विधेर्हेतुत्वे योज्यम्। अयं ते तव संगमोत्सुकस्तिष्ठतीति विशिष्टस्य विधेयत्वम्। त्वत्प्रार्थितः कथं दुर्लभो भविष्यामीत्याशयः। पूर्वापरचरणयोर्व्यत्ययपाठेनोद्देश्यप्रतिनिर्देश्यप्रक्रमभङ्गः परिहरणीयः। प्रार्थयिता पुरुषः श्रियं लभेत न लभेत वा, श्रिया पुनरीप्सितः प्रार्थितः कथं दुरापो दुर्लभो भवेत्? अयमर्थान्तरन्यासः। व्यत्ययपठितस्य पूर्ववाक्यस्य पूर्ववाक्यं समर्थकम्, तादृगुत्तरस्योत्तरं समर्थकमिति विवेकः। नन्वत्र सामान्यस्य समर्थकत्वं वक्तव्यम्।

---

**पाठा०**—१ 'उवण्णासाणुरूवं चिंतेहि किं पि ललिदोवणिबंधणं'. २ 'चिंतइस्सं'. ३ 'वेवदि मे हिअअं'. ४ 'श्रियो'.

सख्यौ—अत्तगुणावमाणिणि ! को दाणिं सरीरणिव्वावत्तिअं सारदिअं जोसिणिं पडंतेण वारेदि ? । [आत्मगुणावमानिनि ! क इदानीं शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन वारयति ? ।]

शकुन्तला—(सस्मितम्) णिओइआ दाणिं म्हि । [नियोजितेदानीमस्मि ।] (इत्युपविष्टा चिन्तयति)

राजा—स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि । यतः,—

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
कण्टकितेन प्रथयति मय्यनुरागं कपोलेन ॥ १२ ॥

---

'श्री'शब्दस्य विशेषवाचित्वादत्र कथं तन्निर्वाह इति चेत्,—उच्यते, 'लक्ष्मीसरस्वतीधीत्रिवर्गसंपद्विभूतिशोभासु । उपकरणवेषरचनागुणेषु सरलद्रवे च कथिता श्री ॥' इति **व्याडिकोशा**दत्रातिशयोक्त्या शोभाभारतीलक्ष्मीधीवेषविरचनाविभूतित्रिवर्गसंपत्तीनामेकत्वेनाध्यवसानात् सामान्यवाचकत्वम् । अतिशयोक्तेः सर्वालंकारमूलत्वमाकरेषु प्रसिद्धम् । श्रुतिवृत्तिच्छेकानुप्रासाः । 'कथं न लभ्येत नरः श्रियार्थितः' इति पठित्वा पर्यायप्रक्रमभङ्गः परिहरणीयः । वंशस्थं वृत्तम् । 'आत्मगुणावमानिनी'इति त्वद्गुणैरेव स क्रीतः, अवधीरणाशङ्कापि केति भावः । क इदानी शरीरनिर्वापयित्री शरीरसुखदायिनीं शारदी 'शरत्कालसबन्धिनी'मित्यतिशयेनाह्लादकारित्वं ध्वनितम् । ज्योत्स्ना पटान्तेन वारयति । शकुन्तलावाक्यं प्रति दृष्टान्त । नियोजितेदानीमस्मि । कामलेख इत्यार्थम् । विस्मृतो निमेषो येन तेन, निर्निमेषेणेत्यर्थः । एतदर्थमेव चक्षुषो विशेष्यस्योपादानम् । प्रिया न स्त्रीमात्रम् । दृष्टचरीमप्यनेकश इति ज्ञेयम् । यदवलोकयामि तत्स्थाने युक्तं खलु । अथवा,—स्थाने प्रदेशविशेषे । **उन्नमितेति** । एतादृश्या पूर्वमदर्शनादनिमेषदर्शनं युक्ततरमिति भाव । पदानि सुप्तिङन्तानि रचयन्त्या अस्याः । उन्नमितोत्क्षिप्तैका भ्रूलता यत्र । इदं पदं देयमिदं वेति वितर्के । तस्याः प्रयोगात्तदानन कण्टकितेन रोमाञ्चितेन । 'रोमहर्षेऽपि कण्टकः' इत्यमर । कपोलेन यैवैका भ्रूलतोन्नमिता तद्दिक्स्थकपोलस्यैव रोमाञ्चितत्वमित्येकवचनम् । मयीति स्वस्याधिकरणत्वेन धन्यता सुभगमन्यता च ध्वनयति । अनुरागं प्रीतिविशेषं प्रथयति शंसति ।

---

पाठा०–१ 'अपि च–अयं स यस्मात्प्रणयावधीरणामशङ्कनीयां करभोरु ! शंकसे । उपस्थितस्त्वं प्रणयोत्सुको जनो न रत्नमन्विष्यति मृग्यते हि तत् । सख्यौ–अइ अत्त°'. २ 'को णाम सरीर°'. ३ 'जोण्हं आदवत्तेण वारइस्सदि'. ४ 'विस्मृतनिमेषेण'. ५ 'पुलकाचितेन कथयति'.

**शकुन्तला**—हॅला! चिंतिदं मए गीदवत्थु। णॅ खु सण्णिहिदाणि उण लेहणसाहणाणि। [हला! चिन्तितं मया गीतवस्तु। न खलु संनिहितानि पुनर्लेखनसाधनानि।]

**प्रियंवदा**—इॅमस्सिं सुओदरसुउमारे णलिणीपत्ते णहेहिं णिक्खित्तवण्णं करेहि। [एतस्मिञ्शुकोदरसुकुमारे नलिनीपत्रे नखैर्निक्षिप्तवर्णं कुरु।]

**शकुन्तला**—(यथोक्तं रूपयित्वा) हॅला! सुणुह दाणिं संगदत्थं ण वे त्ति। [हला! श्रृणुतमिदानीं संगतार्थं न वेति।]

**उभे**—अॅवहिद म्ह। [अवहिते स्वः।]

---

अयमन्यस्मिन्नन्यधर्माधानलक्षणः समाधिर्नाम गुणः। तत्त्वं न तिरस्कृतवाच्यस्य ध्वनेर्विषयः। यथा—'वदति बिसिनीपत्रशयनम्' इति। उक्तं च **ध्वनिकृता** (ध्वन्या० १।१९)—'निरुढा विषयेऽन्यत्र शब्दाः स्वविषयादपि। लावण्याद्याः प्रयुक्तास्ते न भवन्ति पदं ध्वनेः॥' इति। रतेरेव षष्ठ्यवस्थानुरागः। उक्तं च **सुधाकरे**—'अङ्कुरपल्लवकलिकाप्रसूनफलभोगभागियं क्रमशः। प्रेमा मानः प्रणयः स्नेहो रागोऽनुराग इत्युक्तः॥' इति। अनुरागलक्षणं तत्रैव—'राग एव स्वसंवेद्यदशाप्राप्त्या प्रकाशितः। यावदाश्रयवृत्तिश्चेदनुराग इतीरितः॥' इति। भोगस्योत्तरदक्षिणभावित्वादपि स जात इवेति मत्वैतादृश्युक्तिः। जातिरलंकारोऽनुप्रासश्च। रोमाञ्चितकपोलान्यथानुपपत्त्यानुरागप्रथनादर्थापत्त्यलंकारः। केचिदनुमानालंकारमाहुः। साधकबाधकप्रमाणाभावादन्ये संदेहसंकरमाहुः। भ्रूलतमित्युपमा च, उन्नमितस्य साधकत्वात्। भ्रूलक्षणं यथा—'उच्चि(त्सि)यासंग (?) तान्यर्थाक्रमेण सह वान्यथा। स्त्रीणां कोपे वितर्के च दर्शने श्रवणे निजे॥ भ्रूलीलाहेलयोश्चैव कार्योत्क्षिप्ता विचक्षणैः॥' इति **संगीतरत्नाकरे**। चिन्तितं मया गीतवस्तु। न खलु संनिहितानि पुनर्लेखनसाधनानि। एतस्मिञ्छुकोदरसुकुमारे नलिनीपत्रे नखैर्निक्षिप्तवर्णं कुरु। श्रृणुतमिदानीं संगतार्थं न वेति। अवहिते स्वः।

---

**पाठा०**—१ 'हला चिंतिदा मए गीदिआ'. २ 'असंणिहि ..लेहसाहणाइं'. ३ 'णं इमस्सिं...णलिणीवत्ते पतच्छेदभत्तीए णहेहिं आलिहीअदु'. ४ 'सुणध दाव'. ५ 'अवहिदाओ म्ह'.

**शकुन्तला**—( वाचयति )

**[1]तुज्झ ण आणे हिअअं मम उण कामो दिवावि रत्तिम्मि ।**
**[2]णिग्घिण ! तवइ बलिअं तुइ वुत्तमणोरहाइं अंगाइं ॥ १३ ॥**

**[ तव न जाने हृदयं मम पुनः कामो दिवापि रात्रावपि ।**
**निर्घृण ! तपति बलीयस्त्वयि वृत्तमनोरथान्यङ्गानि ॥ ]**

**तुज्झेति** । तव न जाने हृदयम्, मम पुनः कामो दिवापि रात्रावपि । निर्घृण निष्कृप ! तापयत्यधिकम् । त्वयि वृत्तमनोरथानीति हेतुत्वेन योज्यम् । अङ्गानीति बहुवचनेन मार्दवातिशयो ध्वन्यते । तव हृदयमिति विशेषोपादानात्स्वस्योत्कण्ठातिशयस्तस्य तदभावो ध्वन्यते । अथ च रक्तं तापयति तदा न जाने किमयं यद्यप्येतादृशतापेऽपि न द्रवति । एतदनुसंधायैव निष्कृपेति सबुद्धि । सा चेत्स्याद्द्रुतमेव स्यात्तत्स्वभावत्वात्तस्या इति दुःखात्परुषोक्तिः । अर्थापत्त्यलंकार । अथ च 'हृदयं मानसोरसो' इति विश्वः । तेन तव हृदयं गोपुरकपाटायमानं रिपुदनुजनिवहशरशतैरप्यभेद्यमेवंभूतमहं न जाने, अपि तु जाने, आप्तजनवचनात् । अत एव मेऽङ्गानि सर्वाणि दिवापि रात्रावपि तापयति कामः । तव तु वक्षोमात्रमपि न तापयितुं शक्तः । यदि तापयेत्तदा निर्घृण निर्जुगुप्स ! निदाघसमयशीतलतरमत्कुचपरिरम्भणायागच्छेः । 'घृणा जुगुप्साकृपयोः' इति विश्वः । तादृशं तव वक्ष आलिङ्गितुमिच्छामीत्यभिलाषोक्तिः । अनुमानालंकारः । अयं मल्लक्षणो जनस्तव हृद्धृदयरूपः । रूपकम् । कामः पुनर्ममाङ्गानि यत्तापयति तन्न जान इति प्रश्नकाकुः, वृथैव तापयतीत्यर्थः । ते स्प्रष्टुमप्यशक्येति भावः । समासोक्तिः । त्वं त्वेतादृशो निष्कृपो यद्धृदयरूपामपि मा न परित्रायसे । अथ चायं जनस्तव हृत्कामः पुनर्ममाङ्गानि यत्तापयति तदहं न जाने, अपि तु जाने, त्वत्कान्तिजित इत्यर्थः । तेन तव हृदयं कठोरत्वात्तापयितुं शक्तो न । अतस्तद्रूपाया ममाङ्गानि तापयतीति भाव इति चाटूक्तिः । प्रत्यनीकालंकारः । 'प्रतिपक्षप्रतीकाराशक्तौ तदीयतिरस्कारः प्रत्यनीकम्' इति तल्लक्षणात् । त्वं त्वेतादृशो निर्घृणो यस्त्वदर्थे पीड्यमानामपि मा न रक्षसीति । अथ च त्वयि विषये वृत्ता जाता मनोरथा येषां तानि । आलिङ्गनं भुजयोर्मनोरथः, त्वत्कान्तिझरप्रवाहपानं तु चक्षुषोः, त्वद्वचनामृतसरसीनिमज्जनं च श्रवणयोः, त्वन्मुखसरोजश्वासाघ्राणं नसोः, शशाङ्ककोमलत्वादङ्कारोहणं नितम्बस्य, त्वत्करतलमेलनं कुचयोरित्यादि । एवं-

**पाठा०—१ 'मअणो दिवा अ रत्तिं च'. २ 'णिक्किव ! दावइ बलिअं तुह हुत्तमणोरहाइ अंगाइ'.**

**टिप्प०—1** महाभारते शकुन्तलया दुष्यन्तेन स्वतनुजस्य यौवराज्यपदप्रतिज्ञाङ्गीकारे एव स्वात्मसमर्पणमनुष्ठीयते, अत्र त्वकृत्रिमप्रेम्णैवाभिसरणं दृश्यते इति सहृदयहृदयग्राहिणी साहित्यचातुरीयं कविकुलतिलकस्य कालिदासस्य ।

**राजा**—( सहसोपसृत्य )

**तपति तनुगात्रि ! मदनस्त्वामनिशं मां पुनर्दहत्येव ।**
**ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः ॥ १४ ॥**

**सख्यौ**—( सहर्षम् ) साअदं अविलंबिणो मणोरहस्स ।
[ स्वागतमविलम्बिनो मनोरथस्य । ]

( शकुन्तलाऽभ्युत्थातुमिच्छति )

---

भूतमनोरथानि ममाङ्गानि कामोऽधिकं तापयति । त्वं त्वेवं निष्कृपो यत्स्वभक्तान्येवं परेण ताप्यमानान्यपि सहसे तत्तव हृदयं न जाने क्षत्रहृदयमिति न जाने । परैः पीड्यमानं क्षत्रिय परित्रायते, स्वभक्तं तु सुतरामित्युपालम्भः । कामो ममाङ्गान्यत्यर्थमधिकं तापयति, तव पुनर्हृदयमत्यर्थं न तापयतीत्यहं जाने । यतस्त्वं दिवसे निष्कृपो लोकादिभयात् । एवं रात्रावपि निष्कृपोऽसि यदभिसरणं नाकार्षीरिति चोपालम्भ । अथ च त्वं तु केनाभिप्रायेण व्यवहरसीति तव हृदयं लक्षणया हृदयाभिप्रायं न जाने । काम पुनर्मम मत्सबन्धी सुहृदिति भावः । यत्त्वयि वृत्तमनोरथान्यङ्गानि तापयति किमिति तस्मिन्नीदृशे शठेऽनुरक्तासीति तापं दुःखं दत्त्वा शिक्षयतीति वोपालम्भः । एवमकृतार्थरतिं प्रत्येतादृशोपालम्भादाना-दुन्मादावस्थाप्युक्ता । अथ च निश्चयेन कृपा यस्य तस्य संबोधनम् । हे कृपालो ! यस्त्वमङ्गुलीयकं दत्त्वा सख्या सकाशान्मा मोचितवानसि तस्य तव हृदयमहं न जाने । अपि तु जानेऽत्यन्तं दयाशीलमिति । 'निर्निश्चयनिषेधयो.' इत्यमर । मम पुनर्मदीयं हृदयं न जाने । तत्तु त्वयि वर्तते । तदभावाद्धृदयशून्याहं वर्ते इति भाव. । केवलं तदेव त्वयि गतमिति न, अपि त्वङ्गान्यपि त्वयि जातमनो-रथानि । केवलमङ्गान्येवेति न, अपि तु कामोऽभिलाषोऽपि त्वयि विषये दिने रात्रावधिकं तपति वर्धते लक्षणया । 'कामः स्मरेऽभिलाषे च' इति विश्व । इत्य-नुनयोक्तिः । तेन मदीयं बाह्यमाभ्यन्तरं न किंचिदपि मत्संबद्धमिति शीघ्र-मागच्छेति भावः । श्लेषानुप्रासौ । क्वचित् । **'रत्तिं पि'** इति पाठः । तदा रात्रिमपीत्यर्थ. । 'कालाध्वनोरत्यन्तसंयोगे' (पा. २।३।५) इति द्वितीया । 'णिग्घिण' इत्यनेन वज्राङ्गमुपक्षिप्तम्—'विरूक्षवचनं यत्तु वज्रमित्यभिधीयते' इति **भरतोक्तेः** । लेखनामकं सध्यङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'विवक्षितार्थ-कलिता पत्रिका लेख उच्यते' इति । **तपतीति ।** तनूनि कृशानि गात्राणि यस्यास्तस्याः संबोधनम् । मदनस्त्वा तपति तत्रार्थे हेतु· संबोधनपदार्थ· । कृश-गात्रत्वं स्त्रीत्वं चेति काव्यलिङ्गम् । तनुगात्रीति पुनरुक्तवदाभासश्च । मा पुन· पुरुषं कठिनशरीरमनिशं सर्वदा, अथ च निशाव्यतिरिक्तसमयेऽपि दहत्येव । किमपिना-वशेष्यार्थः क्रमेण हेतुत्वेन योज्यः । दृष्टान्तोऽनुप्रासश्च । मदयतीति मदनो हर्षद., स कथं तपति दहतीति विरोधाभासश्च । स्वागतमविलम्बिनो मनोरथ-

---

पाठा०—१ 'जधा समीहिदफलस्स अवि°'.

राजा—अलमलमायासेन,—

संदष्टकुसुमशयनान्याशुक्लान्तबिसभङ्गसुरभीणि।
गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति॥ १५॥[2]

अनसूया—इदो सिलातलेक्कदेसं अलंकरेदु वअस्सो। [इतः शिलातलैकदेशमलंकरोतु वयस्यः।]

(राजोपविशति, शकुन्तला सलज्जा तिष्ठति)

प्रियंवदा—दुवेणं णु वो अणोण्णाणुराओ पच्चक्खो। सहीसिणेहो मं पुणरुत्तवादिणिं करेदि। [द्वयोर्नंनु युवयोरन्योन्यानुरागः प्रत्यक्षः। सखीस्नेहो मां पुनरुक्तवादिनीं करोति।]

राजा—भद्रे! नैतत्परिहार्यम्। विवक्षितं ह्यनुक्तमनुतापं जनयति।

प्रियंवदा—आवण्णस्स विसअणिवासिणो जणस्स अत्तिहरेण रण्णा होदव्वं त्ति एसो वो धम्मो। [आपन्नस्य विषयनिवासिनो जनस्यार्तिहरेण राज्ञा भवितव्यमित्येष युष्माकं धर्मः।]

---

स्येति नृपत्वलक्षणविषयनिगरणादतिशयोक्तिः। अलमलमिति द्विरुक्तिरादरातिशयं ध्वनयति। **संदष्टेति**। यतो गुरुर्महान्परितः सर्वतस्ताप. संतापो येषु तानि। अतो विशेषणद्वयविशिष्टानि ते तव गात्राण्यवयवा उपचारं यत्तद्योग्यव्यवहारकरणं नार्हन्ति। 'गात्रमङ्गे कलेवरे' इति विश्व.। दष्टं लग्नम्। केवलं लग्नं न, अपि तु सम्यग्दष्टम्। केवलं कुसुमं न, अपि तु कुसुमशयनीयं येषु तानि। गात्राणामुत्थाने कर्तव्ये कुसुमशय्याप्यङ्गलग्नोत्तिष्ठतीति भावः। आशु शीघ्रं क्लान्तो बिसभङ्गस्तद्वत्तेन वा सुरभीणि चारूणि। शीघ्रत्वं च भङ्गापेक्षया। तेन तात्कालिकक्लान्तत्वमुक्तम्। काव्यलिङ्गपरिकरानुप्रासाः। पक्ष उपमा च। भङ्गः क्रिया तस्याः कथं क्लान्तत्वमिति नाशङ्कनीयम्। क्रियया तद्वान्पदार्थो लक्ष्यते। शैत्ये श्वैत्याधिक्यप्रयोजनमुन्नेयम्। इतः शिलातलैकदेशमलंकरोतु वयस्य। द्वयोर्नंनु युवयोरन्योन्यानुरागः प्रत्यक्षः। सखीस्नेहो मा पुनरुक्तवादिनीं करोति। आपन्नस्यापत्प्राप्तस्य विषयनिवासिनो देशनिवासिनो जनस्यार्तिहरेण पीडाहरेण राज्ञा

---

पाठा०—१ '°न्याशुविमर्दितमृणालवलयानि'. २ 'शकुं०—(ससाध्वसमात्मगतम्) हिअअ! तधा उत्तम्मिअ इदाणिं ण किं पि पडिवज्जसि। अनु०—'. ३ 'महाराओ'. ४ '(किंचिदपसरति) राजा—कच्चित्सखीं वो नातिबाधते शरीरतापः? प्रियं०—लद्धोसधो संपदं उवसमं गमिस्सदि।'. ५ 'तेण हि सुणादु अज्जो। राजा—अवहितोऽस्मि। प्रियंवदा—अस्समवासिणो जणस्स'. ६ 'अत्तिहरेण होदव्वं'.

**राजा**—नास्मात्परम्[1]।

**प्रियंवदा**—तेण हि इअं णो पिअसही तुमं उद्दिसिअ इमं अवत्थंतरं भअवता मअणेण आरोविदा। ता अरुहसि अब्भुववत्तीए जीविदं से अवलंबिदुं। [तेन हीयमावयोः प्रियसखी त्वामुद्दिश्येदमवस्थान्तरं भगवता मदनेनारोपिता। तदर्हस्यभ्युपपत्त्या जीवितं तस्या अवलम्बितुम्।]

**राजा**—भद्रे! साधारणो[1]ऽयं[2] प्रणयः। सर्वथानुगृहीतोऽस्मि।

**शकुन्तला**—([3]प्रियंवदामवलोक्य) हला! किं अंतेउरविरहपज्जुस्सुअस्स राएसिणो उवरोहेण? [हला! किमन्तःपुरविरहपर्युत्सुकस्य राजर्षेरुपरोधेन?।]

**राजा**—

इदमनन्यपरायणमन्यथा
हृदयसंनिहिते! हृदयं मम।
यदि समर्थयसे मदिरेक्षणे!
मदनबाणहतोऽस्मि हतः पुनः॥ १६॥

---

भवितव्यमित्येष युष्माकं धर्मः। 'आपन्न आपत्प्राप्तः स्यात्'। 'देशविषयौ तूपवर्तनम्'। 'आर्तिः पीडाधनुःकोट्योः' इति चामरः। तेन हि इयं नोऽस्माकं प्रियसखी त्वामुद्दिश्येदमवस्थान्तरं भगवता मदनेनारोपिता। तदर्हस्यभ्युपपत्त्याऽनुग्रहेण जीवितं तस्या अवलम्बितुम्। 'अथाभ्युपपत्तिरनुग्रहः' इति शाश्वतः। साधारण आवयोः समानः प्रणयो याञ्चा। यथा भवतीभिरेतदर्थमहमभ्यर्थ्यंत एवं मयाप्येतदनुग्रहार्थे भवत्यौ प्रार्थनीये इत्यर्थः। 'प्रणयः प्रेम्णि विस्रम्भे याञ्चाप्रत्यययोरपि' इति विश्वः। अन्तःपुरविरहपर्युत्सुकस्य राजर्षेरुपरोधेन किम्? अनेनात्मनोऽतिशयितं सौभाग्यं ध्वनितम्। **इदमिति**। इदं जन्मप्रभृति येन सह स्थितं तमपि परित्यज्य दर्शनात्प्रभृति त्वय्यनुरक्तमनन्यनिष्ठम्। केवलं त्वन्निष्ठमित्यर्थः। अत्र त्वन्निष्ठमिति वक्तव्ये यन्निषेधमुखेनोक्तिः साऽन्यत्र निषेधं बोधयन्ती शब्दशक्त्यात्र व्यञ्जनया विधित्वेन पर्यवस्यति। तेन मामपि परित्यज्य त्वयि स्थितमिति ध्वन्यते। मम त्वद्ध्यानैकचित्तस्य हृदयं हे हृदयसंनिहिते मया सर्वदाध्याते, इति साभिप्रायम्। यो यत्संनिहितः स तस्य तत्त्वं जानाति, त्वं च तस्य संनिहिता, सा चेत्त्वमन्यथान्यनिष्ठं यदि समर्थयसे कल्पयसि तदा

---

**पाठा०**—१ 'अस्मात्परं किं तत्?'. २ 'एष'. ३ 'सप्रणयकोपस्मितम्'.

---

**टिप्प०**–1 'साधारणोऽयमुभयो प्रणयः स्मरस्य तप्तेन तप्तमयसा घटनाय योग्यम्' (विक्रमो० २।१६) इत्यत्रानेन कल्पनासाम्यं दृश्यते।

अनसूया—वँअस्स ! बहुवल्लहा राआणो सुणीअंति । जह णो पिअसही बंधुअणसोअणिज्जा ण होइ तइ णिव्वत्तेहि । [ वयस्य ! बहुवल्लभा राजानः श्रूयन्ते । यथा नौ प्रियसखी बन्धुजनशोचनीया न भवति तथा निर्वर्तय । ]

राजा—भद्रे ! किं बहुना,—

**परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे ।**
**समुद्रवसना चोर्वी सखी च युवयोरियम् ॥ १७ ॥**

---

मदिरादृष्टिस्तस्या ईक्षणमिवेक्षणमवलोकनं यस्यास्तत्संबुद्धिः । 'सप्तम्युपमानपूर्वोत्तरपदस्य' इति समासः । मदिरादृष्टिलक्षणमादिभरते—'आघूर्णमानमध्याया क्षामा चाञ्चिततारका । दृष्टिर्विकसितापाङ्गा मदिरा तरुणे मदे ॥' इति । मदनस्य कामस्य बाणैर्हतो विद्धोऽपि पुनरत्यन्तं हतोऽस्मि । विरुद्धमनःप्रवृत्तिर्जातोऽस्मीत्यर्थः । मन्मानस त्वन्निष्ठं तदपि चेत्त्वमन्यथा शङ्कसे तर्हि तस्य विषयान्तराभावात्प्रवृत्तिनिरोधो जात एवेति भाव. । 'मनोहतः प्रतिहत. प्रतिबद्धो हतश्च स.' इत्यमर. । उपमा । हृदयहृदयेति हतोहत इति लाटानुप्रासः । द्रुतविलम्बितं वृत्तम् । अनेन सामेति संध्यन्तराङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'तत्र साम प्रियं वाक्यं सानुवृत्ति प्रकाशकम्' इति । वयस्य ! बहुवल्लभा राजानः श्रूयन्ते । यथा नोऽस्माकं प्रियसखी बन्धुजनशोचनीया न भवति तथा निर्वर्तय । कि बहुना, उक्तेनेति शेष· । परीति । परिग्रहबहुत्वे स्त्रीबहुत्वेऽपि । 'परिग्रहः परिजने पत्न्या स्वीकारमूलयोः' इति विश्व. । मे मम कुलस्य प्रतिष्ठे प्रतिष्ठाहेतू । द्वे इति सारोपालक्षणा शुद्धा, कार्यकारणभावसबन्धात् । उक्तं च—'सारोपाऽन्या तु यत्रोक्तौ विषयी विषयस्तथा' इति । अन्यवैलक्षण्येन प्रतिष्ठाकारित्वं व्यङ्ग्यम् । परिग्रहबहुत्वेऽपीति व्यङ्ग्यं चकारादानीय तत्रोर्वीप्रतिष्ठाहेतुर्गौरवहेतुश्चतुरुदधिमेखलायास्तस्या आचन्द्रार्कं तद्वंशेन पालनीयत्वात् । सखी प्रतिष्ठाहेतुः स्थितिहेतुरस्या महाचक्रवर्तिवंशोत्पादकपुत्रोत्पाददिति द्वे अपि प्रतिष्ठे अतिशयोक्त्यैकत्वेनाध्यवसिते इत्यवधेयम् । 'प्रतिष्ठा गौरवे स्थितौ' इति हैमः । के द्वे इत्यत आह—समुद्र एव वसनमाच्छादनमवधित्वेन यस्याः सोर्वी मही । मुदं प्रीतिं राति ददातीति मुद्रम् । मुद्रं च तद्वसनं च मुद्रवसनम् । तेन सह वर्तमानेति सखीविशेषणम् । 'वसनं छादनेंऽशुके' इति विश्वः । इयं लोकातिक्रान्तसौन्दर्यागणितगुणगणाभिरामा त्रिजगल्ललामभूता, तुल्ययोगितोभयो प्रकृतत्वात् । अनया च पृथिव्या अनयाद्युत्सारणेन स्वास्थ्यमिवास्या बन्धुवियोगदुःखा-

---

**पाठा०—१ 'महाराअ'. २ 'ता जधा इअं णो पिअ°'. ३ 'ण भोदि तधा करिस्ससि'. ४ 'समुद्ररशना'.**

---

**टिप्प०**—1 सखीद्वयद्वारा प्रार्थनेयं सुरुचिर प्रणीता महाकविना, महाभारते तु नायिकामुखेनैव, या न तथा शोभनास्पदा दृश्यते तपस्विजनस्य।

**उभे**—णिव्वुद म्ह। [निर्वृते स्वः।]

**प्रियंवदा**—(सदृष्टिक्षेपम्) अणसूए! जह एसो इदो दिण्णदिट्ठी उस्सुओ मिअपोदओ मादरं अण्णेसदि। एहि; संजोएम णं [अनसूये! यथैष इतो दत्तदृष्टिरुत्सुको मृगपोतको मातरमन्विष्यति। एहि; संयोजयाव एनम्।] (इत्युभे प्रस्थिते)

**शकुन्तला**—हला! असरण म्हि। अण्णदरा वो आअच्छदु। [हला! अशरणास्मि। अन्यतरा युवयोरागच्छतु।]

**उभे**—पुहवीए जो सरणं सो तुह समीवे वट्टइ। [पृथिव्या यः शरणं स तव समीपे वर्तते।] (इति निष्क्रान्ते)

**शकुन्तला**—कहं गदाओ एव्व?। [कथं गते एव?।]

**राजा**—अलमावेगेन। नन्वयमाराधयिता जनस्तव समीपे वर्तते।

'किं शीतलैः क्लमविनोदिभिरार्द्रवाता-
न्संचारयामि नलिनीदलतालवृन्तैः?।

---

पाकरणेनानन्दयुक्ततया सौभाग्यातिशयो व्यज्यते। अथ च पृथिव्यास्ताद्रूप्येण सापत्न्याभावादस्या अपि तदभावः। सति सापत्न्ये पृथिवीभवत्सख्योरेव परस्परं तद्वृत्ति च व्यज्यते। रूपकानुप्रासौ। निर्वृते सुखिते स्वः। 'सख्यौ—सहर्षं स्वागतम्' इत्यादिनैतदन्तेन प्रगयणं नामाङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'उत्तरोत्तरवाक्यं तु भवेत्प्रगयणं पुनः' इति। यथैष इतो दत्तदृष्टिरुत्सुको मृगपोतको मातरमन्विष्यति मार्गयते। एहि; सयोजयाव एनम्। निर्गमनव्याजवचनमिदम्। अशरणास्मि। एकाकिन्यस्मीत्यर्थ। अन्यतरा वा युवयोरागच्छतु। पृथिव्या य शरणं रक्षकः स तव समीपे वर्तते। कथं गते एव? आवेगेन सभ्रमेण। आकुलत्वेनेत्यर्थ। **किं शीतलैरिति**। नलिनं पद्मं विद्यते यस्याः सा नलिनी तस्या दलानि कमलिनीपलाशानि तान्येव तालवृन्तानि व्यजनानि

---

पाठा०—१ 'णिव्वुदाओ म्ह। (शकुंतला हर्षं सूचयति) प्रियं०-अणुसूए! पेक्ख पेक्ख मेहवादाहदं विअ गिम्हे मोरि खणे खणे पच्चाअदजीविदं पिअसहिं. शकुं०-मरिसावेध लोअवालं जं अम्हेहिं वीसद्धपलाविणीहिं उवआरादिक्कमेण भणिदं। उभे-(सस्मितम्) जेण तं मंतिदं सो ज्जेव मरिसावेदु; अण्णस्स को अच्चओ। शकुं०-अरिहदि खु महाराओ इमं पच्चक्खवणं विसोढुं। परोक्खं वा किं ण मंतीअदि। राजा (सस्मितम्)—अपराधमिमं ततः सहिष्ये यदि रंभोरु' तवाङ्गसङ्ग(सं)सृष्टे। कुसुमास्तरणे क्लमापहं मे सुजनत्वादनुमन्यसेऽवकाशम्। प्रियं०-ण एत्तिएण उण तुट्ठीभविस्सदि। शकुं०-विरम दुल्ललिदे!। एदावत्थं गदाए वि मए कीळसि'. २ 'किं शीकरैः क्लम°'. ३ 'वातं'. ४ '°वृन्तम्।'.

अङ्के निधाय करभोरु ! यथासुखं ते
संवाहयामि चरणावुत पद्मताम्रौ ॥ १८ ॥

**शकुन्तला**—ण माणणीएसु अत्ताणं अवराहइस्सं । [न माननीयेष्वात्मानमपराधयिष्ये ।] ( इत्युत्थाय गन्तुमिच्छति )

**राजा**—सुन्दरि ! अनिर्वाणो दिवसः । इयं च ते शरीरावस्था,

तैः । 'नलिनी'पदेन सौगन्ध्यं सूचितम् । अत एव न बिसिनीत्यादि । बहुवचनेन प्रतिक्षणं भिन्नस्योपादीयमानतया दत्तविशेषणद्वयेन योग्यता सूचिता । एकस्य बहुकालं स्थितस्य तद्योग्यत्वाभावात् । 'व्यजनं तालवृन्तकम्' इत्यमरः । आर्द्रवातान् शीतलतरवातान् । आर्द्रत्वेन शैत्यं लक्ष्यते । तदतिशयः फलम् । सम्यङ्मन्दंमन्द रचयामि करोमि, न तूच्चै । किमिति प्रश्ने । कीदृशै. ? शीतलै शीतलस्पर्शै । यानि स्वयं शीतलानि तज्जन्यो वायुः सुतरा शीतल इत्यार्द्रपदार्थस्य हेतुत्वेन योज्यम् । पुनः कीदृशै. ? क्लमं विशेषेण नुदन्ति तै क्लान्तिहरै. । यानि दृष्टानि स्पृष्टान्याघ्रातानि स्वयं क्लमच्छिन्दि तज्जन्यो वायुः सुतरा क्लमच्छिदिति भाव । उतेति विकल्पे । हे करभोरु ! 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः ।' तद्वदूरू यस्यास्तसबोधनम् । अत्रानुवृत्तत्वकोमलत्वादय. सामान्यधर्माः । ते पद्मताम्रौ कुशेशयलोहितौ । पदि मातीति पद्मम् । तेन सह साम्यं नास्तीति ताम्रत्वमात्रेण साम्यम् । अत एव नारविन्दादिपदोपादानम् । 'करभोरु–पद्मताम्रौ' इति पदाभ्या चरणयो. संवाहनयोग्यत्वं ध्वनितम् । चरणावङ्के निधायेत्यनेन तस्याः सौभाग्यसर्वङ्कषत्वं स्वस्य धन्यतरत्वं च सूचितम् । 'यथासुख'मित्यनेन च स्वस्य सवाहनकलाकौशलं ध्वनितम् । संवाहयामि सवाहनेन खेदमपनयामीत्यर्थः । नलिनीदलस्य तालवृन्तत्वारोप आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम इति परिणामालंकारः । पूर्वोत्तरार्धयोर्विकल्पालंकारः । 'तुल्यबलविरोधे विकल्पः' इति तल्लक्षणात् । काव्यलिङ्गपरिकरोपमावृत्त्यनुप्रासाश्च । वसन्ततिलका वृत्तम् । अनेनोप' न्यासो नामाङ्गमुपक्षिप्तम् । तल्लक्षणं **दशरूपके** ( १।३५ )—'प्रसादनमुपन्यासः इति । 'अनेन माला नाम भूषणमप्युपक्षिप्तम् । तल्लक्षणं तु—'माला स्यादभीष्टार्थप्रकाशनम्' इति । न माननीयेष्वात्मानमपराधयिष्ये । **सुन्दरीति** । एतादृगवस्थायामपि सौन्दर्यस्य परित्यागो नास्तीति भावः । अनिर्वाणोऽपरिगतः ।

**पाठा०**—१ 'अंके निधाय चरणावुत पद्मताम्रौ संवाहयामि करभोरु ! यथासुखं ते'. २ 'अपरिनिर्वाणो दिवसः'.

**उत्सृज्य कुसुमशयनं नलिनीदलकल्पितस्तनावरणम्।**
**कथमातपे गमिष्यसि परिबाधा पेलवैरङ्गैः? ॥ १९ ॥**

( इति बलादेना निवर्तयति )

**शकुन्तला**—पोरव! रक्ख अविणअं। मअणसंतत्तावि ण हु अत्तणो पहवामि। [पौरव! रक्षाविनयम्। मदनसंतप्तापि न खल्वात्मनः प्रभवामि।]

---

**उत्सृज्येति**। परितो बाधा पीडा यस्या सा। 'पीडा बाधा व्यथा' इत्यमरः। पेलवै कोमलैरङ्गैरुपलक्षिता। इद परिबाधेत्यत्रार्थहेतुत्वेन योज्यम्। अथवा शब्दहेतुत्वेनैव योज्यम्। पेलवैरङ्गैर्हेतुभिरिति। कुसुमशयनमुत्सृज्य नलिनीदलकल्पितं स्तनावरणमुत्सृज्येत्यनेन तापातिशयो द्योत्यते। अत आतपे घर्मे कथं गमिष्यसि? स्वस्थोऽपि वस्त्रावरणादि हित्वाऽऽतपे गन्तुमसमर्थ, त्वं तु स्वभावतः सुकुमाराङ्गी तत्रापि पीडायुक्ता, तत्रापीदृगवस्था, तत्रापि कुसुमशयननलिनीदलादि हित्वा सुतरा गन्तुमशक्तेति 'कथं'शब्दार्थ। काव्यलिङ्गं हेतुर्वा। श्रुत्यनुप्रासवृत्त्यनुप्रासयो पूर्वार्ध एकवाचकानुप्रवेशलक्षण सकर। उत्तरार्धे तु श्रुत्यनुप्रासवृत्त्यनुप्रासयोरेव ससृष्टि। दन्त्यानामोष्ठ्याना च वहूना सद्भावात्। अत्र 'पेलवै'रित्यत्र पर्यायं पठित्वा व्रीडाश्लीलदोष. परिहर्तव्य.। अनेन चोपन्यासो नामाङ्गमुपक्षिप्तम्। तल्लक्षणमादिभरते—'उपपत्तिकृतो योऽर्थ उपन्यासस्तु स स्मृत' इति। पौरव! रक्षाविनयम्। रतेरनिर्वाहात् पौरवेति सबुद्धि.। मदनसतप्तापि न खल्वात्मन प्रभवामि। स्वेच्छाया सत्यामपि गुरुजनपराधीनत्वादसामर्थ्यम्। स्वेच्छा तु मदनसतप्तेत्यनेनोक्ता। क्वचित्पुस्तके **'मअणवाहिआओ वि कण्णआओ अत्तणो ण प्पहवंति'** इति पाठ॥ मदनबाधिता अपि कन्यका इत्यप्रस्तुत-

---

**पाठा०**—१ '°स्तनावरणा'. २ 'कोमलैरङ्गै.। शकुं०—मुंच मुंच ण खु अत्तणो पहवामि, अध वा सहीमेत्तसरणा किं दाणिं एत्थ करइस्सं?। राजा—धिक्; व्रीडितोऽस्मि। शकुं०—ण खु महाराअं भणामि। देव्वं उवालहामि। राजा—अनुकूलकारि दैवं किमुपालभ्यते?। शकुं०—कधं दाणिं उवालहिस्सं जं मं अत्तणो अणीसं परगुणेहिं लोहावेदि?। राजा—( स्वगतम् ) अप्यौत्सुक्ये महति दयितप्रार्थनासु प्रतीपाः काङ्क्षन्त्योऽपि व्यतिकरसुखं कातराः स्वाङ्गदाने। आबाध्यन्ते न खलु मदनेनैव लब्धान्तरत्वादाबाधन्ते मनसिजमपि क्षिप्तकालाः कुमार्यः॥ ( शकुंतला गच्छत्येव ) राजा—कथमात्मन. प्रियं न करिष्ये? ( उपसृत्य पटान्तरमवलंबते )'.

---

टिप्प०—१ कन्यकाजनसहज लज्जाशीलत्व तपोवनजनसंसृष्ट निषिद्धाचरणभीरुत्वं चात्र कविना सम्यगुपदर्शितम्।

**राजा**—भीरु ! अलं गुरुजनभयेन । दृष्ट्वा ते विदितधर्मा तत्रभवान्न तत्र दोषं ग्रहीष्यति कुलपतिः । अपि च,—

**गान्धर्वेण विवाहेन बह्व्यो[1] राजर्षिकन्यकाः ।**
**श्रूयन्ते परिणीतास्ताः पितृभिश्चाभिनन्दिताः[2] ॥ २० ॥**

प्रशसा । दृष्ट्वा, अर्थात्त्वाम् । ते तव तत्र मत्परिग्रहे तत्रभवान्पूज्य. कुलपतिः कण्वो दोषं न ग्रहीष्यति । यतो विदितधर्मा श्रुतिस्मृत्याचारज्ञ इत्यर्थ. । 'धर्मादनिच्केवलात्' ( पा ५।४।१२४ ) इत्यनिच् । **गान्धर्वेणेति** । 'गान्धर्व समयान्मिथ' ( याज्ञ १।६१ ) इति स्मरणात् । अयं गान्धर्वो विवाह । अनेनोपदिष्टं नाम भूषण-

**पाठा०**–१ '°ऽथ मुनि°' २ 'श्चानुमोदिता'. ३ '( दिशोऽवलोक्य ) कथं प्रकाशं निर्गतोऽस्मि ॥ ( शकुंतला हित्वा पुनस्तैरेव पदै प्रतिनिवर्तते ) शकुं०–( पदान्तरे प्रतिनिवृत्य साङ्गभङ्ग ) पोरव ! अणिच्छापूरओ वि संभासणमेत्तएण परिचिदो अअं जणो ण विसुमरिदव्वो । राजा सुन्दरि, त्वं दूरमपि गच्छन्ती हृदयं न जहासि मे । दिनावसानच्छायेव पुरोमूलं वनस्पतेः ॥ शकुं०–( स्तोकमन्तर गत्वात्मगतम् ) हद्धी हद्धी, इमं सुणिअ ण मे चलणा पुरोमुहा पसरंति । भोदु, इमेहिं पज्जंतकुरुवएहिं ओवारिदसरीरा पेक्खिस्सं दाव से भावाणुबंध । ( तथा कृत्वा स्थिता ) राजा–कथमेवं प्रिये अनुरागैकरसं मामुत्सृज्य निरपेक्षैव गतासि । अनिर्दयोपभोग्यस्य रूपस्य मृदुनः कथम् । कठिनं खलु ते चेत· शिरीषस्येव बन्धनम् ॥ शकुं०–एदं सुणिअ णत्थि मे विहवो गच्छिदुं । राजा-संप्रति प्रियाशून्ये किमस्मिन्करोमि । ( अग्रतोऽवलोक्य ) हन्त । व्याहतं गमनम् । मणिबन्धनगलितमिदं संक्रान्तोशीरपरिमलं तस्याः । हृदयस्य निगडमिव मे मृणालवलय स्थितं पुरतः ॥ ( सबहुमानमादत्ते ) शकुं०–( हस्तं विलोक्य ) अम्मो, दोब्बल्लसिढिलदाए परिब्भट्ठं पि मुणालवलअं मए ण परिण्णादं । राजा–( मृणालवलयमुरसि निक्षिप्य ) अहो स्पर्शः । अनेन लीलाभरणेन ते प्रिये विहाय कान्तं भुजमत्र तिष्ठता । जन· समाश्वासित एष दुःखभागचेतनेनापि सता न तु त्वया ॥ शकुं०–अदो वरं असमत्थ म्हि विलंबिदुं । भोदु, एदेण जेव अवदेसेण अत्ताणअं दंसइस्सं । ( इत्युपसर्पति ) राजा–( दृष्ट्वा सहर्षम् ) अये, जीवितेश्वरी मे प्राप्ता । परिदेवितानन्तरं प्रसादेनोपकर्तव्योऽस्मि खलु दैवस्य । पिपासाक्षामकण्ठेन याचितं चाम्बु पक्षिणा । नवमेघोज्झिता चास्य धारा निपतिता मुखे ॥ शकुं०–( राज्ञः प्रमुखे स्थित्वा ) अज्ज, अद्धपधे सुमरिअ एदस्स हत्थभंसिणो

**टिप्प०**–1 अत्र कविकण्ठीरवेण कालिदासेन गान्धर्वविवाहानुगुण शकुन्तलाया पाणिग्रहणमुपकल्प्य नायकस्य चारित्र्यगौरवमनुष्ठिन, तन्न महाभारते दृश्यते । 2 तल्लक्षणमुक्तं **मनुना** ( ३।३२ )–"इच्छयान्योन्यसंयोग कन्यायाश्च वरस्य च । गान्धर्व स तु विज्ञेयो मैथुन्य कामसंभव." इति ।

शकुन्तला—मुंच दाव मं । भूओ वि सहीजणं अणुमाणइस्सं ।
[ मुञ्च तावन्माम् । भूयोऽपि सखीजनमनुमानयिष्ये । ]

मुक्तम् । तल्लक्षण तु—'प्रतिगृह्य तु शास्त्रार्थं यद्वाक्यमभिधीयते । विद्वन्मनोहरं

मुणालवलअस्स किदे पडिणिउत्त म्हि । आचक्खिदं विअ मे हिअएण तए गहिदं ति । ता णिक्खिव एदं मा मं अत्ताणअं च मुणिअणेसुं पआसइस्ससि । राजा–एकेनाभिसंधिना प्रत्यर्पयामि । शकुं०–केण उण । राजा–यदिदमहमेव यथास्थानं निवेशयामि । शकुं०–( आत्मगतम् ) का गदी । ( इत्युपसर्पति ) राजा-इतः शिलापट्टकमेव संश्रयाव । ( इत्युभौ परिक्रम्योपविष्टौ ) राजा–शकुंतलाया हस्तमादाय अहो स्पर्शः । हरकोपाग्निदग्धस्य दैवेनामृतवर्षिणा । प्ररोहः संभृतो भूयः किं स्वित्कामतरोरयम् ॥ शकुं०-( स्पर्शं रूपयित्वा ) तुवरदु तुवरदु अज्जउत्तो । राजा-( सहर्षमात्मगतम् ) इदानीमस्मि विश्वस्तः । भर्तुराभाषणपदमेतत् । ( प्रकाशम् ) सुन्दरि, नातिश्लिष्टः संधिरस्य मृणालवलयस्य । यदि तेऽभिप्रेतमन्यथा घटयिष्यामि । शकुं०–( स्मितं कृत्वा ) जधा दे रोअदि । राजा-( सव्याजं विलम्ब्य प्रतिमुच्य ) सुन्दरि, दृश्यताम् । अयं स ते श्यामलतामनोहरं विशेषशोभार्थमिवोज्झिताम्बरः । मृणालरूपेण नवो निशाकरः करं समेत्योभयकोटिमाश्रितः ॥ शकुं०–ण दाव णं पेक्खामि । पवणुकंपिणा कण्णुप्पलरेणुणा कलुसीकिदा मे दिट्ठी । राजा-( सस्मितम् ) यदि मन्यसे अहमेनां वदनमारुतेन विशदां करिष्ये । शकुं०–तदो अणुकंपिदा भवे । किं उण ण दे वीससामि । राजा–मा मैवम्; नवो हि परिजनः सेव्यानामादेशात्परं न वर्तते । शकुं०–अअं जेव अच्चुवआरो अविस्सासजणओ । राजा–( स्वगतम् ) नाहमेतं रमणीयं सेवावकाशमात्मनः शिथिलयिष्ये । ( इति मुखमुन्नमयितुं प्रवृत्त )। शकुं०–( प्रतिषेधं रूपयन्ती विरमति ) राजा–अयि मदिरेक्षणे, अलमस्मदविनयाशङ्कया ॥ शकुं०–( किंचिद्दृष्ट्वावनतमुखी तिष्ठति ) राजा–( अङ्गुलीभ्यां मुखमुन्नमय्यात्मगतम् ) चारुणा स्फुरितेनायमपरिक्षतकोमलः । पिपासतो ममानुज्ञां ददातीव प्रियाधरः ॥ शकुं०–पडिण्णादमथरो विअ अज्जउत्तो । राजा–सुन्दरि, कर्णोत्पलसंनिकर्षादीक्षणसादृश्यमूढोऽस्मि । ( इति मुखमारुतेन चक्षु सेवते ) शकुं०–भोदु, पइदित्थदंसण म्हि संवुत्ता । लज्जामि उण अणुवआरिणी पिअआरिणो अज्जउत्तस्स । राजा–सुन्दरि, किमन्यत् । इदमप्युपकृतिपक्षे सुरभि मुखं ते मया यदाघ्रातम् । ननु कमलस्य मधुकरः संतुष्यति गन्धमात्रेण ॥ शकुं०–असतोसे उण किं करेदि । राजा–इदमिदम् । ( इति व्यवसितो वक्त्रं ढौकते ) । ( नेपथ्ये ) चक्कवाअवहु'.

टिप्प०–1 मदनपराभिभूतापि शकुन्तला तपस्विजनसुलभा कर्तव्यनिष्ठा स्वैरिणीति दोषभीरुत्व च स्फोरयत्यनेन वाक्येन । तथा हि—'आवाहे विवाहे यज्ञे गमन सखीभिः सह । इत्यनुज्ञाता कथ्यते' इति वात्स्यायनः ।

राजा—भवतु; मोक्ष्यामि ।

शकुन्तला—कदा ? । [ कदा ? । ]

राजा—

अपरिक्षतकोमलस्य यावत्
कुसुमस्येव नवस्य षट्पदेन ।
अधरस्य पिपासता मया ते
सदयं सुन्दरि ! गृह्यते रसोऽस्य ॥ २१ ॥

( इति मुखमस्याः समुन्नमयितुमिच्छति, शकुन्तला परिहरति नाट्येन )

( नेपथ्ये )

चक्कवाकवहुए ! आमंतेहि सहअरं । उवट्ठिआ रअणी । [ चक्रवाकवधूः ! आमन्त्रयस्व सहचरम् । उपस्थिता रजनी । ]

---

स्वन्तमुपदिष्टं तदुच्यते ॥' इति । मुञ्च तावन्माम् । भूयोऽपि सखीजनमनुमानयिष्ये । **अपरिक्षतेति ।** सुन्दरीति व्याख्यातचरम् । न विद्यते परितः क्षतं यस्य स चासौ कोमलश्च । अथ चापरिक्षतं भ्रमरादिना कोमलं च तस्य नवस्य प्रथमास्वाद्यस्य । अथ च प्रथमविकसितस्य कुसुमस्येव तवास्य सुधासहोदरस्य मत्सुकृतोपचयलभ्यस्याधरस्य पिपासता पातुमिच्छता षट्पदेन भ्रमरेणेव मया सर्वदैतच्चित्तेनाधुना धन्यतरेण सदयं यावद्रसो गृह्यतेऽधरपानं क्रियत इति । यावदित्यवधौ । तदनन्तरं मोक्ष्यामीति भावः । 'सदयम्' इत्यनेन बालालालनकौशलं ध्वनितम् । श्लेषवाच्योपमा । स्यस्येति सदसुन्देति च्छेकवृत्त्यनुप्रासाः । मालभारिणी वृत्तम् । तल्लक्षणं तु—'ससजा प्रथमे पदे गुरू चेत् सभरा येन च मालभारिणीयम्' इति । समुन्नमयितुमिति त्रिपताकस्योत्तानाभ्यां मध्यमातर्जनीभ्यां चिबुकदेशगताभ्यामिति ज्ञेयम् । नाट्येनेति परावृत्तेन शिरसा विनिगूहितेनाधरेण । तल्लक्षणं तु—'पराङ्मुखीकृतं शीर्षं परावृत्तमुदीरितम् । तत्कार्यं कोपलज्जादिकृते वक्त्रापसारणे ॥ मुखान्तर्निहितप्राणसाध्येषु विनिगूहितः । रोषेर्ष्ययोश्च नारीणां बलाच्चुम्बति वल्लभे ॥' इति । अनेन मुग्धाव्यवहारोऽप्युक्तः । 'मुग्धा नववयःकामा रतौ वामा' (द. रू. २।१६) इति । हे चक्रवाकवधू ! आमन्त्रयस्वापृच्छस्व सहचरम् । उपस्थिता रजनी । इयमप्रस्तुतप्रशंसा । तेन 'शकुन्तले ! प्रियमापृच्छस्व' इति प्रकृतो गम्योऽर्थः । अत एव 'शकुन्तला—ससम्भ्रमम्' इत्यादि । अनेन द्वितीयं पताकास्थानकमुक्तम् । तल्लक्षणं **दशरूपके** ( १।१४ )—'प्रस्तुतागन्तुभावस्य वस्तु-

---

**टिप्प०**-1 योषितो हि न प्रसभमुपक्रमणीया इत्युक्तं **वात्स्यायनेन** (का. सू. ३।३।६)—'कुसुमसधर्माणो हि योषितः सुकुमारोपक्रमाः । तास्तु ..प्रसभमुपक्रम्यमाणाः सम्प्रयोगद्वेषिण्यो भवन्ति, तस्मात्साम्नैवोपचरेत् ।' इति ।

**शकुन्तला**—(ससंभ्रमम्) पोरव! असंसअं मम सरीरवुत्तंतोवलंभस्स अज्जा गोदमी इदो एव्व आअच्छदि। जाव विडवंतरिदो होहि। [पौरव! असंशयं मम शरीरवृत्तान्तोपलम्भायार्या गौतमीत एवागच्छति। यावद्विटपान्तरितो भव।]

**राजा**—तथा। (इत्यात्मानमावृत्य तिष्ठति)

(तत प्रविशति पात्रहस्ता गौतमी सख्यौ च)

**सख्यौ**—इदो इदो अज्जा गोदमी। [इत इत आर्या गौतमी।]

**गौतमी**—(शकुन्तलामुपेत्य) जादे! अवि लहुसंदावाइं दे अंगाइं?। [जाते! अपि लघुसंतापानि तेऽङ्गानि?।]

**शकुन्तला**—अत्थि मे विसेसो। [अस्ति मे विशेषः।]

**गौतमी**—इमिणा दब्भोदएण णिराबाधं एव्व दे सरीरं भविस्सदि। (शिरसि शकुन्तलामभ्युक्ष्य) वच्छे! परिणदो दिअहो। एहि, उडजं एव्व गच्छम्ह। [अनेन दर्भोदकेन निराबाधमेव ते शरीरं भविष्यति। वत्से! परिणतो दिवसः। एहि, उटजमेव गच्छामः।]

(इति प्रस्थिता)

---

नोऽन्योक्तिसूचकम्। पताकास्थानवत्तुल्यं सविधानविशेषणम्॥' इति वृत्तिकारेण व्याख्यातमन्योक्तिसमासोक्तिभेदादिति। तत्रान्योक्त्येदम्। समासोक्त्याग्रिमसधौ भविष्यति। अन्योक्तिलक्षणं **तूद्भटे**—'असमानविशेषणमपि यत्र समाने निवृत्तमुपमेयम्। उक्तेन गम्यते परमुपमानेनेति साऽन्योक्ति॥' इति। एषा स्थानमप्युक्तं **मातृगुप्ताचार्यैः**—'मुखे प्रतिमुखे गर्भे विमर्शे च चतुर्ष्वपि। भेदा सधिषु कर्तव्याः पताकास्थानकस्य तु॥' इति। ससभ्रम सभयम्। पौरव! असशयं मम शरीरवृत्तान्तोपलम्भायार्या गौतमीत एवागच्छति। 'उपलम्भस्त्वनुभवः' इत्यमर। यावद्विटपान्तरितो भव। इदं व्याजमिति राज्ञो मनसि स्यात्, तन्निवारणायासशयमित्युक्ति। अनेन निरोधो नामाङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'या तु व्यसनसंप्राप्तिर्निरोध स तु कीर्त्यते' इति। अत्र स्वाभीष्टाच्युतिरेव व्यसनम्। इत इत आर्या गोतमी जाते पुत्रि! अपीति प्रश्ने। लघुः स्वल्प. सतापो येषु तानि तेऽङ्गानि। अस्ति मे विशेष। अनेन दर्भोदकेन दर्भसहितेनोदकेन, वैतानोदकेनेत्यर्थ। निराबाधं पीडारहितमेव ते शरीर भविष्यति। वत्से! परिणतो दिवस। एहि, उटजमेव गच्छामः। 'पर्णशालोटजोऽस्त्रियाम्' इत्यमर। हृदय! प्रथममेव सुखोपनते मनोरथे कातरभावं न मुञ्चसि।

**शकुन्तला**—(आत्मगतम्) हिअअ! पढमं एव्व सुहोवणदे मणोरहे कादरभावं ण मुंचसि। साणुसअविहडिअस्स कहं दे संपदं संदावो? । (पदान्तरे स्थित्वा, प्रकाशम्) लदावलअ संदावहारअ! आमंतेमि तुमं भूओ वि परिभोअस्स। [हृदय! प्रथममेव सुखोपनते मनोरथे कातरभावं न मुञ्चसि। सानुशयविघटितस्य कथं ते सांप्रतं संतापः? । लतावलय संतापहारक! आमन्त्रये त्वां भूयोऽपि परिभोगाय।] (इति दुःखेन निष्क्रान्ता शकुन्तला सहेतराभिः)

**राजा**—(पूर्वस्थानमुपेत्य, सनिःश्वासम्) अहो, विघ्नवत्यः प्रार्थितार्थसिद्धयः। मया हि,—

**मुहुरङ्गुलिसंवृताधरोष्ठं**
**प्रतिषेधाक्षरविक्लवाभिरामम्।**
**मुखमंसविवर्ति पक्ष्मलाक्ष्याः**
**कथमप्युन्नमितं न चुम्बितं तु॥ २२॥**

---

एवकारो भिन्नक्रमः। **नैव मुञ्चसीति**। मनोरथे विषयस्य निगीर्णत्वादतिशयोक्तिः। सानुशयविघट्टितस्य सपश्चात्तापं च तद्विघट्टितं च तस्य। 'अथानुशयो दीर्घद्वेषानुतापयोः' इत्यमरः। कथं ते साम्प्रतं संतापः? यत्सङ्गमे कातरता तत्सङ्गमाभावे तदभाव एवोचितो न तु ताप इति कथंशब्दार्थः। लतावलय लतागृह संतापहारकेति। अथ च लतागृह संतापहारकेत्येकयोक्त्या दुष्यन्त—लतागृहयोः संबोधनम्। 'वलय'शब्देनाच्छादकत्वसाधर्म्येण गृहं लक्षयता गुप्ततरत्वमनोहरत्वादि ध्वनितम्। आमन्त्रये त्वां भूयोऽपि परिभोगाय सुखाय संभोगाय च। अनेन मनोरथो नाम भूषणमुपक्षिप्तम्। तल्लक्षणं तु—'मनोरथस्तु व्याजेन विवक्षितनिवेदनम्' इति। **मुहुरिति**। मुहुर्वारंवारमङ्गुल्या तर्जन्या संवृत आच्छादितोऽधरोष्ठो यत्र तत्। प्रतिषेधाक्षराणि मा मा अलम्' इत्यादीनि तेषां यद्वैक्लव्यं स्फुटमनुच्चारणं तेनाभिरामम्। 'विक्लव'शब्दो धर्मपरः। अंसे विवर्तितु शीलं यस्य तत्। वलिते पक्ष्मले अक्षिणी यस्याः सा पक्ष्मलाक्षी तस्या मुखम्। अनेन चुम्बनार्थमुन्नमने योग्यता ध्वनिता। कथमपि महता कष्टेन। उन्नमितं चुम्बनार्थमूर्ध्वीकृतम्। न चुम्बितम्। तुः पश्चात्तापे। तेन तावन्मात्रचुम्बनलाभेनापि कृतकृत्यता स्यादिति ध्वन्यते। स्वभावोक्तिः। श्रुतिवृत्त्यनुप्रासौ। कथमपी-

---

**टिप्प०-1** नववधूसङ्गमश्च 'न च दृष्टिं नयति मुखं न स्प्रष्टुं ददाति नालपति किमपि। तथापि खलु किमपि रहस्यं नववधूसङ्गः प्रियो भवति॥' इति पद्योक्तश्चात्र स्फुटं प्रतीयते।

क नु खलु संप्रति गच्छामि? अथवा,—इहैव प्रियापरिभुक्तमुक्ते लतावलये मुहूर्तं स्थास्यामि। (सर्वतोऽवलोक्य)

तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं
क्रान्तो मन्मथलेख एष नलिनीपत्रे नखैरर्पितः।
हस्ताद्भ्रष्टमिदं बिसाभरणमित्यासज्यमानेक्षणो
निर्गन्तुं सहसा न वेतसगृहाच्छक्नोमि शून्यादपि ॥ २३ ॥

---

त्यस्यार्थं प्रति विशेषणत्रयार्थस्य हेतुत्वोपादानात्काव्यलिङ्गम्। वृत्तमनन्तरोक्तम्। **तस्या इति**। तस्याः पुर इव परिवर्तमानायाः पुष्पमयी न पल्लवमयी। तेषां ततोऽपि मृदुत्वात्। तेन तस्याः कोमलतरत्वं ध्वन्यते। शरीरेण सतप्तदेहेन लुलिता इतस्ततः क्षिप्ता। शरीरस्य सतप्तत्वं प्रकरणलभ्यमिति नोक्तम्। शिलायामियं शय्येति यथादृष्टोक्तिः। क्रान्ता। एवमेष इदमित्यत्रापि। अत्र 'एष'शब्दः समीपतरत्वं वदन्मदनलेखस्य स्वोद्देशेन प्रियालिखितत्वेन च हृद्यतरत्वं ध्वनयति। अत एव नेदमेतदोः प्रक्रमभङ्गः शङ्कनीयः। उक्तं च—'इदमः प्रत्यक्षगतं समीपतरवर्ति चैतदो रूपम्' इति। अत एव पुष्पाद्यविशेषणोक्तम्। अत्र तु नलिनीपत्रे नखैरर्पित इति। यथायथं पञ्चानामप्युपयोगादक्षरबाहुल्याद्वा नखैरिति बहुवचनम्। बिसाभरणं क्रान्तमित्येव। इत्यमुना प्रकारेणाय स्तनन्यस्तो मृणालभरः क्रान्तः इति प्रकारशब्दार्थः। मध्यदीपकालंकारः। आ समन्तात् सज्यमाने स्वयमेव संबध्यमाने ईक्षणे यस्य सः। शून्यादपि तया विरहितादपि वेतसगृहात्सहसाऽकस्मान्निर्गन्तुं न शक्नोमि। तत्त्यक्तान्युपभोगचिह्नान्यत्यन्तं मम मनो रमयन्ति, तत्र सा किमु वक्तव्येति भावः। हेत्वनुप्रासौ। अत्र निर्गमनकारणे शून्यत्वे सति यस्तदभावः सा विशेषोक्तिः। अथ च तत्सद्भावस्य कारणस्याभावेऽपि गमनाभावस्तत्कार्यमुक्तमिति विभावना। अत्र च कारणाभावस्तद्विरुद्धोक्तिः। साधकबाधकप्रमाणाभावात् संदेहसकरः। शार्दूलविक्रीडितं वृत्तम्। अस्य तुर्यचरणेन पुष्पं नामाङ्गमुपक्षिप्तम्। तल्लक्षणं **दशरूपके** (१।३४)—'पुष्पं वाच्यं विशे-

---

**पाठा०—१ 'प्रियापरिभुक्ते लतामण्डपे'. २ 'तिष्ठामि'. ३ 'वेतसगृहादीशोऽस्मि'. ४ '(विचिन्त्य) अहो, धिक्। असम्यक् चेष्टितं प्रियां समासाद्य कालहरणं कुर्वता मया। तदिदानीं—रहः प्रत्यासत्तिं यदि सुवदना यास्यति पुनर्न कालं हास्यामि प्रकृतिदुरवापा हि विषयाः। इति क्लिष्टं विघ्नैर्गणयति च मे मूढहृदयं प्रियायाः प्रत्यक्षं किमपि च तथा कातरमिव ॥ भो भो राजन्'.**

( आकाशे )

राजन् !

सायंतने सवनकर्मणि संप्रवृत्ते
वेदीं हुताशनवतीं परितः प्रयस्ताः ।
छायाश्चरन्ति बहुधा भयमादधानाः
संध्यापयोदकपिशाः पिशिताशनानाम् ॥ २४ ॥

राजा—[1]अयमयमागच्छामि । ( इति निष्क्रान्त )

[2]इति तृतीयोऽङ्कः ।

---

षवत' इति । **सायंतन इति** । सायंतने सायंकालीने । 'सायंचिर–' (पा ४।३।२३) इत्यादिना व्युल् तुडागमश्च । सवनकर्मणि यजनकर्मणि । 'सवनं यजने स्नाने' इति विश्वः । सम्यक्प्रवृत्ते न त्वादादेव । हुताशनवतीं वेदीं परित प्रयस्ता इतस्ततो विक्षिप्ता· । क्वचित् **'प्रकीर्णाः'** इति पाठ· । संध्यापयोदवत्सायंकालीनमेघवत्कपिशा· पिङ्गटा भयमादधाना पिशिताशनाना रक्षसा छायाः पङ्क्तयो बहुधाऽनेकवारं चरन्ति गतागतं कुर्वन्ति । 'छाया स्यादातपाभावे सच्छोभापङ्क्तिषु स्मृता' इति विश्व· । परिप्रेति पिशापिशीति च्छेकवृत्तिश्रुत्यनुप्रासाः । उपमा च । वसन्ततिलका वृत्तम् । अत्रापि भयानको रस । उक्तं च— 'भये तु मन्तुना घोरदर्शनश्रवणादिभि । चेतस्यतीव चाञ्चल्यं तत्प्रायो नीचमध्ययो·' इति । तद्भयं स्थायिभावः । पिशिताशनच्छायावलोकन विभाव । पद्यस्थ'भय'शब्देन त्रासलक्षणो व्यभिचारी । उद्दीपनभावादिकं स्वयमूहनीयम् । अत्र प्रतिमुखसधौ नर्मनर्मद्युत्युपासनान्यङ्गानि नोक्तानि । कानिचिद्व्यत्ययेनाप्युक्तानि तत्कथमिति न वाच्यम् । भरतादिभिरेव तथोक्ते । तत्रादि**भरते**— 'कविभि· काव्यकुशलै रसभावमपेक्ष्य तु । सर्वाङ्गानि कदाचित्तु द्वित्रिहीनानि वा पुनः । व्युत्क्रमेणापि कार्याणि' इति । **रसार्णवसुधाकरेऽपि**—'केषाचिदेषामङ्गाना वैकल्यं केचिदूचिरे' इत्यादि ।

**इति श्रीमदभिज्ञानशाकुन्तलटीकायामर्थद्योतनिकायां तृतीयोऽङ्कः समाप्तः ॥**



---

**पाठा०**—१ '( आकर्ण्य, सावष्टंभम् ) **भो भोस्तपस्विनः! मा भैष्ट, अहमागतोऽस्मि ।'**. २ **'इति शृंगारभोगो नाम'.**

# चतुर्थाङ्कस्य कथावस्तु

अस्मिन्नङ्के कुसुमावचयव्यग्रयोः प्रियंवदानसूययोर्मिथःसंवादेन विदितं भवति यत्तपोवनप्रक्रान्ताया इष्ट्याः समाप्तौ ऋषिभिर्विसर्जितो नृपः स्वनगरीं प्रति प्रातिष्ठत्। परं च स्वीयान्तःपुरजनेषु स विहरन्नितोगतं वृत्तं स्मरिष्यति वा न वेति सन्देह इति शून्यमानसा शकुन्तला दुष्यन्तप्रतिज्ञाश्वासनादीनि संस्मरन्ती, व्यतीतेऽपि भूयसि समये न कोऽपि निदेशो नृपतिसकाशादधिगत इति सविकल्पं विचिन्तयन्ती कथमप्युटजसन्निधावेव समयमतिवाहयति स्म। एतस्मिन्नेवान्तरे श्रूयते-यत् त्वं प्रियमनन्यमनस्कतया विचिन्तयन्ती मामतिथित्वेन द्वारे समुपस्थितं तपोधनं यस्मादवगणितवत्यसि, अतो ज्ञापितोऽपि स तव प्रियस्त्वां परिणीतां कुलवधूं पाणिग्रहणवृत्तं च विस्मरिष्यतीति शप्त्वा प्रकृतिवक्रो दुर्वासाः प्रतिनिवृत्तः। तज्ज्ञात्वा प्रियंवदया वारंवारमनुनीतो महर्षीरवादीत्—मम शापस्त्वन्यथा न भवितुमर्हति, किन्त्वभिज्ञानाभरणदर्शनेन स शापो निवर्तिष्यत इति तामाश्वास्य तत्रैवान्तर्हितोऽभवदिति। तन्निशम्य दुष्यन्तप्रदत्ताङ्गुलीयकं च स्मृत्वा न तथा तच्छापोऽनर्थकरो भवेदिति हृष्टा सती शकुन्तलायाश्चित्तोद्वेगभिया तद्वृत्तं गोप्यत्वेन प्रियंवदा ररक्ष। प्रवासात्प्रतिनिवृत्तेन महर्षिणा कण्वेनाग्निगृहप्रवेशे कृते एवाशरीरिण्या वाण्यावेदितं 'दुष्यन्तादापन्नसत्त्वा शकुन्तला' इति तच्च प्रियंवदानसूयां प्रति निरूपितवती। ततश्च महर्षिः शकुन्तलामात्मसदृशेन भर्त्रा त्वं सगतासीति समाश्वास्य शिष्यादिभिः सहाशीर्वादपुरस्सरैर्वचनैः पतिकुलं विसर्जयति। तेन च 'अर्थो हि कन्या परकीय एव तामद्य सम्प्रेष्य परिग्रहीतुः। जातो ममायं विशदः प्रकामं प्रत्यर्पितन्यास इवान्तरात्मा।' ततश्चाहमिदानीं स्वास्थ्यमापन्न इति संभावयति महर्षिः।

# चतुर्थोऽङ्कः

( ततः प्रविशतः कुसुमावचयं नाटयन्त्यौ सख्यौ )

**अनसूया**—पिअंवदे! जह वि गंधव्वेण विहिणा णिव्वुत्त-कल्लाणा[1] सउंदला अणुरूवभत्तुगामिणी संवुत्तेति[2] णिव्वुदं मे हिअअं, तह वि एत्तिअं चिंतणिज्जं। [**प्रियंवदे! यद्यपि गान्धर्वेण विधिना निर्वृत्त-कल्याणा शकुन्तलानुरूपभर्तृगामिनी संवृत्तेति निर्वृतं मे हृदयम्, तथाप्येतावच्चिन्तनीयम्।**]

---

अथ चतुर्थाङ्कादिपञ्चममध्ये 'यथोक्तं करोति' इत्यन्तेन गर्भसंधिरुक्तः। तल्लक्षणमादिभरते—'उद्भेदस्तस्य बीजस्य प्राप्तिरप्राप्तिरेव च। पुनश्चान्वेषणं यत्र स गर्भः परिकीर्तितः॥' इति। पूर्वसन्ध्युपक्षिप्ताप्तिः। दुर्वाससः शापादप्राप्तिः। पुनस्तस्य प्रसादेनाभिज्ञानदर्शनेन पुनः प्राप्तिरिति। 'अत्राप्त्याशापताकानुरोधादङ्गानि कल्पयेत्। अभूताहरणं मार्गो रूपोदाहरणे क्रमः॥ संग्रहश्चानुमानं च तोटकाधिबले तथा। उद्वेगसंभ्रमाक्षेपा द्वादश' इति। एषामङ्गानां व्याख्यानावसरे तत्र तत्र लक्षणं वक्ष्यामः। तत्र पताकाया अनित्यत्वादत्र पताका नास्ति। तदुक्तं **धनिकेन**—'पताका स्यान्न वा स्यात्प्राप्तिसंभवे' इति। प्राप्त्याशाया नियतत्वमुक्तं **सुधाकरे**ऽपि—'पताकायास्त्ववस्थानं क्वचित्' इति। तेन प्राप्त्याशालक्षणमेव लिख्यते। तल्लक्षणं **सुधाकरे**—'प्राप्त्याशा तु महार्थस्य सिद्धिसद्भावभावना' इति। अत्रापि दुर्वाससः प्रसादेन महार्थस्य शकुन्तलारूपस्य राज्ञः प्राप्तिसद्भावनेति ज्ञेयम्। कुसुमावचयं नाटयन्त्याविति वामहस्तेनोत्तानेनाञ्चलेन दक्षिणेन पुरः पार्श्वादिस्थितेनौचित्याच्युतसंयुक्तेन हंसास्येन। तल्लक्षणं यथा—'तर्जन्यादिष्वङ्गुलीषु प्राच्या प्राच्या परा परा। दूरस्थोर्ध्वा मनाग्वक्रा धनुर्वक्रा तु तर्जनी॥ अङ्गुष्ठः कुञ्चितो यत्र तमरालं प्रचक्षते' इति। 'लग्नास्त्रेताग्रसंस्थानास्तर्जन्यङ्गुष्ठमध्यमाः। शेषे यत्रोर्ध्वविरले स हंसास्योऽभिधीयते॥ औचित्याच्युतसंयुक्तं कुसुमावचयादिषु॥'' इति। 'हस्तादाने चेरस्तेये' ( पा ३।३।४० ) इति घञि कृते अवचाय इति भाष्यम्। तथा च **वामन**सूत्रम्—(काव्या. ५।२।४०) 'अवतारावचायशब्दयोर्दीर्घव्यत्यासो बालानाम्' इति,-अत्रोच्यते,—'हस्तादानग्रहणे प्रत्यासत्तिरादेयस्य लक्ष्यते' इति **वृत्तिकारेण** व्याख्यातम्। हस्तादान इति किम्? 'वृक्षशिखरे पुष्पप्रचयं करोति' इति प्रत्युदाहृतम्। इदं च **पदमञ्जरी**कारेण व्याख्यातम्। आरुह्य हस्तादानेऽप्यादेयस्य प्रत्यासत्त्यभावद्धञभावः। एवमत्रापि

---

**पाठा०—१ ''कल्लाणा पिअसही सउंतला'. २ ' भत्तुभाइणी संवुत्ता तथावि ण मे णिव्वुदं हिअअं।'.**

**प्रियंवदा**—कहं विअ ? । [कथमिव ? ।]

**अनसूया**—अज्ज सो राएसी इट्ठिं परिसमाविअ इसीहिं विसज्जिओ अत्तणो णअरं पविसिअ [1]अंतेउरसमागदो इदोगदं वुत्तंतं सुमरदि वा ण वेत्ति । [अद्य स राजर्षिरिष्टिं परिसमाप्य ऋषिभिर्विसर्जित आत्मनो नगरं प्रविश्यान्तःपुरसमागत इतोगतं वृत्तान्तं स्मरति वा न वेति । ]

**प्रियंवदा**—[3]वीसद्धा होहि । ण तादिसा आकिदिविसेसा गुणविरोहिणो होंति । [4]तादो दाणिं इमं वुत्तंतं सुणिअ ण आणे किं पडिवज्जिस्सदि त्ति । [विस्रब्धा भव । न तादृशा आकृति विशेषा गुणविरोधिनो भवन्ति। तात इदानीमिमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यत इति । ]

**अनसूया**—[5]जह अहं दक्खामि, तह तस्स अणुमदं भवे । [यथाहं पश्यामि, तथा तस्यानुमतं भवेत् । ]

**प्रियंवदा**—कहं विअ ? । [कथमिव ? । ]

---

तासा बालत्वात् आदेयस्य प्रत्यासत्त्यभावाद्धृत्वभाव इति ज्ञेयम् । प्रियंवदे ! यद्यपि गान्धर्वेण विधिना निर्वृत्तकल्याणा जातमङ्गला । 'कल्याणं मङ्गलेऽपि च' इति विश्वः । शकुन्तलानुरूपभर्तृगामिनी सवृत्तेति मे निर्वृतं सुखितं हृदयम् । तथाप्येतावच्चिन्तनीयम् । कथमिव ? अद्य स राजर्षिरिष्टिं परिसमाप्य प्रहित ऋषिभिर्विसर्जित आत्मनो नगरं प्रविश्यान्तःपुरे स्त्रीसमाजे समागतो मिलित इतोगतं वृत्तान्त स्मरति वा न वा ? । अनेन वक्ष्यमाणेन दुर्वासस शापेन राज्ञो नायिकाविस्मरणकारणं सूचितम् । विस्रब्धा भव विश्वासयुक्ता भव । न तादृशा आकृतिविशेषा गुणविरोधिनो भवन्ति । 'यत्राकृतिस्तत्र गुणा वसन्ति' इत्युक्ते । तेन तस्मिन्दुष्यन्ते वञ्चनाविस्मरणादिकं न सभाव्यत इति भावः । तात इदानीमिमं वृत्तान्तं श्रुत्वा न जाने कि प्रतिपत्स्यत इति । यथाहं पश्यामि । अत्र दृशिर्ज्ञानार्थः, जानामीत्यर्थ । 'यथा'शब्दो योग्यतायाम् । योग्यतयाऽहं जानामि । तस्यानुमतं भवेदिति । यथेति 'योग्यतावीप्सापदार्थानतिवृत्तिसादृश्येषु' इति **दण्डनाथः** । कथमिव ? गुणवते कन्यका प्रतिपादनीयेत्ययं तावत्प्रथमो मुख्य· संकल्पो मानसं कर्म । तद्यदि दैवमेव सपादयति 'ननु' अवधारणे । अप्रयासेन प्रयासाभावेन

---

**पाठा०**—१ 'इट्ठिपरिसमित्तीए ईसिहिं पेसिदो अत्तणो'. २ 'अंतेउरिआसदसमो इमं जणं सुमरेदि'. ३ 'एत्थ दाव वीसत्था'. ४ 'एत्तिकं उण चिंतणीअं । तादो तित्थजत्तादो पडिणिउत्तो इमं वुत्तंतं सुणिअ ण आणे किं पडिवज्जिस्स दि त्ति' । ५ 'जधा मं पुच्छसि तधा अहिमदं तादस्स'.

**अनसूया**—[1]गुणवदे कण्णआ पडिवादणिज्जे त्ति अअं दाव पढमो संकप्पो। तं जइ देव्वं एव्व संपादेदि णं अप्पआसेण किदत्थो गुरुअणो। [ गुणवते कन्यका प्रतिपादनीयेत्ययं तावत्प्रथमः संकल्पः। तं यदि दैवमेव संपादयति नन्वप्रयासेन कृतार्थो गुरुजनः। ]

**प्रियंवदा**—( पुष्पभाजनं विलोक्य ) सहि! अवइदाइं बलिकम्म-पज्जत्ताइं कुसुमाइं। [ सखि! अवचितानि बलिकर्मपर्याप्तानि कुसुमानि। ]

**अनसूया**—णं सहीए सउंदलाए सोहग्गदेवआ अच्चणीआ। [ ननु सख्याः शकुन्तलायाः सौभाग्यदेवताऽर्चनीया। ]

**प्रियंवदा**—जुज्जदि। [ युज्यते। ]

( इति तदेव कर्मारभेते )

( नेपथ्ये )

[1]अयमहं भोः!

**अनसूया**—( कर्णं दत्त्वा ) सहि! [2]अदिधीणं विअ णिवेदिदं। [ सखि! अतिथीनामिव निवेदितम्। ]

**प्रियंवदा**—[3]णं उडजसंणिहिदा सउंदला। ( आत्मगतम् ) [4]अज्ज उण हिअएण असंणिहिदा। [ ननूटजसंनिहिता शकुन्तला। अद्य पुनर्हृदयेनासंनिहिता। ]

**अनसूया**—[5]होदु; अलं एत्तिएहि कुसुमेहि। [भवतु, अलमेतावद्भिः कुसुमैः। ]

( इति प्रस्थिते )

---

कृतार्थो गुरुजन। सखि! अवचितानि बलिकर्म पूजाकर्मतत्पर्याप्तानि कुसुमानि। 'ननु' परमताक्षेपे। सख्याः शकुन्तलायाः सौभाग्यदेवताऽर्चनीया। युज्यते। तदेव कुसुमावचयलक्षणमेव। सखि! अतिथीनामिव निवेदितम्। भावे

---

**पाठा०**—१ 'किं अण्णं। वरस्स अणुरूवस्स कण्णआ पडिवादणीअअ त्ति अअं दाव पढमो संकप्पो तं जइ देव्वं जेव संपादेदि णं कदत्थो गुरुअणो'. प्रियं०—एवं णेदं; ( पुष्पभाजनं विलोक्य ) सहि! अवचिदाइं'. २ 'अदिधिणा विअ'. ३ 'उडए संणिहिदा'. ४ 'आं अज्ज उण'. ५ 'तेण हि भोदु एत्तिकेहिं कुसुमेहिं ओअणं'.

---

**टिप्प०**—1 दुर्वासःशापकथानकं महाभारते न दृश्यते, किन्तु महाकविना कालिदासेन नायकाय परिणीतस्त्रीविस्मरणस्ववचनभङ्गादिमहाभारतीयकथानकगतदोषेभ्यः समुद्धर्तुं साहित्यपरिपोषार्थं चेदं सविधानकं सुनिपुणं स्वप्रतिभयोपकल्पितमिति प्रतीयते।

( नेपथ्ये )

आः[1] अतिथिपरिभाविनि !

विचिन्तयन्ती यमनन्यमानसा
तपोधनं[2] वेत्सि न मामुपस्थितम् ।
स्मरिष्यति त्वां न स बोधितोऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव ॥ १ ॥

**प्रियंवदा**—हद्धी । अप्पिअं एव्व संवुत्तं । कस्सिं पि पूआरुहे अवरद्धा सुण्णहिअआ सउंदला । [3]( पुरोऽवलोक्य ) णहु जस्सिं कस्सिं पि । एसो दुव्वासो सुलहकोवो महेसी । तह सविअ वेअबलुप्फुल्लाए दुव्वाराए गईए पडिणिवुत्तो । [4]को अण्णो हुदवहादो दहिदुं पहवदि ? । [ हा धिक् । अप्रियमेव संवृत्तम् । कस्मिन्नपि पूजार्हेऽपराद्धा शून्यहृदया शकुन्तला । न खलु यस्मिन्कस्मिन्नपि । एष दुर्वासाः सुलभकोपो महर्षिः । तथा शप्त्वा वेगबलोत्फुल्लया दुर्वारया गत्या प्रतिनिवृत्तः । कोऽन्यो हुतवहाद्दग्धुं प्रभवति ? । ]

**अनसूया**—गच्छ । पादेसु पणमिअ णिवत्तेहि णं जाव अहं अग्घोदअं उवकंपेमि । [ गच्छ । पादयोः प्रणम्य निवर्तयैनं यावदहमर्घोदकमुपकल्पयामि । ]

---

क्तः । ननु सबोधने । उटजसंनिहिता शकुन्तला । अद्य पुनर्हृदयेनासंनिहिता, दुष्यन्तगतहृदयेत्यर्थः । भवतु, अलमेतावद्भिः कुसुमैः । **विचिन्तयन्तीति ।** यं विचिन्तयन्त्यनन्यमानसा त्वं मा दुर्वाससमुपस्थितमागतं तपोधनम् । त्रयं विधेयम् । न वेत्सि स त्वा स्वयं न स्मरिष्यत्येव, परतु बोधितोऽपि ज्ञापितोऽपि न स्मरिष्यतीत्यपिशब्दार्थः । क कामिव ? प्रकर्षेण मत्तः प्रथमं पूर्वं कृता कथामिव । स राजा कीदृश ? प्रमत्तोऽवधानरहित । 'प्रमादोऽनवधानता' इत्यमरः । तेनासमर्थदोषः परिहृत । त्वा कीदृशीम् ? पूर्वं कृतामङ्गीकृताम् । काव्यलिङ्गोपमाश्लेषा । तयतीयेति मनमानेति नससन्निति प्रप्रेति छेकवृत्त्यनुप्रासा । वंशस्थं वृत्तम् । हा धिक्, अप्रियमेव संवृत्तम् । कस्मिंश्चिदपि । पूजार्हेऽपराद्धा शून्यहृदया शकुन्तला । न खलु यस्मिन्कस्मिन्नपि । एष दुर्वासाः सुलभकोपो महर्षि । तथा शप्त्वा वेगबलोत्फुल्लया दुर्वारया गत्या प्रतिनिवृत्तः । कोऽन्यो हुतवहाद्दग्धुं प्रभवति ? दृष्टान्तालंकारः । गच्छ । पादेषु प्रणम्य निवर्तयैनम् । पादेष्विति द्वितीयार्थे सप्तमी ।

---

**पाठा०-१ 'आः, कथमतिथिं मां परिभवसि ?.' २ 'तपोनिधिं'. ३ 'अनु०—ण हु जस्सिं'. ४ 'प्रियं०—को अण्णो हुतवहादो......अग्घोदअं अवकप्पेमि'.**

**प्रियंवदा**[1]—तह [तथा।] (इति निष्क्रान्ता)

**अनसूया**[2]—(पदान्तरे स्खलितं निरूप्य) अव्वो ! आवेगक्खलिदाए गईए पब्भट्टं मे अग्गहत्थादो पुप्फभाअणं। [अहो! आवेगस्खलितया गत्या प्रभ्रष्टं ममाग्रहस्तात्पुष्पभाजनम्।] (इति पुष्पोच्चयं रूपयति)

(प्रविश्य)

**प्रियंवदा**[3]—सहि! पकिदिवक्को सो कस्स अणुणअं पडिगेण्हदि?। किं वि उण साणुक्कोसो किदो। [सखि! प्रकृतिवक्रः स कस्यानुनयं प्रतिगृह्णाति?। किमपि पुनः सानुक्रोशः कृतः।]

**अनसूया**[4]—(सस्मितम्) तस्सि बहु एदं पि कहेहि। [तस्मिन्बह्वेतदपि कथय।]

**प्रियंवदा**[5]—जदा णिवत्तिदुं ण इच्छदि तदा विण्णविदो मए—भअव! पढम त्ति पेक्खिअ अविण्णादतवप्पहावस्स दुहिदुजणस्स भअवदा एक्को अवराहो मरिसिदव्वोत्ति। [यदा निवर्तितुं नेच्छति तदा विज्ञापितो मया—भगवन्! प्रथम इति प्रेक्ष्याऽविज्ञाततपःप्रभावस्य दुहितृजनस्य भगवतैकोऽपराधो मर्षितव्य इति]

---

यावदहमर्घोदकमुपकल्पयामि। तथेति निष्क्रान्ता। अव्वो इति दु खे। 'अव्वो सूचनादु खसभाषण-' इत्यादिसूत्रेण निपात। आवेगस्खलितया सभ्रमस्खलितया गत्या प्रभ्रष्टं ममाग्रहस्तात् पुष्पभाजनम्। अनेनापशकुनेन दुर्वाससोऽनिवृत्ति सूचिता। अत्राग्र स चासौ हस्तश्चेति समानाधिकरणे विशेषणसमासेऽवयवावयविसबन्धेन लक्षणा। उक्तं च **वामनेन** (काव्या. ५।२।२०)—'हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदाभ्याम्' इति। अन्ये-तु 'अग्रहस्त' इत्यखण्ड एवाय शब्दो हस्ताग्रवाचक इत्याहु। अपरे तु-'हस्तस्याग्रम्'इत्येव विगृह्याग्रशब्दस्याहिताग्न्यादिपाठात्पूर्वनिपातमाहु। इतरे तु-प्राकृते पूर्वनिपातनियमाभावाद्धस्ताग्रशब्दमेवाहु। पुष्पोच्चयं रूपयतीति पूर्ववत्। सखि! प्रकृतिवक्र स कस्यानुनयं प्रतिगृह्णाति?। किंचित्पुन सानुक्रोशः सकृपः कृतः। 'कृपा दयानुकम्पा स्यादनुक्रोशोऽपि' इत्यमर। तस्मिन्बह्वेतदपि कथय। यदा निवर्तितुं नेच्छति तदा विज्ञापितो मया।

---

पाठा०–१ 'अनुसूया–'. २ 'प्रियंवदा–अम्मो'. ३ 'अनुसूया–सहि, सरीरी विअ कोवो कस्स सो'. ४ 'प्रियंवदा–एदं जेव तस्सि बहुदरं ता कधेहि'. ५ 'अनुसूया–'.

**अनसूया**—तदो तदो ? । [ततस्ततः ?।]

**प्रियंवदा**—तदो मे वअणं अण्णहाभविदुं णारिहदि । किंदु अहिण्णाणाभरणदंसणेण सावो णिवत्तिस्सदि त्ति मंतअंतो सअं अंतरिहिदो । [ततो मे वचनमन्यथाभवितुं नार्हति, किंत्वभिज्ञानाभरणदर्शनेन शापो निवर्तिष्यत इति मन्त्रयन् स्वयमन्तर्हित. ।]

**अनसूया**—सक्कं दाणि अस्ससिदुं । अत्थि तेण राएसिणा संपत्थिदेण सणामहेअंकिअं अंगुलीअअं सुमरणीअंत्ति सअं पिणद्धं । तस्सिं साहीणोवाआ सउंदला भविस्सदि । [शक्यमिदानीमाश्वासयितुम् । अस्ति तेन राजर्षिणा संप्रस्थितेन स्वनामधेयाङ्कितमङ्गुलीयकं स्मरणीयमिति स्वयं पिनद्धम् । तस्मिन्स्वाधीनोपाया शकुन्तला भविष्यति ।]

**प्रियंवदा**—सहि ! एहि; देवकज्जं दाव णिवत्तेम्ह । [सखि ! एहि; देवकार्यं तावन्निर्वर्तयावः ।]

(इति परिक्रामत·)

**प्रियंवदा**—(विलोक्य) अणसूए ! पेक्ख दाव । वामहत्थोवहिदवअणा आलिहिदा विअ पिअसही । भत्तुगदाए चिंताए अत्ताणं पि एसा विभावेदि । किं उण आअंतुअं ? । [अनसूये ! पश्य तावत्; वामहस्तोपहितवदनालिखितेव प्रियसखी । भर्तृगतया चिन्तयात्मानमपि नैषा विभावयति । किं पुनरागन्तुकम् ? ।]

---

भगवन् ! प्रथम इति प्रेक्ष्य विचार्य, अत्र कोप· कर्तुं युक्तो न वेति विचार्येत्यर्थ । अविज्ञाततप प्रभावस्य दुहितृजनस्य भगवतैकोऽपराधो मर्षितव्य इति । अयमर्थ —यथा सा कण्वदुहिता तद्वत्तव दुहिता । अथ च दुहिता बालिकात एवाविज्ञाततप-प्रभावा । अतोऽस्या प्रथम एकोऽपराध इति सोढव्य· । ततो 'मे वचनमन्यथाभवितुं नार्हति । किंत्वभिज्ञानाभरणदर्शनेन शापो निवर्तिष्यते' इति मन्त्रयन्कथयन्स्वयमन्तर्हित· । शक्यमिदानीमाश्वासयितुम् । अस्ति तेन राजर्षिणा सप्रस्थितेन स्वनामधेयाङ्कितमङ्गुलीयकं स्मरणीयमिति स्वयं पिनद्धं परिधापितम्, अस्तीत्यन्वय· । तस्मिन्स्वाधीनोपाया शकुन्तला भविष्यति । देवकार्यं तावन्निर्वर्तयाव । **विलोक्येति** । शकुन्तलामिति शेष· । अनसूये ! पश्य तावत् । वामहस्तोपहितवदना ।

---

**पाठा०**—१ 'प्रियंवदा–'. २ 'अनु०–तदो सो ण.. भविदुं अरिइदि ।' ३ 'प्रियं०–'. ४ 'सुमरावणीअं ति सउंतलाहत्थे सअं जेव पिणद्धाविदं । एसो ज्जेव तास्सिं साहीणो उवाओ भविस्सदि ।'. ५ 'अनु०–'.

**अनसूया**—पिअंवदे! दुवेणं एव्व णं णो मुहे एसो वुत्तंतो चिट्ठदु। रक्खिदव्वा खु पकिदिपेलवा पिअसही। [प्रियंवदे! द्वयोरेव ननु नौ मुख एष वृत्तान्तस्तिष्ठतु। रक्षितव्या खलु प्रकृतिपेलवा प्रियसखी]

**प्रियंवदा**—को णाम उण्होदएण णोमालिअं सिंचेदि?। [को नामोष्णोदकेन नवमालिकां सिञ्चति?।]

(इत्युभे निष्क्रान्ते)

*विष्कम्भः*[1]।

—:०:—

(ततः प्रविशति सुप्तोत्थितः शिष्यः)

**शिष्यः**—[2]वेलोपलक्षणार्थमादिष्टोऽस्मि तत्रभवता प्रवासादुपावृत्तेन काश्यपेन। प्रकाशं [3]निर्गतस्तावदवलोकयामि कियदवशिष्टं रजन्या इति। (परिक्रम्यावलोक्य च) हन्त प्रभातम्। तथा हि,—

**यात्येकतोऽस्तशिखरं पतिरोषधीना-**
**माविष्कृतोऽरुणपुरःसर एकतोऽर्कः।**

---

अत्र 'वामहस्त'ग्रहण स्त्रीस्वभावात्। आलिखितेवेत्युत्प्रेक्षा। अतिनिश्चलत्वं सादृश्यं गम्यम्। प्रियसखी शकुन्तला। भर्तृगतया चिन्तयात्मानमपि नैषा विभावयति जानाति, 'काहं, किं करोमि, कुत्र तिष्ठामि?' इत्याद्यात्मविषयकमपि ज्ञानं नास्तीत्यर्थः। किं पुनरागन्तुकम्? विभावयतीत्यनुषज्यते, तज्ज्ञानं दूरापास्तमित्यर्थः। द्वयोरेव। नन्वनुमतौ। आवयोर्मुख एष वृत्तान्तस्तिष्ठतु, स्थिते· प्राप्तकालतेत्यर्थः। रक्षितव्या खलु प्रकृतिपेलवा प्रियसखी। पूर्ववाक्यं प्रत्यार्थो हेतुः। को नामोष्णोदकेन नवमालिका सिञ्चति?। वैधर्म्यदृष्टान्त। 'द्वयो' इत्यादिनैतदन्तेन शकुन्तला प्रति शापाकथनच्छद्मना भूताहरणमङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'कपटाश्रयं यद्वाक्यमभूताहरणं विदु' इति। विष्कम्भलक्षणं पूर्वोक्तम्। अयमपि शुद्धविष्कम्भ, केवलं प्राकृतेन कृतत्वात्। वेलोपलक्षणार्थं समयज्ञानार्थम्। 'वेला काले च जलधेस्तीरनीरविकारयोः' इति विश्वः। **यातीति**। ओषधीनां पतिश्चन्द्र.। अतिदु सहमरणादिविपत्तिसहस्रविनाशका ओषधय, तासा पतिरप्यस्तशिखरं यातीति। इममर्थमभिद्योतयितुमेतत्पदव्यपदेशः। 'शिखर'पदेनात्युच्चै पतनायेति सूचितम्। अरुणोऽनूरु पुर सरो यस्य स तादृशोऽर्क एकतः पूर्वत आविष्कृत प्रकटीभूत। तेजोद्वयस्य चन्द्रसूर्यरूपस्य युगपदेकदैकसमयो-

---

पाठा०—१ 'प्रवेशकः।'. २ 'वेलोपलक्षणायादिष्टोऽस्मि प्रभासात्प्रतिनिवृत्तेन तत्रभवता कण्वेन तत्प्रकाशं'. ३ 'निर्गत्यावलोकयामि किमवशिष्टं'.

तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवात्मदशान्तरेषु[1] ॥ १ ॥

अपि च,—

अन्तर्हिते शशिनि सैव कुमुद्वती मे
दृष्टिं न नन्दयति संस्मरणीयशोभा।
इष्टप्रवासजनितान्यबलाजनस्य
दुःखानि नूनमतिमात्रसुदुःसहानि[2] ॥ २ ॥

---

भयदर्शनेनैव नियम कर्तु शक्यते, न तु क्रमिकदर्शनेनेति युगपदित्युक्ति । स्वव्यसनोदयाभ्यामस्तमयोदयाभ्या विपत्सपद्भ्या च हेतुभ्याम् । 'व्यसनं विपदि भ्रंशे' इत्यमर । 'उदय सपदुत्पत्त्यो पूर्वशैले समुन्नतौ' इत्यजय· । लोको जनः । आत्मदशान्तरेषु स्वदशाविशेषेषु । 'अन्तर'शब्दो विशेषवाची । नियम्यत इवेत्युत्प्रेक्षा । स्वस्वविपत्ति-सपत्तिदशाया केनापि दु ख-हर्षौ न कार्याविति भावः । अत्र पूर्वार्धे य· कश्चिदतिसमृद्धमूलोऽपि नाशं याति, अन्यो यं कंचनामसर्थ सर्वदा स्वाश्रितमुदयन्नेव स्वयमुदयं गच्छतीति सत्पुरुषद्वयव्यवहारसमारोपात् समासोक्तिः । उत्तरार्धे च नियम्यत इति तत्सर्वाचरणे प्रयोगात्सेनव(?)द्वस्तुसबन्ध-सामर्थ्याद्विम्बप्रतिबिम्बकल्पनरूपा निदर्शना व्यङ्ग्या, उत्प्रेक्षाया वाच्यत्वात् । वाच्या निदर्शना यथा (कुव० १९।५६)—'चूडामणिपदे धत्ते यो देवं रविमागतम्। सता कार्यातिथेयीति बोधयन्गृहमेधिन· ॥' इति । अत्र प्रभातवर्णने प्रकृत उभयोरपि प्राकरणिकत्वादरुणपुर सरत्वस्य समानतया तुल्ययोगितापि । तेजोद्वयस्य व्यसनो-दयाभ्यामिति यथासख्यमपि । हेतुश्च । कतोकतो इति द्वयद्वयेति छेकवृत्त्यनुप्रासौ । वसन्ततिलका वृत्तम् । उद्देश्यप्रतिनिर्देश्ययोरेकपदोपादाननियमे सत्यप्यत्रौषधि-प्रत्यर्कशब्दोद्देश्यत्वेऽपि सर्वनामवत्तेजोद्वयस्य प्रतिनिर्देशेऽपि तत्र तयोरिति तेजो-रूपस्फुरणाज्जगत्स्थितिकारणस्य तेजोद्वयस्येदृशी गतिरन्यस्य किमु वक्तव्यमित्यर्थ-स्फुरणाच्च सहृदयवतामर्थपोषेण चमत्कारमेवावहतीत्येतादृशस्थले न दोषावकाश इति ज्ञेयम् । **अन्तरिति** । शशिनि चन्द्रेऽन्तर्हिते व्यवहिते । 'अन्तर्धा व्यवधा' इत्यमर· । यत स शशयुक्त कलङ्की, अतस्तस्यान्तर्धानमुचितमिति भाव । या पूर्वं विकसितकुसुमा कमलोपहारकारिणी सैव तत्रापि या काचन न भवति,

---

**पाठा०**—१ 'इवैष दशान्तरेषु'. २ '°दुरुद्वहानि'. ३ 'अपि च—कर्कन्धूनामुपरि तुहिनं रञ्जयत्यग्रसन्ध्या दार्भं मुञ्चत्युटजपटलं वीतनिद्रो मयूरः। वेदिप्रान्तात्खुरविलिखितादुत्थितश्चैष सद्यः पश्चादुच्चैर्भवति हरिणः स्वाङ्गमायच्छमानः ॥ अपि च—पादन्यासं क्षितिधरगुरोर्मूर्ध्नि कृत्वा सुमेरोः क्रान्तं येन क्षयिततमसा मध्यमं धाम विष्णोः। सोऽयं चन्द्रः पतति गगनादल्पशेषैर्मयूखैरत्यारूढिर्भवति महतामप्यपभ्रंशनिष्ठा ॥'.

( प्रविश्यापटीक्षेपेण )

**अनसूया**—जइ[1] वि णाम विसअपरम्मुहस्स वि जणस्स एदं ण [2]विदिअं तह वि तेण रण्णा सउंदलाए अणज्जं आअरिदं । [ यद्यपि नाम विषयपराङ्मुखस्यापि जनस्यैतन्न विदितं तथापि तेन राज्ञा शकुन्तलाया-मनार्यमाचरितम् । ]

**शिष्यः**—यावदुपस्थितां होमवेलां गुरवे निवेदयामि ।

( इति निष्क्रान्तः )

**अनसूया**—पडिबुद्धा[3] वि किं करिस्सं ? । ण मे उइदेसु[4] वि णिअ-करणिज्जेसु हत्थपाआ पसरंति । कामो[5][1] दाणि सकामो होदु ।

अपि तु पृथिवी हर्षकारिणी मे तापसस्य विषयादिविवेकशून्यस्य दृष्टिं न नन्दयति न हर्षयति । नञार्थो हेतु । कीदृशी ? .स्म'णीयाऽदृश्या शोभा यस्या' सा । इष्ट प्रियस्तस्य प्रवासो देशान्तरस्थितिस्तेन जनितानि दु खानि । अबलाजनस्येति सुदु सहत्वेनोक्तम् । अन्यथा स्त्रीजनस्येत्येव ब्रूयात् । 'जन' शब्देन जातिमात्रग्रहणम् । नूनं निश्चितम् । अतिमात्रमत्यर्थं सुदु.सहानि । अतिमात्र-सुशब्दौ दु सहत्वस्या'य-शक्यानुष्ठानं बोधयत' । अत्र पूर्वार्धे नायकेऽन्तर्हिते नायिका दृष्टिं न नन्दयतीति नायिका-नायकयोर्व्यवहारसमारोपात्समासोक्तिः । उत्तरार्धेन सामान्येन विशे-षस्य समर्थनादर्थान्तरन्यास । इष्टेति जनिजनेति मतिमात्रेति - छेकवृत्तिश्रुत्यनु-प्रासा काव्यलिङ्गं च । वृत्तमनन्तरोक्तमेव । अथ च कौ पृथिव्या मुद्वती हर्षयुक्ता सैव पूर्वं दृष्टा शकुन्तला । 'शशिनि'इति दुष्यन्ते विषयनिगरणात्तद्वंशोद्भवत्वाद्वा-ऽन्तर्हितेऽसंनिहिते इत्यादि पूर्वार्धं सर्वं योज्यम् । तेनास्या राजगृहं प्रति प्रस्थापनसूचकं तृतीयं पताकास्थानमुपक्षिप्तम् । तल्लक्षणमुक्तं **मातृगुप्ताचार्यैः**—'अर्थोपक्षेपणं यत्र न गूढं सविनं (?) भवेत् । श्लिष्टाप्रत्युत्तरोपेतं तृतीयं तन्मतं तथा ॥' इति । शिष्योक्तार्थान्तरन्यासश्रवणानन्तरं प्रबुद्धसख्या अन-सूयाया अपटीक्षेपेण प्रवेशः । 'नासूचितस्य पात्रस्य प्रवेशो निर्गमोऽपि च' इत्युक्तेः । अपटी जवनिका । 'अपटी काण्डपटीका प्रतिसीरा जवनिका तिरस्करिणी' इति हलायुधः । यद्यप्येवमपि नाम विषयपराङ्मुखस्यापि जनस्या-प्येतन्निवेदितमपि न विदितमेवेति योज्यम् । अपेरवधारणार्थत्वात् । तथापि तेन

**पाठा॰**—१ 'एव पि णाम' २ 'णिवदिदं जधा तेण'. ३ 'ण पहादा रअणी, ता लहुं पडिबुद्ध म्हि । अध वा पडिबुद्धा वि'. ४ 'पहादकरणीएसुं'. हत्था पस°' ५ 'सकामा दाणिं कामो भोदु'.

**टिप्प॰**—1 वक्रोक्तिरियम्, तथा हि **विक्रमोर्वशीये** ( २।११ )–'अलब्धफलनीरसान्मम विधाय तस्मिञ्जने समागममनोरथान् भवतु पञ्चबाण सुखी' इति ।

जेण असच्चसंधे [1]जणे सुण्णहिअआ सही पदं कारिदा । [2]अहवा, दुव्वाससो कोवो एसो विआरेदि । अण्णहा कहं सो राएसी तारिसाणि मंतिअ एत्तिअस्स कालस्स [3]लेहमेत्तं पि ण विसज्जेदि ? ता इदो अहिण्णाणं अगुलीअअं से विसज्जेम । [4]दुक्खसीले तवस्सिजणे को अब्भत्थीअदु ? [5]णं सहीगामी दोसो त्ति [6]व्ववसिदा वि ण पारेमि, पवासपडिणिउत्तस्स तादकस्सवस्स दुस्संतपरिणीदं आवण्णसत्तं सउंदलं णिवेदिदुं । [7]इत्थंगए अम्हेहिं किं करणिज्जं ? । [ प्रतिबुद्धापि किं करिष्ये ? न म उचितेष्वपि निजकार्येषु हस्तपादं प्रसरति । काम इदानीं सकामो भवतु । येनासत्यसंधे जने शून्यहृदया सखी पदं कारिता । अथवा, दुर्वाससः कोप एष विकारयति । अन्यथा कथं स राजर्षिस्तादृशानि मन्त्रयित्वैतावत्कालस्य लेखमात्रमपि न विसृजति ? तदितोऽभिज्ञानमङ्गुलीयकं तस्य विसृजावः । दुःखशीले तपस्विजने कोऽभ्यर्थ्यताम् ? ननु सखीगामी दोष इति व्यवसितापि न पारयामि, प्रवासप्रतिनिवृत्तस्य तातकाश्यपस्य दुष्यन्तपरिणीतामापन्नसत्त्वां शकुन्तलां निवेदयितुम् । इत्थंगतेऽस्माभि. किं करणीयम् ? । ]

---

राज्ञा शकुन्तलायामनार्यमाचरितम् । होमवेलानिवेदनार्थं गते शिष्येऽस्यास्तत्र समार्जनादि कर्तुमार्याया एव प्रबोधकाल इति वदति । प्रतिबुद्धोत्थितापि कि करिष्ये । न म· उचितेष्वपि निजकार्येषु हस्तपाद प्रसरति । काम इदानी सकामो भवतु । अयमर्थः–सर्वदा वक्रोऽनार्येष्वेव प्रवर्तत इति साभिलाषो भवतु । तस्याभिलाषः पूर्यतामिति । येन कामेनासत्यसधेऽसत्यप्रतिज्ञे । 'सधा प्रतिज्ञा मर्यादा' इत्यमर । जने शून्यहृदया सखी पदं स्थानं कारिता । 'शून्यहृदय'पदं हेतुत्वेनोपात्तम् । अथवा दुर्वासस कोप एष विकारयत्यन्यथाकारयति । 'वेणीसहर्पा अन्यथात्वपरिणामेषु' इति गणपाठात् । 'अन्यथा कथं स राजर्षि' इति साभिप्रायम् । तादृशानि मन्त्रयित्वैतावत्कालस्य लेखमात्रमपि न विसृजति । तदितोऽभिज्ञानमङ्गुलीयकं तस्य विसृजावः । दु खशीले तपस्विजने कोऽभ्यर्थ्यताम् ? तत्र गन्तुमिति शेष. । ननु सखीगामी दोष इति व्यवसितापि जातव्यवसायापि न पारयामि प्रवासप्रतिनिवृत्तस्य तातकाश्यपस्य दुष्यन्तपरिणीतामापन्नसत्त्वा गुर्विणीम् । 'आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी' इत्यमर. । शकुन्तला निवेदयितुं सपादयितुम् । सखीगामी दोष इति निवेदयितुं न पारयामीति सबन्ध । अनेन देववाण्यास्या अन्तर्वत्नीत्वं श्रावयिष्यत इति सूचितम् । इत्थंगतेऽस्माभि· कि करणी-

---

पाठा०—१ 'जणे पदं'. २ 'अध वा ण तस्स राएसिणो अवराहो । दुव्वासासावो ख एसो पहवदि । अण्णधा'. ३ 'वाआमेत्तकं पि'. ४ 'णिदुक्खसीदले.' ५ 'ण अ सही°'. ६ 'कदुअ ववसिदाओ'. ७ 'ता एत्थ दाणिं किं णु'.

( प्रविश्य )

**प्रियंवदा**—( सहर्षम् ) सहि ! तुवर सउंदलाए पत्थाणकोदुअं णिव्वत्तिदुं । [ सखि ! त्वरस्व शकुन्तलायाः प्रस्थानकौतुकं निर्वर्तयितुम् । ]

**अनसूया**—सहि ! कहं एदं ? । [ सखि ! कथमेतत् ? । ]

**प्रियंवदा**—सुणाहि, दाणिं सुहसइदपुच्छिआ सउंदलासआसं गदम्हि । तदो जाव एणं लज्जावणदमुहिं परिस्सजिअ तादकस्सवेण एव्वं अहिणदिद—'दिट्ठिआ धूमाउलिददिट्ठिणो वि जअमाणस्स पाअए एव्व आहुदी पडिदा । वच्छे ! सुसिस्सपरिदिण्णा विज्जा विअ असोअणिज्जा संवुत्ता । अज्ज एव्व इसिरक्खिदं तुमं भत्तुणो सआसं विसज्जेमि—त्ति । [ शृणु; इदानीं सुखशयनपृच्छिका शकुन्तलासकाशं गतास्मि । ततो यावदेनां लज्जावनतमुखीं परिष्वज्य तातकाश्यपेनैवमभिनन्दितम्—दिष्ट्या धूमाकुलितदृष्टेरपि यजमानस्य पावक एवाहुतिः पतिता । वत्से ! सुशिष्यपरिदत्ता विद्येवाशोचनीया संवृत्ता । अद्यैव ऋषिरक्षितां त्वां भर्तुः सकाशं विसर्जयामि—इति । ]

यम् ? सखि ! त्वरस्व शकुन्तलायाः प्रस्थाने गमनसमये कौतुकं पारम्पर्यागतमङ्गलं निर्वर्तयितुं सपादयितुम् । 'कौतुकं नर्मणीच्छायामुत्सवे कुतुके मुदि । पारम्पर्यागतख्यातमङ्गलोद्वाहसूत्रयोः ॥' इति हैमः । कथमेतत् ? शृणु; इदानी सुखशयनपृच्छिका शकुन्तलाया सकाशं गतास्मि । प्रातर्गत्वा रात्रौ तव सुखशयनं जातमिति या पृच्छति सा सुखशयनपृच्छेत्युच्यते, तेन प्रातः सुखशयनं प्रष्टुं गतास्मीत्यर्थः । ततो यावदेना लज्जावनतमुखी परिष्वज्य तातकाश्यपेनैवमभिनन्दितम् । दिष्ट्या दैवेन धूमाकुलितदृष्टेरपि यजमानस्य पावक एवाहुति पतिता । अनेन दृष्टान्तेन स्वस्य कृतकृत्यता ध्वनिता । ममायास विनैव वाञ्छित-

**पाठा०**—१ '°कोदूहलाइं करीअंति'. २ '( सविस्मयम् ) सहि, कधं विअ ।' ३ 'सहसुत्तिआपुच्छणणिमित्तं'. ४ 'अनु०-तदो तदो । प्रियं०-तदो जाव'. ५ 'तादकण्णो अहिणंदेदि'. ६ 'वच्छे दिट्ठिआ धूमोवरुद्धदिट्ठिणो'. ७ 'मुहे ज्जेव णिवडिदा आहुदी'. ८ 'सुसिस्सपरिग्गहीदा विअ'. ९ 'ता अज्ज ज्जेव तुमं इसिपरिग्गहीदं कदुअ'.

**टिप्प०**–1 महाकवि–कालिदासस्याभिजातब्राह्मणान्वयजत्व पारम्परिक वैदिकक्रियानपुण्य वैदिकप्रवरत्व च ससूच्यतेऽनेन वाक्येन । नहि ब्रह्मकमापरिचितो य कश्चिदेताहृक्कल्पना मूर्ततयोपन्यस्तु प्रभवेत् । 2 यच्चोक्त **मनुना** ( २।११४ )–'विद्या ब्राह्मणमेत्याह शेवधिस्तेऽस्मि रक्ष माम् । असूयकाय मा मादास्तथा स्या वीर्यवत्तमा' ॥ इति ।

**अनसूया**—[१]अह केण सूइदो तादकस्सवस्स वुत्तंतो? । [अथ केन सूचितस्तातकाश्यपस्य वृत्तान्तः? ।]

**प्रियंवदा**—अग्गिसरण पविट्ठस्स सरीरं विणा छंदोमईए वाणिआए । [अग्निशरणं प्रविष्टस्य शरीर विना छन्दोमय्या वाण्या ।]

(सस्कृतमाश्रित्य)

दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः ।
अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव ॥ ३ ॥

**अनसूया**—(प्रियंवदामाश्लिष्य) सहि! पिअ मे; किंदु अज्ज एव्व सउंदला णीअदित्ति उक्कठासाधारणं परितोसं [२]अणुहोमि । [सखि! प्रियं मे, किंत्वद्यैव शकुन्तला नीयत इत्युत्कण्ठासाधारणं परितोषमनुभवामि ।]

---

स्थले सबन्धो जात इत्यर्थ । वत्से! सुशिष्यपरिदत्ता विद्येवाशोचनीया संवृत्ता । अनेन तस्या कृतकृत्यता ध्वनिता । अद्यैव ऋषिरक्षिता त्वा भर्तु सकाशं विसर्जयामीति । 'वर्तमानसामीप्ये–' (पा. ३।३।१३१) इति लट्। अथ केन सूचित कथितस्तातकाश्यपस्य वृत्तान्त ?। अग्निशरणमग्निहोत्रगृहम्। 'शरण गृहरक्षित्रो' इत्यमर । प्रविष्टस्य शरीर विनाऽशरीरिण्या छन्दोमय्या वाण्या सूचित इत्यर्थ । **संस्कृतमाश्रित्येति** । उक्तं च **मातृगुप्ताचार्यैः**—'योज्यं विदूषकोन्मत्तबालतापसयोषिताम् । नीचानां पण्डकाना च नीचग्रहविकारिणाम् ॥ विद्वद्भि प्राकृतं कार्यं कारणात्सस्कृतं क्वचित् ॥' इति । अत्र चाशरीरिणीवाण्यनुवाद एव कारणम् । यथास्थितस्यैवानुवादः । स च सस्कृतमन्तरेण न सभवतीति सस्कृताश्रयणम् । **दुष्यन्तेनेति** । नामानुकीर्तनेन सोमवंशोद्भवत्वेन किमप्याभिजात्यमौदार्यविनयादिगुणसपन्नत्वं च व्यज्यते । भुवो भूतय ऐश्वर्यायेति । अनेन तस्य भाविचक्रवर्तित्वं ध्वन्यते । आहित निषिक्तं तेजो दधानाम् । तेज इति विषयनिगरणेनातिशयोक्ति । तेन तेजस्त्रयरूपत्वं गर्भस्य ध्वनितम् । तनयामवेहि जानीहि । 'अग्निगर्भा शमीमिव' इति सहजपूतत्वं ध्वनितम् । उपमानुप्रासौ । अनेन मार्गलक्षणमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'भूतार्थवचनं चैष मार्ग इत्यभिधीयते' इति । अशरीरिण्या वाचा सत्यार्थकथनात्प्राप्त्याशानुगम-

---

**पाठा०**—१ 'सहि, केण उण आचक्खिदो तादकण्णस्स अअं वुत्तंतो'. २ 'अणुभवामि'.

---

**टिप्प०**–1 मृगशापाद्भीतो वह्नि शमीवृक्षमध्यगच्छदितीतिवृत्त महाभारते (शल्यप०) 'ततोऽग्नितीर्थमासाद्य शमीगर्भस्थमेव हि। ददृशुर्ज्वलनं तत्र वसमानं यथाविधि' इति दृश्यते।

**प्रियंवदा**—सहि! आवां दाव उक्कंठं विणोदइस्सामो । सा तवस्सिणी णिव्वुदा होदु । [सखि! आवां तावदुत्कण्ठां विनोदयिष्यावः । सा तपस्विनी निर्वृता भवतु । ]

**अनसूया**—तेण हि एदस्सिं चूदसाहावलंबिदे णारिएरसमुग्गए एतण्णिमित्तं एव्व कालंतरक्खमा णिक्खित्ता मए केसरमालिआ । ता इमं हत्थसंणिहिदं करेहि । जाव अहंपि से मिअलोअण तित्थमित्तिअं दुव्वाकिसलअणित्ति मंगलसमालंभणाणि विरएमि । [तेन ह्येतस्मिंश्चूतशाखावलम्बिते नालिकेरसमुद्गक एतन्निमित्तमेव कालान्तरक्षमा निक्षिप्ता मया केसरमालिका । तदिमां हस्तसंनिहितां कुरु । यावदहमपि तस्यै मृगरोचनां तीर्थमृत्तिका दूर्वाकिसलयानीति मङ्गलसमालम्भनानि विरचयामि । ]

**प्रियंवदा**—तह करीअदु । [तथा क्रियताम् । ]

(अनसूया निष्क्रान्ता, प्रियंवदा नाट्येन सुमनसो गृह्णाति)

(नेपथ्ये)

**गौतमि! आदिश्यन्तां शार्ङ्गरवमिश्राः शकुन्तलानयनाय ।**

---

त्वम् । सखि! प्रियं मे, कित्वद्यैव शकुन्तला नीयत इत्युत्कण्ठासाधारणं परितोषमनुभवामि । तेनोत्कण्ठा परितोषश्चेत्युभयमप्यनुभवामीत्यर्थः । आवा तावदुत्कण्ठा विनोदयिष्याव परिहरिष्याव । सा तपस्विन्यनुकम्पार्हा निर्वृता सुखिता भवतु । 'तपस्वी त्वनुकम्पार्हः' इत्यमर । तेनैतस्मिंश्चूतशाखावलम्बिते नालिकेरस्य समुद्गके संपुटके एतन्निमित्तमेव कालान्तरक्षमा निक्षिप्ता मया केसरमालिका बकुलमाला । तदिमा हस्तसनिहिता कुरु, गृहाणेत्यर्थः । यावदहमपि तस्यै तदर्थम् । 'तादर्थ्ये ङिच्च' इति विकल्पेन षष्ठीविधानात् । मृगरोचना गोरोचनाम् । 'मृगः पशौ कुरङ्गे च' इति विश्व । तीर्थमृत्तिका दूर्वाकिसलयानि दूर्वाङ्कुरा इत्येतद्रूपाणि मङ्गलसमालम्भनानि मङ्गलालंकरणानि विरचयामि, एकत्र करोमीत्यर्थः । 'समालम्भनमालेपे तिलकेऽलंकृतावपि' इति यादवप्रकाश । तथा क्रियताम् । अनसूये! त्वरस्व । एते खलु हस्तिनापुरगामिन ऋषय आकार्यन्ते । सखि! एहि; गच्छावः । एषा सूर्योदय एव शिखामज्जिता मज्जनं स्नानं कारिता अभ्यङ्गस्नानं कारितेति यावत् । प्रतिष्ठिता गृहीता नीवारा

---

**पाठा०**—१ 'अम्हे कधं पि उक्कंठं'. २ 'सा दाणिं तवस्सिणी'. ३ 'कालहरणक्खमा केसरगुंडा णिक्खित्ता चिट्ठंति'. ४ 'ते तुमं णलिणीवत्तसंगदे करेहि।'. ५ 'गोरोअणं तित्थमट्टिअं'. ६ 'विरअआमि'. ७ 'शार्ङ्गरवशारद्वतमिश्राः'.

**प्रियंवदा**—( कर्णं दत्त्वा ) अनसूए ! तुवरसु; एदे खु हत्थिणाउरगामिणो इसीओ सद्दावीअंति । [ अनसूये ! त्वरस्व, एते खलु हस्तिनापुरगामिन ऋषय आकार्यन्ते । ]

( प्रविश्य समालम्भनहस्ता )

**अनसूया**—सहि ! एहि; गच्छम्ह । [ सखि ! एहि; गच्छावः । ]

( इति परिक्रामतः )

**प्रियंवदा**—( विलोक्य एसा सुज्जोदए एव्व सिहामज्जिदा पडिच्छिदणीवारहत्थाहिं सोत्थिवाअणकाहि तावसीहिं अहिणंदीअमाणा सउंदला चिट्ठइ । उवसप्पम्ह णं । [ एषा सूर्योदय एव शिखामज्जिता प्रतिष्ठितनीवारहस्ताभिः स्वस्तिवाचनिकाभिस्तापसीभिरभिनन्द्यमाना शकुन्तला तिष्ठति । उपसर्पाव एनाम् । ]

( इत्युपसर्पतः )

( ततः प्रविशति यथोद्दिष्टव्यापारासनस्था शकुन्तला )[२]

**तापसीनामन्यतमा**—( शकुन्तलां प्रति ) जादे ! भत्तुणो बहुमाणसूअअं महादेईसद्दं लहेहि । [ जाते ! भर्तुर्बहुमानसूचकं महादेवीशब्दं लभस्व । ]

**द्वितीया**—वच्छे ! वीरप्पसविणी होहि । [ वत्से ! वीरप्रसविनी भव । ]

---

यैरेवंभूता हस्ता यासां ताभिः । शून्यहस्तानामागमनमनुचितमिति नीवारेत्याद्युक्तिः । स्वस्तिवाचनिकाभिः पारम्पर्येण स्वस्तिवाचनाधिकारिणीभिस्तापसीभिस्तपस्विसुवासिनीभिराशीर्भिरनुगृह्यमाणा ( रभिनन्द्यमाना ) शकुन्तला तिष्ठति । उपसर्पाव एताम् । जाते पुत्रि ! भर्तुर्बहुमानसूचकं महादेवीशब्दं लभस्व । वत्से ! वीरप्रसविनी भव । वत्से ! भर्तुर्बहुमता भव । सुखमज्जनं सुस्नानं ते भवतु । स्वागतं मे सख्योः । इतो निषीदतम् । सज्जा भव । यावन्मङ्गलसमालम्भनं विरचयावः । इदमपि बहु मन्तव्यम् । दुर्लभमिदानीं मे सखीमण्डनं भविष्यतीति उचितं न ते मङ्गलकाले रोदितुम् । अनेन भविष्यद्वियोगः सूचितः । अश्रूणि विसृ(प्रमृ)ज्येति त्रिपताकानामिकया नेत्रदेशगतया । त्रिपताकालक्षणमुक्तं

---

**पाठा०**—१ 'ज्जेव किदमज्जणा'. २ 'शकुं०—भअवदीओ वंदामि ।'. ३ '°माणसुइत्तअं देवीसद्दं अधिगच्छ । ( इति गौतमीवर्जं निष्क्रान्ताः । )'.

तृतीया—अच्छे ! भत्तणो बहुमदा होहि[1]। [वत्से ! भर्तुर्बहुमता भव ।]

(इत्याशिषो दत्त्वा गौतमीवर्जं निष्क्रान्ताः)

सख्यौ—(उपसृत्य) सहि ! सुहमज्जणं दे होदु । [सखि ! सुखमज्जनं ते भवतु ।]

शकुन्तला—साअयं मे सहीणं[1]। इदो णिसीदह । [स्वागतं मे सख्योः । इतो निषीदतम् ।]

उभे—(मङ्गलपात्राण्यादाय उपविश्य) हला ! सज्जा होहि[2]। जाव मंगलसमालंभणं विरएम[3]। [हला ! सज्जा भव । यावन्मङ्गलसमालम्भनं विरचयावः ।]

शकुन्तला—ईदं[4] पि बहु मंतव्वं । दुल्लहं दाणिं मे सहीमंडणं भविस्सदि त्ति । [इदमपि बहु मन्तव्यम् । दुर्लभमिदानीं मे सखीमण्डनं भविष्यतीति ।] (इति बाष्पं विसृजति)

उभे—सहि ! उइअं[5] ण दे मंगलकाले रोइदुं । [सखि ! उचितं न ते मङ्गलकाले रोदितुम् ।] (इत्यश्रूणि प्रमृज्य नाट्येन प्रसाधयत)

प्रियंवदा—आहरणोइदं[6] रूवं अस्समसुलहेहि पसाहणेहिं विप्पआरीअदि । [आभरणोचितं रूपमाश्रमसुलभैः प्रसाधनैर्विप्रकार्यते ।]

---

प्राक् । नाट्येनेति त्रिपताकानामिकया तिलकं पार्श्वमुखसदंशाभ्यामुभयकरस्थाभ्या मालाभ्रमराभ्या तालपत्रद्वयं कर्णपूरद्वयमित्यादि । तल्लक्षणानि तु—'अरालाङ्गुष्ठतर्जन्यौ लग्नाग्रे निम्नता गतः । किञ्चिच्चेतनमध्य· स्यात्तदा संदंश उच्यते । स त्रेधा स्यादग्रतश्च मुखतः पार्श्वतः क्रमात् । प्राङ्मुखः पार्श्वमुखः इत्यस्य लक्षणम् ॥' इति । अराललक्षणमुक्तं प्राक्—'अङ्गुष्ठमध्यमाङ्गुल्यौ श्लिष्टाग्रे तर्जनी नता । यत्रोर्ध्वे विरले शेषे मकरो भ्रमरो भवेत् ॥ कर्णपूरे तालपत्रे कटकोद्धरणादिषु ॥' इति । आभरणोचितं रूपमाश्रमसुलभै· प्रसाधनैर्विप्रकार्यते, विकृतं क्रियत इत्यर्थ । आभरणोचितमित्यनेन सूचितमाभरणम् । तद्द्वारा तदान-

---

पाठा०-१ 'पिअसहीणं'. २ 'उज्जुआ दाव होहि'. ३ 'करेमो'. ४ 'उइदं पि एदं अज्ज बहुमण्णिदव्वं जदो'. ५ 'ण जुत्तं मंगल°'. ६ 'अहो, आहरणारिहं'.

( प्रविश्योपायनहस्तौ )[1]

**ऋषिकुमारकौ**[2]—इदमलंकरणम् । अलंक्रियतामत्रभवति !

( सर्वा विलोक्य विस्मिता. )

**गौतमी**—वच्छ[3] णारअ ! कुदो एदं ? । [वत्स नारद ! कुत एतत् ? ।]

**प्रथमः**—तातकाश्यपप्रभावात् ।

**गौतमी**—किं माणसी सिद्धी ? । [ किं मानसी सिद्धिः ? । ]

**द्वितीयः**—न खलु; श्रूयताम् तत्रभवता वयमाज्ञप्ताः—शकुन्तला-हेतोर्वनस्पतिभ्यः कुसुमान्याहरत—इति । तत इदानीं,—

**क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं**
**निष्ठ्यूतश्चरणोपभोगसुलभो लाक्षारसः केनचित् ।**
**अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-**
**र्दत्तान्याभरणानि तत्किसलयोद्भेदप्रतिद्वन्द्विभिः**[4] **॥ ४ ॥**

---

यनकर्तॄणामपि सूचनमार्थम् । इत्यृषिकुमारयो· प्रवेश· । **विस्मिता इति** । अकस्मादलंकारदर्शनेन तेषा चातिरमणीयत्वदर्शनेन । वत्स नारद ! कुत एतत् ? किं मानसी सिद्धि ? न खल्विति पूर्वस्योत्तररूपं भिन्नं वाक्यम् । **क्षौममिति** । केनचित्तरुणेन्दुवत् पाण्डु श्वेतम् । मङ्गलकर्मणि साधु माङ्गल्यम् । अनुपहतदशं गोरोचनाचित्रितपर्यन्तं युगलं चेत्यर्थ· । अत एवाग्रे ( पृ. १३६ ) 'परिधेहि संपदं खोमजुअलं' इति । क्षौमं दुकूलमाविष्कृतं दत्तम् । केनचित्तरुणेत्यनुषज्यते । चरण उपभोगो रञ्जनादिस्तत्र सुलभो योग्यः । अनेन विशेषणेनानेकप्रयत्नजनितचरणालेपनयोग्यतायत्नसिद्धेति ध्वनितम् । लाक्षारसोऽलक्तकद्रवो निष्ठ्यूतो दत्त । पूर्वोक्तरीत्याऽत्राप्यश्लीलपरिहार । अन्येभ्यो वृक्षेभ्य किसलयोद्भेदा उद्भिद्यमानपल्लवाः । लक्षणया रक्ततरत्वकोमलत्वादि व्यङ्ग्यम् । तत्प्रतिद्वन्द्विभिस्तत्प्रतिस्पर्धिभिः, तादृशैरिति यावत् । पर्वभागं मर्यादीकृत्योत्थितैर्वनदेवताकरतलैराभरणानि दत्तानीत्यन्वयः । अत्र वनदेवताकरतलदत्ताभरणेन तस्या आजन्मवैधव्यसौभाग्ये आभरणानामनर्घत्वादि च व्यज्यते । तत्किसलयेति विशेषणावकाशदानाय 'तल'ग्रहणम् । आपर्वेति विशेषणेन वनदेवतानामदृश्यत्वं सूचयता करतलभागस्यैव दृश्यत्वं वदता तासामेव करणत्वमस्तु, किं तद्धस्ततलैरिति शङ्का निरस्ता । स्वभावोक्तिपर्यवसितेन तत्किसलयेति तद्विशेषणेन तेषूद्भेदयोग्यता ध्वनिता । उपमयोः संसृष्टिः ।

---

**पाठा०—१** '( प्रविश्याभरणहस्तो मुनिकुमारक· ) **इदमलंकारजातमलंक्रियतामायुष्मती'. २ 'हारीतः—'. ३ 'वच्छ हारीद, कुदो'. ४ 'तत्किसलयच्छायाप्रतिस्पर्धिभिः'.**

**प्रियंवदा**—( शकुन्तला विलोक्य ) हला ! इमाए अब्भुववत्तीए सूइया दे भत्तुणो गेहे अणुहोदव्वा राअलच्छित्ति । [ हला ! अनयाभ्युपपत्त्या सूचिता ते भर्तुर्गेहेऽनुभवितव्या राजलक्ष्मीरिति । ]

( शकुन्तला व्रीडा रूपयति )

**प्रथमः**—गौतम ! एह्येहि; अभिषेकोत्तीर्णाय काश्यपाय वनस्पतिसेवां निवेदयावः ।

**द्वितीयः**—तथा ।

( इति निष्क्रान्तौ )

**सख्यौ**—अए ! अणुवजुत्तभूसणो अअं जणो । चित्तकम्मपरिअएण अंगेसु दे आहरणविणिओअं करेम्ह । [ अये ! अनुपयुक्तभूषणोऽयं जनः । चित्रकर्मपरिचयेनाङ्गेषु त आभरणविनियोगं कुर्वः । ]

---

श्रुतिवृत्त्यनुप्रासौ, अर्थापत्तिर्हेतुश्च । शार्दूलविक्रीडित वृत्तम् । 'अन्यैस्तै.' इति पठित्वा कर्तृप्रक्रमभङ्ग. परिहर्तव्य. । 'करतलै.' इत्यस्य करणत्वात्केचनात्र समादधते—पूर्वार्धे वृक्षाणा सेवासूचनम्, उत्तरत्र वनदेवतानामिति तत्कर्तृकत्वमेवोचितमिति, तन्न सम्यक्; करणत्वेनापि तदुपपत्तेः । अन्यथा पूर्वार्धवत्करणानुपादानेऽपि तत्सभवात् । किं च पूर्वत्र 'वनस्पतिभ्य. पुष्पाण्याहरत' इत्युत्तरत्र 'काश्यपाय वनस्पतिसेवा निवेदयावः' इति शिष्ययोर्वाक्येन विरोध. स्यात् । अत पूर्वोक्तमेव ज्याय. । शब्दानुपादान एकपर्वमात्र. प्रत्यय. स्यात्; 'भाग'शब्दोपादानेऽपि तु पर्वत्रयमपि प्रतीयत इति नावकरत्वम् । तेन विना दानासभवादौपम्यासगतेश्च । अनयाभ्युपपत्त्यानुग्रहेण सूचिता—भर्तुर्गेहेऽनुभवितव्या राजलक्ष्मीरिति । 'प्रविश्योपायनहस्तौ' इत्यादिनैतदन्तेनोदाहरणमङ्गमुपक्षिप्तम् । तल्लक्षणं तु —'यत्तु सातिशयं वाक्यं तदुदाहरणं स्मृतम्' इति । वृक्षाणा चेतनवद्वनदेवताहस्तैरलङ्कारदानवचनात्सातिशयत्वप्राप्त्याशानुगमत्वं प्रकटमेव । अनुपयुक्तभूषणोऽधृतालंकारोऽयं जनः । चित्रकर्मपरिचयेनाङ्गेष्वाभरणविनियोगं कुर्व. ।

---

**पाठा०**—१ 'प्रियं०—( शकुंतला विलोक्य ) कोडरसंभवा वि महुअरी पोक्खरमहुं जेव अहिलसदि । गौतमी—इमाए अब्भुववत्तीए सूइदा भत्तुणो गेहे अणुभविदव्वा राअलच्छी ।'. २ 'हारीत.—यावदिमां वनस्पतिसेवामभिषेकार्थं मालिनीतीरमवतीर्णाय भगवते कण्वाय निवेदयामि । ( इति निष्क्रान्तः )'. ३ 'अणणुभूदभूसणो अअं जणो कधं तुमं अलंकरेदु ( चितयित्वा विलोक्य च ) चित्तपरिचएण दाणिं दे अंगेसुं आहरणविणिओअं करेम्ह'.

**शकुन्तला**—जाणे[1] वो णेउणं। [जाने वां नैपुणम्।]

(उभे नाट्येनालंकुरुत)

(ततः प्रविशति स्नानोत्तीर्णः काश्यप)

**काश्यपः**—

**यास्यत्यद्य शकुन्तलेति हृदयं [2]संस्पृष्टमुत्कण्ठया**
**[3]कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम्।**
**वैक्लव्यं मम ताव[4]दीदृशमिदं स्नेहादरण्यौकसः**
**पीड्यन्ते गृहिणः [5]कथं न तनयाविश्लेषदुःखैर्नवैः ॥ ५ ॥**

(इति परिक्रामति)

---

जाने वां नैपुणम्। नाट्येनेति कर्तरीमुखेनालक्तकेन पादरञ्जनम्। हंसास्येन च्यूतसदंशेनोर्मिकापरिधापनम्। एवमन्यदप्यनुसंधेयम्। कर्तरीमुखलक्षणं यथा—'अश्लिष्टा मध्यमा पृष्ठे सस्थिता तर्जनी यदा। त्रिपताकस्य हस्तस्य तदा स्यात् कर्तरीमुख। अलक्तकादिना पादरञ्जने' इति। हंसास्यलक्षणमुक्तं प्राक्। **यास्यतीति**। अद्याधुना शकुन्तला यास्यति। न तु याता, नापि याति; अपि तु 'यास्यति' इति मनसि कृतमात्र एवेति भाव। इति कृत्वा 'हृदयमुत्कण्ठया संस्पृष्टम्। प्रेमातिशयो द्योत्यते। अत्रोद्देश्यप्रतिनिर्देश्यप्रक्रम इन्द्रियाणा स्वविषयाग्राहकत्वं च 'हृदय'पदोपादानमन्तरेण न स्फुरतीति तत्पदोपादानम्। तेन नार्थपौनरुक्त्यम्। स्तम्भिता या बाष्पस्य वृत्तिः प्रवृत्तिः, आरम्भ इति यावत्। तया कलुषः स्वरभङ्गवान्कण्ठः। स्तम्भितत्वे कारणं पुरुषगतधैर्यम्। तेन निर्हेतुत्वं न शङ्क्यम्, हेत्वलंकारस्य गम्यत्वं प्रवृत्तस्य स्तम्भयितुमशक्यत्वात् 'वृत्ति'-पदोपादानम्। एतेन स्फुटं वाचोऽप्रवृत्तिर्ध्वनिता। दर्शनं तत्तदिन्द्रियजं ज्ञानम्। चिन्तया जडं स्वस्वविषयाग्राहकम्। मनमश्चिन्तया ग्रस्तत्वात्तेन विना तद्ग्राहकत्वं तेषाम्। मम तावदादावेवेदृशमनिर्वचनीयमिदमनुभूयमानं स्नेहात्प्रीतिभावाद्वैक्लव्यं विह्वलता। कीदृशो मम? अरण्यौकसो वनवासिनः। अनेन तद्योग्यताप्यसंभावनीयेति व्यज्यते। गृहिणो गृहनिवासिन, तद्दु खाभिज्ञा इति भाव। नवैः प्रथमोत्पन्नैः। द्वितीयवारादौ पूर्वानुभूतत्वान्न तथा दु खमिति भाव। गृहिण इति व्यतिरेकः। वृत्त्यनुप्रासच्छेकानुप्रासौ। 'इति'शब्दोपादानाद्धेतुरपि। अनन्तरोक्तमेव वृत्तम्। 'दृष्टिर्जडा चिन्तया' इति पठित्वोद्देश्यप्रतिनिर्देश्यप्रक्रम-

---

**पाठा०**—१ 'जाणामि वो णिउणत्तणं।'. २ 'स्पृष्टं समुत्कण्ठया'. ३ 'अन्तर्बाष्पभरोपरोधि गदितं चिन्ताजडं°'. ४ '°दीदृशमहो स्नेहा°'. ५ 'कथं नु'.

---

**टिप्प०**–1 'काव्येषु नाटक रम्य तत्रापि च शकुन्तला। तत्रापि च चतुर्थोऽङ्कस्तत्र श्लोकचतुष्टयम्॥' इति प्रथितिः। तत्रेदं सहृदयस्वान्तग्राहि प्रथम पद्यम्।

**सख्यौ**—हला सउंदले! अवसिदमंडणासि[1]। परिधेहि संपदं खोमजुअलं। [हला शकुन्तले! अवसितमण्डनासि। परिधत्स्व सांप्रतं क्षौमयुगलम्।]

(शकुन्तलोत्थाय परिधत्ते)

**गौतमी**—जादे! एसो दे आणंदपरिवाहिणा चक्खुणा[2] परिस्सजंतो विअ गुरू उवट्ठिदो। आआरं[3] दाव पडिवज्जस्स। [जाते! एष त आनन्दपरिवाहिणा चक्षुषा परिष्वजमान इव गुरुरुपस्थितः। आचारं तावत्प्रतिपद्यस्व।]

**शकुन्तला**—(सव्रीडम्) ताद! वंदामि।[4] [तात! वन्दे।]

**काश्यपः**—वत्से!

> ययातेरिव शर्मिष्ठा भर्तुर्बहुमता[5] भव।
> सुतं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥ ६ ॥

**गौतमी**—भअवं! वरो खु एसो; ण[6] आसिसा। [भगवन्! वरः खल्वेषः; नाशिष.।]

**काश्यपः**—वत्से! इतः सद्योहुताग्नीन् प्रदक्षिणीकुरुष्व।

(सर्वे परिक्रामन्ति)

**काश्यपः**—(ऋक्छन्दसाऽऽशास्ते)

---

भङ्ग. परिहर्तव्यः। 'दृष्टिर्ज्ञानेऽक्ष्णि दर्शने' इति कोशात्। अर्थ. स एव। 'कथं न तनया–' इति काका योज्यम्। अवसितमण्डना समाप्तभूषणासि। परिधत्स्व साम्प्रतं क्षौमयुगलम्। जाते! एष त आनन्दपरिवाहिना चक्षुषा परिष्वजन्निवेत्युत्प्रेक्षा। गुरुः कण्व उपस्थित प्राप्त। आचारमभ्युत्थानवन्दनादिकं तावत्प्रतिपद्यस्व। तात! वन्दे। **ययातेरिति**। अनेन क्रमलक्षणमङ्गमुपक्षिप्तम्। 'तत्त्वोपलब्धिरिष्टस्य क्रम इत्यभिधीयते' इति। आशीर्वादव्याजेन तस्य वरत्वेन च कथनादाशीर्लक्षणो नाट्यालंकारोऽपि। 'आशीरिष्टजनाशंसा' इति तल्लक्षणात्। वर. खल्वेष, नाशिषः। ऋक्छन्दस्तेन ऋक्छन्दोग्रथितेन वाक्येनेति

---

**पाठा०–१ "°मंडणा दाणिं सि तुमं! संपदं परिधेहि विचित्तं क्षोम°". २ 'लोअणेण'. ३ 'ता समुदाआरं पडिवज्जसु'. ४ '(वन्दना करोति)'. ५ 'पत्युर्बहु°'. ६ 'ण अण आसिसा'.**

**अमी वेदिं परितः क्लृप्तधिष्ण्याः**
**समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः[1] ।**
**अपघ्नन्तो दुरितं हव्यगन्धै-**
**र्वैतानास्त्वां वह्नयः पावयन्तु[2] ॥ ७ ॥**

प्रतिष्ठस्वेदानीम् । (सदृष्टिक्षेपम्) क्व ते शार्ङ्गरवमिश्राः[3] ? ।

(प्रविश्य)

**शिष्यः**[4]—भगवन् ! इमे स्मः ।

**काश्यपः**—भगिन्यास्ते मार्गमादेशय[5] ।

**शार्ङ्गरवः**—इत इतो भवती ।

(सर्वे परिक्रामन्ति)

**काश्यपः**—भो भोः सन्निहितास्तपोवनतरवः[6] !

**पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु[7] या**
**नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।**
**आद्ये वः कुसुमप्रसूतिसमये[8] यस्या भवत्युत्सवः**
**सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥ ८ ॥**

---

यावत् । **अमी इति** । अमी पुरतः परिदृश्यमानाः क्लृप्तधिष्ण्याः क्लृप्तस्थानाः । 'धिष्ण्यं स्थाने गृहे भेऽग्नौ' इत्यमरः । अनेन त्रित्वमुक्तम् । समिद्वन्तः ससमिधः । पदसंज्ञायां जश्त्वम् । प्रान्तसंस्तीर्णेति च विशेषणद्वयेन सद्योद्धृतत्वेन प्रकाशमानत्वाच्छुभसूचकत्वं ध्वन्यते । अपघ्नन्तो नाशयन्तः । वैताना यज्ञसंबन्धिनः । परिकरालंकारः । 'तपोवनतरवः' इत्यस्य श्लोकेन संबन्धः । **पातुमिति** । न विद्यते पीतं पानमेषां तेऽपीताः । 'अर्शआदिभ्योऽच्' (पा. ५।२।१२७) । तथा च **महाभाष्ये**—'अकारो मत्वर्थीयः । विभक्तमेषामस्तीति विभक्ताः, पीतमेषामस्तीति पीताः' इति । अथवा, उत्तरपदलोपो द्रष्टव्यः । 'विभक्तधना विभक्ताः पीतोदकाः पीताः' इति तत्र लोपशब्दार्थमाह **कैयटः**—'गम्यमानस्याप्रयोग एव लोपोऽभिमतः । विभक्ता भ्रातर इत्यत्र धनस्य यद्विभक्तत्वं तद्भ्रातृषूपचर्यते । पीतोदका गाव इत्यत्राप्युदकस्य पीतत्वं गोष्वारोप्यते' इति । तदभिप्रायेणैव पूर्वव्याख्या । युष्मास्व-

---

**पाठा०**—१ 'प्रान्तविकीर्ण°'. २ 'पालयन्तु' ३ 'वत्से,...शार्ङ्गरवशारद्वतमिश्राः'. ४ 'शिष्यौ—भगवन्, इमौ स्वः । ५ 'वत्स शार्ङ्गरव, भगिन्याः पन्थानमादेशय'. ६ '°वनदेवतास्तपो°'. ७ 'युष्मास्वसिक्तेषु या'. ८ 'कुसुमप्रवृत्तिसमये'.

( कोकिलारवं सूचयित्वा )

अनुमतगमना शकुन्तला
तरुभिरियं वनवासबन्धुभिः ।
परभृतविरुतं कलं यथा[1]
प्रतिवचनीकृतमेभिरीदृशम् ॥ ९ ॥

( आकाशे[2] )

रम्यान्तरः कमलिनीहरितैः सरोभि-
श्छायाद्रुमैर्नियमितार्कमयूखतापः[3] ।

पीतेषु सा जलं पातुं न व्यवस्यतीत्येतावत्युच्यमाने पूर्वकालतायाः प्राप्तत्वात्प्रथममिति पदमनर्थकमिति चेत्,–न, तदायमर्थ सपन्न.–यदा यदाऽस्या जलपानव्यवसायस्तदा तदा युष्मास्वपीतेषु नेति । अय चार्थो नाभिप्रेत । तत. 'प्रथम'मिति पानक्रियाविशेषणम् । तेन युष्मास्वपीतेषु प्रथम जलं पातुं न व्यवस्यतीति । भवत्सूदकव्यतिरेकेण प्रथमं जलपानं न करोतीत्यर्थः । 'व्यवस्यति' इति वर्तमानप्रत्ययेनाधुनाप्येतदवस्थाया अपि तन्निर्वाह इति ध्वन्यते । एवमग्रिमवर्तमानप्रत्यययोरपि व्यञ्जकत्वं बोद्धव्यम् । 'प्रियमण्डनापी'त्यनेन ग्रहणयोग्यता सूचिता । भवता पल्लवमवतंसादि कर्तुं स्नेहेन नादत्ते । वो युष्माकमाद्ये प्रथमे कुसुमप्रसूतिसमये पुष्पोत्पत्तिकाले यस्या उत्सवो भवति । फलसमयजो हर्षातिशयो वक्तुमेव न शक्यत इत्याशय । सेयं प्रत्यक्षपरिदृश्यमाना शकुन्तला पतिगृहं याति । सर्वैं, सभूयेत्यर्थ· । अनुज्ञायताम् । प्रत्येकानुज्ञादाने कालविलम्बो भविष्यतीत्याशय. । 'पतिगृह'मित्यनेनानुज्ञानस्योचितसमयत्वं ध्वनितम् । चेतनव्यवहारसमारोपात्समासोक्ति· । वृत्तिश्रुतिच्छेकानुप्रासा, हेतुश्च । वृत्तमनन्तरोक्तम् । 'कोकिलारवं सूचयित्वे'ति नेपथ्यगतनटत्वेन । ते हि सुशिक्षिताः सर्वे शकुन्तशब्दं कुर्वन्ति । **अनुमतेति** । इयं शकुन्तला वनवासबन्धुभिरिति रूपकम् । तरुभिरनुमतगमना यथा कलं परभृतविरुतं कोकिलकूजितं तरुभिरीदृशं प्रत्यक्षतोऽनुभूयमानं प्रतिवचनीकृतम् । विरुतस्य प्रतिवचनेन रूपेण प्रतिरूपयोगात् परिणाम । एवं पूर्वत्रापि । अनुप्रासश्च । अपरवक्त्रं वृत्तम् । **रम्यान्तर इति** । कमलिनीभिर्हरितै । श्यामलैरिति, तद्गुणालंकारः । अनेन कमलिनीव्याप्तत्व ध्वन्यते । 'कमलिनी'शब्देन कमलसयोगोऽपि । अत एव न बिसिन्यादिपदप्रयोग । एतादृशै· सरोभी रम्याण्यन्तराणि मध्यानि यस्य सः । एतेन कोमलाङ्ग्यास्तन्व्या कदाचनादृष्टशरणस्तृषादिपीडाभावो ध्वन्यते । 'सरोभि' इति बहुवचनेन प्रतिपदं सरसः सत्त्वं

पाठा०—१ 'यदासीत्प्रतिवचनीकृतमेभिरात्मनः'. २ '( नेपथ्ये )'. ३ '°मरीचिताप:'.

भूयात्कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च शिवश्च पन्थाः ॥ १० ॥

( सर्वे सविस्मयमाकर्णयन्ति )

**गौतमी**—जादे ! [1]णादिजणसिणिद्धाहिं अणुण्णादगमणासि तवोवणदेवदाहि । पणम भअवदीणं [ जाते ! ज्ञातिजनस्निग्धाभिरनुज्ञातगमनासि तपोवनदेवताभिः । प्रणम भगवतीः । ]

**शकुन्तला**—( सप्रणामं परिक्रम्य जनान्तिकम् ) हला पिअंवदे !

---

सूचितम् । छायाप्रधाना द्रुमास्तै । तरुमात्रेणार्कतापनिरास कर्तु न शक्यत इति छायाप्रधानत्वविशेषणं बहुवचनमपि । तेन विश्रान्तिस्थलसत्त्वं व्यज्यते । विशेषणप्रक्रमभङ्गश्च निरस्त. । नियमितो निषिद्धोऽर्कस्य मयूखा दीप्तयस्तासा तापो यत्र स. । 'मयूखस्त्विट्करज्वालासु' इत्यमर । अत्रार्कस्य दीप्त्यविनाभावेऽपि पुनर्दीप्तिग्रहणेन मध्याह्नस्था दीप्तिर्लक्ष्यते । तापाधिक्यं फलम् । '**अर्कमरीचितापसः**' इति पाठे 'उष्णमरीचि' इति पठनीयम् । अनेन पूर्वव्यङ्ग्यसहकृतो गमने दु खाभावो व्यज्यते । कुशेशयस्याम्बुजस्य रजोवन्मृदू रेणुर्यत्र सः । अनेन चरणानुपघातो व्यज्यते । शान्तो मन्दोऽनुकूलः पवनो यत्र सः । अत एव शिवः शुभः पन्था अस्या भूयात् । अत्रैकश्चकारो विशेषणाना समुच्चये । द्वितीयस्त्वनुपपन्नः । शिवश्चेत्यस्य समुच्चये भविष्यतीति चेत्तर्हि पूर्वविशेषणचतुष्टयेऽपि चकार उपादातव्य· स्यान्न चोपात्तः । तेनायमर्थ –शान्तोऽनुकूलश्चासौ पवनश्च यत्र स पन्थाश्च शिवो माङ्गल्यरूपः सुखप्रदश्च । अर्शआदित्वादच । **भूयादिति** । 'शिवं मोक्षे सुखे भद्रे' इति विश्व· । वायुमार्गयोरुभयो प्राकरणिकत्वात्तुल्ययोगितया विशेषणत्रयमत्रापि योज्यम् । अत एव 'शान्ते'त्यादिपदं समस्तं कृतम् । तत्राद्यविशेषणद्वयेन सौगन्ध्यं शीतलत्वं चोक्तम् । शान्तेति मन्दत्वम् । अनुकूलेति शकुनसूचकत्वम् । 'कुशेशये'त्यनेन वायोर्धूसरत्वमुक्तम् । तेन किंचिदपशकुनसूचकत्वम् । योग्येन वायुना योग्यस्य पथ सबन्धद्योतनात् समालंकारो व्यङ्ग्यः । परस्परोपकरणादन्योन्यालंकारोऽपि । वृत्तिश्रुत्यनुप्रासौ । उपमाहेतुपरिकरालंकारा· । वसन्ततिलका वृत्तम् । पाशुलत्वेन राजकन्याज्ञानुमानादनुमानलक्षणमङ्गमुपक्षिप्तम् । तल्लक्षणं **दशरूपके** ( १।४० )—'अभ्यूहो लिङ्गतोऽनुमा' इति । जाते ! ज्ञातिजनवत्स्निग्धाभिरनुज्ञातगमनासि तपोवनदेवताभि· । प्रणम

---

**पाठा०—१ 'णादिकुलसिणिद्धं अब्भणुण्णादा सि तवो°'.**

णं अज्जउत्तदंसणुस्सुआए वि अस्समपदं परिच्चअंतीए दुक्खेण मे चलणा पुरदो पवट्टंति । [ हला प्रियंवदे! नन्वार्यपुत्रदर्शनोत्सुकाया अप्याश्रमपदं परित्यजन्त्या दुःखेन मे चरणौ पुरतः प्रवर्तेते । ]

**प्रियंवदा**—ण केवलं तवोवणविरहकादरा सही एव्व । तुए उवट्ठिदविओअस्स तवोवणस्स वि दाव समवत्था दीसइ । [ न केवलं तपोवनविरहकातरा सख्येव । त्वयोपस्थितवियोगस्य तपोवनस्यापि तावत्समवस्था दृश्यते । ]

**उग्गलिअदब्भकवला मिआ परिच्चत्तणच्चणा मोरा ।**
**ओसरिअपंडुपत्ता मुअंति अस्सू विअ लदाओ ॥ ११ ॥**

[ उद्गलितदर्भकवला मृग्यः परित्यक्तनर्तना मयूराः ।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः ॥ ]

**शकुन्तला**—( स्मृत्वा ) ताद ! लदाबहिणिअं वणजोसिणिं दाव आमंतइस्सं । [ तात ! लताभगिनीं वनज्योत्स्नां तावदामन्त्रयिष्ये । ]

**काश्यपः**—अवैमि ते तस्यां सोदर्यस्नेहम् । इयं तावद्दक्षिणेन ।

---

भगवती । नन्वार्यपुत्रदर्शनोत्सुकाया अप्याश्रमपदं परित्यजन्त्या दुःखेन मे चरणौ पुरतः प्रवर्तेते । अनेन वधूना नाभिगृहत्यागे दुःखातिशयो व्यज्यते । न केवलं तपोवनविरहकातरा सख्येव । त्वयोपस्थितवियोगस्य सम्प्राप्तविरहस्यापि । न तु भूतवियोगस्य, न च भवद्वियोगस्येत्यपेरर्थः । तपोवनस्याचेतनस्यापि समवस्था दृश्यते । अवस्थामेव गाथिकया कथयति—**उग्गलिएति** । उद्गलितदर्भकवला मृग्यः परित्यक्तनर्तना मयूराः । अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः ॥ उद्गलिताश्चर्विता अपि मुखाद्बहिर्निःसृता इत्यर्थः । णिचा दुःखातिशयो ध्वन्यते । उभयोस्तिर्यक्त्वेऽपि सहवासिनाभ्यासात्तथोक्तम् । अनेन वध्वाः पतिगृहगमने पितृकुलजनस्य दुःखातिशयो व्यज्यते । बन्धुव्यवहारसमारोपात्समासोक्तिः उत्प्रेक्षानुप्रासश्च । तात ! लताभगिनी वनज्योत्स्ना तावदामन्त्रयिष्ये । लताभगिनी-

---

**पाठा०**—१ 'दुक्खदुक्खेण'. २ 'पुरोमुहा णिवडंति'. ३ 'अवत्थं पेक्ख दाव'. ४ 'उल्लसइ दब्भकवलं मई ..मोरी'. ५ सौहार्दम् ।' ६ 'सा दक्षिणे'.

---

**टिप्प०**—1 अत्र रघुवंश( १४।६९ ) स्थ 'नृत्यं मयूराः कुसुमानि वृक्षा दर्भानुपात्तान् विजहुर्हरिण्यः । तस्याः प्रपन्ने समदुःखभावमत्यन्तमासीद्रुदितं वनेऽपि ॥' इति श्लोकः कालिदासस्य मयूरादिपक्षिप्रियत्वद्योतक कल्पनासाम्यं द्योतयति ।

शकुन्तला—[1]( लतामुपेत्यालिंग्य ) वणजोसिणि ! चूदसंगता वि मं पच्चालिंग इदोगदाहि साहावाहाहि। अज्जप्पहुदि दूरपरिवत्तिणी भविस्सं।[2] [ वनज्योत्स्ने ! चूतसंगतापि मां प्रत्यालिङ्गेतोगताभिः शाखाबाहाभिः । अद्यप्रभृति दूरपरिवर्तिनी भविष्यामि । ]

काश्यपः—

संकल्पितं प्रथममेव मया तवार्थे[3]
भर्तारमात्मसदृशं सुकृतैर्गता त्वम्[4] ।
चूतेन संश्रितवती नवमालिकेय-
मस्यामहं त्वयि च संप्रति वीतचिन्तः ॥ १२ ॥

इतः पन्थानं प्रतिपद्यस्व ।

शकुन्तला—( सख्यौ प्रति ) हला ! एसा दुवेणं वो हत्थे णिक्खेवो । [ हला ! एषा द्वयोर्युवयोर्ननु हस्ते निक्षेपः । ]

---

मिति परिणामालंकारः । वनज्योत्स्ने ! चूतसंगतापि मां प्रत्यालिङ्गेतोगताभिः शाखाबाहाभिः । एकदेशविवर्ति रूपकम् । 'चूतसंगतापि' इत्यत्र भर्तुः स्नेहादप्यधिकः सोदर्यस्नेह इत्यपिना ध्वन्यते । अद्यप्रभृति दूरमत्यर्थं परिवर्तनं व्याघुट्य गमनं यस्याः सा तादृशी भविष्यामि । **संकल्पितमिति** । मया तपोनिधिना सदा तवार्थे त्वत्प्रयोजननिमित्तम् । प्रयोजनं च योग्यसमागम एव । प्रथममेव संकल्पितं मनसाभीप्सितं, त्वं सुकृतैः पुण्यैर्मत्कृतैः स्वयं पूर्वजन्मोपार्जितैर्वात्मसदृशमभिजनगुणैः सौन्दर्येण च वयसा च केवलं त्वद्भरणान्नापि तु त्रिभुवनभरणाद्भर्तारं गता प्राप्तासि । योग्यसमागमश्चिन्तितोऽपि पुण्यातिशयादेव भवतीति भावः । इयं पुरतो दृश्यमाना सुष्ठुकृतैः करणैर्निकटरोपणैरालवालादिपूरणैर्नवमालिका चूतेन सह संश्रितवती । अत्र नायकव्यवहारारोपात् समासोक्तिः । उभयोः प्राकरणिकत्वात्तुल्ययोगिता च । अत एवाह—संप्रत्यस्यां त्वयि च वीतचिन्तो विशेषेण गतचिन्तः । योग्येन योग्यसमागमात् समालंकारः । परस्परोपकरणादन्योन्यालंकारो व्यङ्ग्यः । हेत्वनुप्रासौ । वृत्तमनन्तरोक्तम् । शकुन्तलापरिगृहीता सेति तस्याः संतोषोत्पादनार्थमस्यामिति पूर्वनिर्देशः । तेन क्रमप्रक्रमभङ्गः परिहृतो भवति । 'त्वय्यत्र चाहमिति संप्रति' इति पठित्वा वा परिहर्तव्यः । अस्मिन्पाठे यथासंख्यालंकारः । एषा वनज्योत्स्ना द्वयोर्ननु निश्चितं युवयोर्हस्ते निक्षेपः ।

---

पाठा०–१ '( उपेत्य, लतामालिंग्य ) लदाबहिणीए पच्चालिंग मं साहामईहिं वाहाहिं'. २ 'ताद, अहं विअ इअं तए चिंतणीआ'. ३ 'त्वदर्थे'. ४ 'स्वगुणैर्गतासि । अस्यास्तु संप्रति वरं त्वयि वीतचिन्तः कान्तं समीपसहकारमिमं करिष्ये'.

**सख्यौ**—अअं जणो कस्स हत्थे समप्पिदो ? । [अयं जनः कस्य हस्ते समर्पितः ? । ] ( इति बाष्पं विहरतः )

**काश्यपः**—अनसूये ! अलं रुदित्वा । ननु भवतीभ्यामेव स्थिरीकर्तव्या शकुन्तला ।

( सर्वे परिक्रामन्ति )

**शकुन्तला**—ताद ! एसा उडजपज्जंतचारिणी गब्भमंथरा[1] मअवहू जदा अणघप्पसवा[2] होइ तदा मे कंपि पिअणिवेदइत्तअं विसज्जइस्सह । [ तात ! एषोटजपर्यन्तचारिणी गर्भमन्थरा मृगवधूर्यदानघप्रसवा भवति तदा मह्यं कमपि प्रियनिवेदयितृकं विसर्जयिष्यथ । ]

**काश्यपः**—[3]नेदं विस्मरिष्यामः ।

**शकुन्तला**—( गतिभङ्ग रूपयित्वा ) [4]को णु खु एसो णिवसणे मे सज्जइ ? । [ को नु खल्वेष निवसने मे सज्जते ? ] ( इति परावर्तते )

**काश्यपः**—वत्से !

**यस्य त्वया व्रणविरोपणमिङ्गुदीनां[1]**
**तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।**

---

इति परिणामः । अयं जनः कस्य हस्ते समर्पितः ? । तात ! एषोटजपर्यन्तचारिणी गर्भमन्थरा मृगवधूर्यदाऽनघप्रसवा सुप्रसवा भवति तदा मह्यं कमपि प्रियनिवेदयितृकं विसर्जयिष्यथ । **गतिभङ्गं रूपयित्वेति** । ऊरूद्वृत्तया चार्या । तल्लक्षणं तु—'पार्ष्णिः पादस्य चेदग्रतल्सचरसञ्ज्ञितः । अन्याङ्घ्रिपृष्ठाभिमुखो विपर्यासोऽथवा भवेत् ॥ नात्यन्यजङ्घानमिता जङ्घा चेन्नतजानुका । तज्जेर्ष्यानतिभङ्गेषु चार्यूरूद्वृत्तसञ्ज्ञिता ॥' इति । को नु खल्वेष निवसने मे सज्जते ? । **परावर्तत इति** । अपक्रान्तया चार्या । तल्लक्षणं तु—'बद्धा विधाय चारी चेदुद्वृत्याङ्घ्रिं च कुञ्चितम् । पार्श्वे विनिक्षिपेच्चारीमपक्रान्ता तदादिशेत् ॥ ऊरुद्वयस्य वलनं जङ्घास्वस्तिकसंयुतम् । भङ्क्त्वा वा स्वस्तिकं पादतलाग्रे मण्डलभ्रमम् ॥ कृत्वा पार्श्वगतं स्वं स्वं यत्र बद्धेति सा मता ॥' इति । **यस्येति** । त्वयाऽत्यन्तदयार्द्रया । मातृभूतयेत्यर्था-

---

**पाठा०**—१ 'काब्भहारमंथरा'. २ 'सुहप्पसवा'. ३ 'वत्से, नेदं...विसरिष्यामि'. ४ 'पदक्कंतो विअ मे पुणो पुणो वसणंते सज्जदि ।'.

---

**टिप्प०**—1 इङ्गुदीतैलं रोपणे शस्तमिति प्रोक्तम्—"इङ्गुदोऽङ्गारिवृक्षश्च तिक्तकस्तापसद्रुमः । ......हन्त्युष्णो व्रणरोपण.' इति । अनेनायुर्वेदस्य सम्यगनुशीलनं कालिदासस्यासीदिति विदितं भवति ।

श्यामाकमुष्टिपरिवर्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥ १३ ॥

**शकुन्तला**—वच्छ ! किं[1] सहवासपरिच्चाइणिं मं अणुसरसि ? । [2]अचिरप्पसूदाए जणणीए विणा वड्डिदो एव्व । दाणिं पि मए विरहिदं तुमं तादो चिंतइस्सदि । [3]णिवत्तेहि दाव । [वत्स ! किं सहवासपरित्यागिनीं मामनुसरसि ? । अचिरप्रसूतया जनन्या विना वर्धित एव । इदानीमपि मया विरहितं त्वां तातश्चिन्तयिष्यति । निवर्तस्व तावत् । ]

(इति रुदती प्रस्थिता)

**काश्यपः**—

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
बाष्पं कुरु स्थिरतया वि[4]हतानुबन्धम् ।

---

न्तरसक्रमितम् । यस्य कुशाना सूचिभि· सूच्याकारैरग्रैर्विद्धे कृतक्षते । 'सूची-शब्दस्तीक्ष्णाग्रत्वेन सबन्धेनाग्रं लक्षयन् वेधयोग्यातिशयं ध्वनयति । कश्चित्तु वेधस्याग्रेणैव संभवादवकरत्वं मन्यते, तदा कुशा एव सूचय इति रूपकसमासेन व्याख्येयम् । वेधस्य साधकस्य सत्त्वात् । ननूपमासमासेऽपि स न बाधक इति स एवास्त्विति चेत्—न, एतस्मिंस्तु समासे पूर्वपदप्राधान्यात्तत्कृतवेधस्य दारुणत्वं न प्रतीयते । रूपकसमासे तूत्तरपदप्राधान्याद्वेधाना बुद्धिपूर्वकपदत्वेन दारुणत्वप्रतीते· स एव ज्यायान् । मुखे व्रणविरोपणं व्रणशमकमिङ्गुदी तापसतरुस्तत्फलतैलं न्यषिच्यत सिक्तम्, दत्तमिति यावत् । सोऽयमग्रे दृश्यमानो मृगः श्यामाको धान्यविशेषस्तन्मुष्टिभि· परिवर्धित. । क· समासान्त । स्वयमत्तुमसमर्थस्य श्यामाकान्मुष्टौ गृहीत्वा मुखेऽर्पितवतीत्यादि पोषणप्रकारं सूचयितुं मुष्टिपदोपादानम् । सोऽयमित्यादिना जन्मारभ्य यावन्मृगत्वं प्राप्तस्तावत्त्वयैवं पोषित इति व्यज्यते । ते तव पुत्रकृतक· कृत्रिमपुत्रः । आहिताग्निपाठात्परनिपात· । पदवी मार्गं न जहाति, त्वदनुगामी भवतीत्यर्थ । मृगस्वभावोक्ति· । त्वविरो तकोतक इति छेकश्रुतिवृत्त्यनुप्रासाः । वृत्तमनन्तरोक्तम् । वत्स ! कि सहवासपरित्यागिनी मामनुसरसि ? अचिरप्रसूतया जनन्या विना वर्धित एव । इदानीमपि मया विरहितमपि त्वाम् । इत्यनेन स्वस्य मातृतुल्यस्नेहत्वं ध्वनितम् । तातश्चिन्तयिष्यति । निवर्तस्व तावत् । **उत्पक्ष्मणोरिति** । उदूर्ध्वं पक्ष्मणी ययोर्लोचनयोर्विषय उपरुद्धा वृत्तिः

---

**पाठा०—१ 'किं मं...°च्चाइणिं अणुबंधसि ।'. २ 'अचिरप्पसूदोवरदाए...विणा जधा वड्डिदो सि तधा इदाणिं पि'. ३ 'ता णिअत्तसु वच्छ, णिअत्तसु ।'. ४ 'शिथिलानुबन्धम् ।'.**

अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति ॥ १४ ॥

**शार्ङ्गरवः**—भगवन्! ओदकान्तं स्निग्धो जनोऽनुगन्तव्य इति श्रूयते। तदिदं सरस्तीरम्। अत्र संदिश्य प्रतिगन्तुमर्हसि।

**काश्यपः**—तेन हीमां क्षीरवृक्षच्छायामाश्रयामः।

(सर्वे परिक्रम्य स्थिताः)

**काश्यपः**—(आत्मगतम्) किं नु खलु तत्रभवतो दुष्यन्तस्य युक्तरूपमस्माभिः संदेष्टव्यम्?। (इति चिन्तयति)

**शकुन्तला**—(जनान्तिकम्) हला! पेक्ख; णलिणीपत्तंतरिदं वि सहअरं अदेक्खंती आदुरा चक्कवाई आरडदि दुक्करं अहं करेमि त्ति तक्केमि। [हला! पश्य; नलिनीपत्रान्तरितमपि सहचरमपश्यन्त्यातुरा चक्रवाक्यारौति दुष्करमहं करोमीति तर्कयामि।]

**अनसूया**—सहि! मा एव्वं मंतेहि।

---

प्रवर्तनं यस्य तं बाष्पं स्थिरतया स्थैर्येण, धैर्येणेति यावत्। विहतो दूरीकृतोऽनुबन्धः पुनः पुनरुत्पत्तिर्यस्य तं कुरु। उत्पन्नमश्रूर्ध्वीकृतैः पक्ष्मभी रुद्धं तदधिकं चेत्तदध पतनेऽमङ्गलमिति त्वं निरुन्धीति भावः। 'उत्पक्ष्मणो' इति विशेषणदानार्थं 'नयन'पदम्। अन्यथा बाष्पस्य तदविनाभावित्वादार्थं पौनरुक्त्यं स्यात्। अत्र हेतुमाह—**अस्मिन्निति**। खलु यस्मादर्थे। न लक्षितो न दृष्टो नतोन्नतो भूमिभागो यत्र तस्मिन्मार्गे ते तव पदानि विषमीभवन्ति, उच्चावचेषु निपतन्तीत्यर्थः। अत्र यात्रासमयेऽमङ्गलशब्दोच्चारणमपि नोचितमिति तच्छ्रवणेन तस्या आशङ्का भविष्यतीति विषमपदत्वं हेतुत्वेनोक्तम्। पदार्थवाक्यार्थरूपयोः काव्यलिङ्गयोः संसृष्टिः। छेकवृत्त्यनुप्रासौ। वृत्तमनन्तरोक्तम्। क्षीरवृक्षेति प्लक्षादेरुपलक्षणम्। तेन छायाधिक्यं ध्वनितम्। प्रशस्तं युक्तं युक्तरूपम्। पश्य, नलिनीपत्रान्तरितमपि सहचरमपश्यन्त्यातुरा चक्रवाक्यारौति दुष्करमहं करोमीति तर्कयामि। एतावद्दिनं

---

**पाठा०**—१ 'आ उदकान्तं. .अनुगम्यत इति स्मर्यताम्। तदिदं सरसीतीरम्। अत्र नः'. २ 'दुष्यंतस्य युक्तरूपं संदेष्टव्यम्।'. ३ 'सहि, ण णो अस्समपदे अत्थि को वि चित्तवंतो जो तए विरहीअंतो अज्ज ण ऊसुओ किदो। पेक्ख,—पुडइणिवत्तंतरिअं बाहरिओ णाणुवाहरेइ पिअं। मुहउव्वूढमुणालो तइ दिट्ठिं देइ चक्काओ ॥ कण्वः—वत्स शार्ङ्गरव! इति त्वया मद्वचनात्'.

एसा वि पिएण विणा गमेइ रअणिं विसाअदीहअरं।
गरुअं पि विरहदुक्खं आसाबंधो सहावेदि॥ १५॥
[सखि! मैवं मन्त्रय।
एषापि प्रियेण विना गमयति रजनीं विषाददीर्घतराम्।
गुर्वपि विरहदुःखमाशाबन्धः साहयति॥]

**काश्यपः**—शार्ङ्गरव! इति त्वया मद्वचनात्स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः।

**शार्ङ्गरवः**—आज्ञापयतु भवान्।

**काश्यपः**—

अस्मान्साधु विचिन्त्य संयमधनानुच्चैःकुलं चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम्।

भर्त्रा विना स्थितास्मीति भावः। सखि! मा एवं मन्त्रय। **एषेति**। गाथा। एषा चक्रवाकी क्षणमपि तेन विना तिष्ठन्ती। सापीति 'अपि'शब्दार्थः। न नाथो न कान्तोऽपि तु प्रियस्तेनापि नागमयत्येव नापि मध्ये रजनीमविच्छेदो नापि तस्याः तथाशोच्यत्वमिति भाव-(?)। रञ्जयति लोकानिति रजनीमात्रम्। अपि तु विषादेन दुःखेन दीर्घतराम्। अथ च विषादो येषा ते विषादा विरहिणः। अर्श-आद्यच्। तेषा दीर्घा केवलं न। दीर्घतरामपीति पञ्चसु स्थानेष्वपियोज्य। गुर्वपि विरहदुःखमाशाबन्धः साहयति। अर्थान्तरन्यासः। **अस्मानिति**। संयम एव धनं येषां तानस्मान् साधु सम्यक्तया विचिन्त्य। मुन्यादिपदत्यागेन 'संयमधन'पद-ग्रहणमङ्गीकारानङ्गीकारयोर्भयानुग्रहौ दर्शयति। आत्मन उच्चैःकुलम्। साधु विचिन्त्येत्यनुषज्यते। तादृशकुलोत्पन्नस्यालीकप्रतारणादिसंभावना नास्तीति भावः। अस्यास्त्वयि ता स्नेहप्रवृत्तिं स्नेहप्रवाहम्, आधिक्यमिति यावत्। साधु विचिन्त्येत्यनुषज्यते। 'प्रवृत्ति कथिता वृत्तौ प्रवाहोदन्तयोरपि' इति विश्वः। तेनात्र कारक-क्रियादीपकम्। तामिति सर्वनाम्ना पूर्वकविरहे तत्तत्कामाद्यवस्थानुभवनम्। तत समागमजानन्दाम्बुधिमज्जनादि व्यज्यते। एतद्यञ्ज्यावकाशदानाय 'प्रवृत्ति'-पदम्। अस्यास्त्वयीत्यनेन भवद्दर्शनमारभ्य प्रतिक्षणोपचीयमानरागसागरत्वं ध्वनितम्। अत एव तवास्यामिति नोक्तम्। यद्यपि नायकयोः परस्परानुराग-जीवातुरेव रतिस्तथाप्यस्या. प्रेषणेन प्रकृतत्वात्तथोक्तिः। स्नेहप्रवृत्तिं विशिनष्टि—कथमपि वचनेन परद्वारेङ्गितेन वा न बान्धवैः कृतामन्यकर्तृकतां प्रयत्नेन निषेधता कविनास्याः स्नेहप्रवृत्तेः स्थायित्वं स्थिरीकुर्वता कोऽपि लोकोत्तरश्चमत्कारातिशयो व्यज्यते। इयं सामान्या साधारणी या प्रतिपत्तिर्गौरवं तत्पूर्वकं दारेषु स्त्रीषु। बहुवचनेन पूर्वोक्तस्य युक्तता ध्वन्यते। त्वया प्रसिद्धगुणवता सता तादृशकुलो-

पाठा०—१ '°पुरस्कृत्याभिधातव्यः–'.

सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतः परं न खलु तद्वाच्यं वधूबन्धुभिः ॥ १६ ॥

शार्ङ्गरवः—गृहीतः संदेशः ।

काश्यपः—वत्से ! त्वमिदानीमनुशासनीयासि । वनौकसोऽपि सन्तो लौकिकज्ञा वयम् ।

शार्ङ्गरवः—न खलु धीमतां कश्चिदविषयो नाम ।

काश्यपः—सा त्वमितः पतिकुलं प्राप्य,—

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ १७ ॥

कथं वा गौतमी मन्यते ।

---

त्पन्नेन सुजनताजन्मना धर्मधुरीणेनेत्यर्थान्तरसंक्रमितम् । दृश्या ज्ञातव्या, न तु कर्तव्या । अस्माकं तत्र नियोगासंभवात् । 'प्रतिपत्तिः पदे प्राप्तौ प्रवृत्तौ गौरवेऽपि च' इति विश्वः । नन्वेतादृशप्रेम्णि कथं सामान्यप्रतिपत्तीत्याद्युक्तमत आह—**भाग्यायत्तमिति**। अतः परं वधूबन्धुभिर्न वाच्यम्, यतो वयं वधूबन्धवः । अस्मदुच्यमानं तु पक्षपातितया पर्यवसन्नं सत् औदासीन्यमेव गमयेदिति भावः । अत्र मयैतन्न वक्तव्यमिति विशेषे प्रस्तुते यत्सामान्यवचनं तेनाप्रस्तुतप्रशंसा । किं तर्हि ? तत् भाग्यायत्तं दैवायत्तम् । अथ वधूबन्धुभिरस्माभिरतः परं न वाच्यम् । नियोगत्वेन पर्यवसानादिति भावः । अतो भाग्यायत्तं येन भाग्येन युवयोरेतादृशोऽनुरागस्तदधीनमेव सर्वमिति भावः । खलुर्हेत्वर्थस्तेन काव्यलिङ्गमपि । यद्वा,—अतः परं महिषीत्वाभिषेकादिकं भाग्यायत्तं दैवायत्तं तत्खलु निश्चितं वधूबन्धुभिर्न वाच्यम्, वचनमात्रेण तदसंपत्तेरिति भावः । श्रुतिवृत्त्यनुप्रासौ । शार्दूलविक्रीडितं वृत्तम् । 'न खलु धीमताम्' इति कण्ववाक्यं प्रत्यर्थान्तरन्यासः । 'सा त्वम्' इत्यस्य श्लोकेनान्वय । **शुश्रूषस्वेति**। गुरून् श्वश्रूश्वशुरादीन् शुश्रूषस्व सेवा कुरु । सपत्नीना जने समूहे प्रियसखीनामिव वृत्तिं कुरु प्रियसखीवद्वर्तस्व । विप्रकृता न्यक्कृ-

---

पाठा०—१ 'दैवाधीनमतःपरं न खलु तत्स्त्रीबंधुभिर्याच्यते ॥'. २ 'गृहीतोऽयं'. ३ 'लोकज्ञा एव'. ४ 'न खलु कश्चि°...नाम धीमताम् ।'. ५ 'पतिगृहं प्राप्य'. ६ 'पत्युः'. ७ 'भोगेष्वनुत्सेकिनी'.

---

टिप्प०–1 'श्वश्रूश्वशुरपरिचर्या भोगेष्वनुत्सेक परिजने दाक्षिण्य' इत्यादि**वात्स्यायन**-(काम० ११४) प्रणीतभार्याधिकारिकानुगुणत्वात्कालिदाससमयनिर्णये चेद साहाय्यकारि भवेदिति भाति ।

**गौतमी**—एत्तिओ[1] बहूजणस्स उवदेसो । जादे ! एदं खु सव्वं ओधारेहि । [ एतावान्वधूजनस्योपदेशः । जाते ! एतत्खलु सर्वमवधारय । ]

**काश्यपः**—[2]वत्से ! परिष्वजस्व मां सखीजनं च ।

**शकुन्तला**—ताद ! इदो एव्व किं पिअंवदामिस्साओ सहीओ णिवत्तिस्संति ? । [तात ! इत एव किं प्रियंवदामिश्राः सख्यो निवर्तिष्यन्ते ? । ]

**काश्यपः**—वत्से ! इमे अपि प्रदेये । न युक्तमनयोस्तत्र गन्तुम् । त्वया सह गौतमी यास्यति[3] ।

**शकुन्तला**—[4]( पितरमाश्लिष्य ) कहं दाणि तादस्स अंकादो परिब्भट्ठा मॅलअतरुम्मूलिआ[5] चंदणलदा विअ देसंतरे जीविअं धारइस्सं ? । [ कथमिदानीं तातस्याङ्कात्परिभ्रष्टा मलयतरून्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्ये ? । ]

**काश्यपः**—वत्से ! किमेवं कातरासि ? ।

---

तापि । 'निकारो विप्रकारः स्यात्' इत्यमरः । रोपणतयेर्ष्यया भर्तुः प्रतीपं वैपरीत्यं मा स्म गमो मा यासीः । परिजने सेवकवर्गे भूयिष्ठमतिशयेन दक्षिणाऽनुकूला भव । भाग्येषु सपत्नीदैवेष्वनुत्सेकिन्यस्खलिता, भवेत्यनुषज्यते । अस्या भाग्यं मम नास्तीति दुःखं न कार्यमित्यर्थः । अथ च भाग्येषु निजेष्वनुत्सेकिनी निर्गर्वा, 'ममैतादृशं सौभाग्य'मिति गर्वो न कार्य इत्यर्थः । 'उदो मर्दनोत्क्षेपणगर्वस्खलनेषु' इति गणपाठात् । एवं सति युवतयः स्त्रीमात्रम्, त्वं तु कि पुनरिति भावः । गृहिण्याः पदं स्थानम् । यद्वा,–गृहिणीति पदमधिकारम् । यान्ति प्राप्नुवन्ति । अन्या वामाः स्त्रियः कुलस्याधयो भवन्तीत्यर्थः । 'वामौ वल्गुप्रतीपौ वा' इत्यमरः । रूपकमर्थान्तरन्यासो वा । कुलस्याधय कुलाधिष्ठानानि । वामा वक्राणीत्यर्थः । 'आधिर्मानसपीडायां प्रत्याशायां च बन्धने । व्यसने चाप्यधिष्ठाने' इति विश्वः । वृत्तमनन्तरोक्तम् । एतावान्वधूजनस्योपदेशः । जाते पुत्रि ! एतत्खलु सर्वमवधारय । तात ! इत एव किं प्रियंवदामिश्राः सख्यो निवर्तिष्यन्ते ? । कथमिदानीं तातस्याङ्कात्क्रोडात् परिभ्रष्टा मलयतरून्मूलिता चन्दनलतेव देशान्तरे परदेशे स्थानान्तरे च जीवितं धारयिष्ये ? । कथमिदानीमिति संबन्धः । उपमया

---

**पाठा०**—१ **'एत्तिकं खु बहूणं उवदेसो । ( शकुंतला प्रति ) जादे, मा विसुमरिस्ससि ।'.** २ **'कण्वः–एहि, वत्से ! परिष्वजस्व मां सखीजनं च । शकुं०–ताद, इदो जेव पिअसहीओ विणिअत्तिस्संति ।'.** ३ **'गमिष्यति ।'.** ४ **'( पितुरङ्कमाश्लिष्य )'.** ५ **'मलअपव्वदुम्मूलिदा'.**

अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला ।
तनयमचिरात् प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से! शुचं गणयिष्यसि ॥ १८ ॥

( शकुन्तला पितु पादयो· पतति )

**काश्यपः**—यदिच्छामि ते तदस्तु ।

---

तत्रत्यैर्बहुमानिताया अपि पितृवियोगाविस्मरणं ध्वन्यते । **अभिजनेति** । अभिजनवतः कुलवत· । 'कुलान्यभिजनान्वयौ' इत्यमरः । अत्रैतदनुक्तेरपि सिद्धेस्तात्पर्यानुपपत्त्या लक्षणया सामान्यशब्दो विशिष्टं कुलं लक्षयति । तदुत्पत्तिमत्त्वं त्वर्थाक्षिप्तम् । एतद्दयादानदाक्षिण्यधर्मभीरुत्वादिधर्मशतं व्यनक्ति । अथवा, 'अभिजन'-पदेन तदुत्पन्ना जना लक्ष्यन्ते । तद्वतस्तद्बहुजनवत· । अभितः समन्ततो जनवतः स्वजनवत इति वा । अनेन विशेषणेन सकलबन्धुजनकृत्यचिन्तया गृहिणीगतोऽतिशयो व्यज्यते । एवंभूतस्य भर्तु· श्लाघ्ये सर्वोत्कृष्टे । तादृशप्रेम्णाऽनुमितत्वात् । गृहिणीपदे गृहिणीस्थाने । अथवा, गृहिणीलक्षणाधिकारे । अथ च गृहिणीति त्र्यक्षरं पदं तत्र । जगति गृहिणीपदवाच्या त्वमेवेत्यर्थः । अत· 'गृहिणी गृहमुच्यते' इत्युक्तेस्तदीयं सर्वं गृहं त्वदायत्तमिति भावः । स्थिता चापल्यनिवृत्त्या स्थिरीभूता । अत एव भर्तुरित्युचितपदोपन्यास· । भरतीति भर्ता । सकलजगद्भरणशीलस्येति षष्ठ्या गृहिणीगतोऽतिशयो व्यज्यते । तावता किं तत्राह—**विभवेति** । विभव संपत्तिस्तेन गुरुभिर्गरिष्ठै । अनेन कृत्यानामनन्यनिर्वाहित्वं सूचितम् । तस्य भर्तु· प्रतिक्षणं कृत्यैः इत्यव्ययबहुवचनाभ्या विशिष्टकार्याणामन्यतमता ध्वन्यते । आकुला व्यग्रा । स्वगृहकार्यसहस्रनिमग्ना विगलितवेद्यान्तरा भविष्यसीति भाव· । अचिराच्छीघ्रं प्राची प्राग्दिगिव त्वं पावनमर्कमिव तनयं प्रसूय चेति । चः समुच्चये । स स्वयं पूत इति किं वक्तव्यम् । पावयतीति पावनः । तन्नामग्रहणेनान्येऽपि पावना भवन्तीति भावः । अर्कोपमानत्वेन तनयस्य जगद्विलक्षणतेजस्वित्वं लोकत्रयातिक्रान्तपौरुषत्वं चतुर्दशभुवनगीयमानकीर्तित्वमत एव चक्रवर्तित्वमित्यादि धर्मसहस्रं व्यज्यते । हे वत्से! मम पितुर्विरहजा वियोगजा शुचं न गणयिष्यसि । न तु सा न भविष्यति । गृहकार्यव्यग्रतया त्वया शोको न गणनीय इत्यर्थ । पितृवियोगदु·खमविस्मरणीयं प्रकृत्या व्यज्यते । चतुर्थचरणार्थं प्रति पूर्वोक्तद्वयं हेतुत्वेन योज्यम् । उपमासमुच्चयकाव्यलिङ्गश्रुतिवृत्त्यनुप्रासाः ।

---

**पाठा०—१ 'कृत्यैरस्य'. २ 'शकुं०–( पादयो पतित्वा ) ताद! वंदामि । कण्वः–यदहमीहे तदस्तु ते ।'.**

**शकुन्तला**—( सख्यावुपेत्य ) हला[1]! दुवे वि मं समं एव्व परिस्सजह । [ हला ! द्वे अपि मां सममेव परिष्वजेथाम् । ]

**सख्यौ**—( तथा कृत्वा ) सहि[2]! जइ णाम सो राआ पच्चाहिण्णाणमंथरो भवे तदो से इमं अत्तणामहेअअंकिअं अंगुलीअअं दंसेहि । [ सखि ! यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत्ततस्तस्येदमात्मनामधेयाङ्कितमङ्गुलीयकं दर्शय । ]

**शकुन्तला**—इमिणा संदेहेण वो[3] आकंपिद म्हि । [ अनेन संदेहेन वामाकम्पितास्मि । ]

**सख्यौ**—मा[4] भाआहि, सिणेहो पावसंकी । [ मा भैषीः; स्नेहः पापशङ्की । ]

**शार्ङ्गरवः**—युगान्तरमारूढः[5] सविता । त्वरतामत्रभवती ।

**शकुन्तला**—( आश्रमाभिमुखी स्थित्वा[6] ) ताद! कदा णु भूओ तवोवणं पेक्खिस्सं? [ तात ! कदा नु भूयस्तपोवनं प्रेक्षिष्ये ? । ]

---

हरिणी वृत्तम् । अनेन संग्रहलक्षणमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'सामदानार्थसयोग· संग्रह परिकीर्तित' इति । द्वे अपि मा सममेकदैव परिष्वजेथाम् । तथा कृत्वेत्येकदा परिष्वज्य । सखि! यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत् । प्रत्यभिज्ञाने तत्तेदन्तावगाहिनि सेयं शकुन्तलेति ज्ञाने मन्थरः शिथिल. । झटित्येतादृग्ज्ञानरहित इत्यर्थः । ततस्तस्येदमात्मनामधेयाङ्कितमङ्गुलीयकं दर्शय । अनेन रूपलक्षणमङ्गमुपक्षिप्तम् । तल्लक्षणं तु **दशरूपके** (१।३९)—'रूपं वितर्कवद्वाक्यम्' इति । यदीति वितर्कोक्ति· । अनेन व संदेहेनाकम्पितास्मि । अनेन सम्भ्रमलक्षणमङ्गमुपक्षिप्तम् । तल्लक्षणं तु **दशरूपके** (१।४२)—'शङ्कात्रासौ च सम्भ्रम·' इति मा भैषी । स्नेह· पापशङ्की । अनेनाधिबललक्षणमङ्गमुपक्षिप्तम् । तल्लक्षण तु—'कपटेनातिसंधानं ज्ञेयं चाधिबलं बुधै·' इति । युगान्तरं हस्तचतुष्कावधि । 'युगं हस्तचतुष्केऽपि' इति विश्व । तात ! कदा नु भूयस्तपो-

---

**पाठा०**—१ 'सहीओ, एध दुवे'. २ 'जइ कदा वि सो राएसी ..अत्तणो धामधेअंकिदं अंगुलीअअं दंसइस्ससि ।'. ३ 'कंपिदं मे हिअअं ।'. ४ 'सहि, मा भाआहि । सिणेहो पावं आसंकदि ।'. ५ 'अगान्तरमधिरूढः...तत्त्वरतां' । ६ '( भूयः पितुरङ्कमाश्लिष्य )'.

---

**टिप्प०**–1 तथा च भारविरपि ( किरात ९।७० ) 'प्रेम पश्यति भयान्यपदेऽपि' इत्याह ।

**काश्यपः**[1]—श्रूयताम्,—

भूत्वा चिराय चतुरन्तमहीसपत्नी
[2]दौष्यन्तिमप्रतिरथं तनयं निवेश्य।
[3]भर्त्रा तदर्पितकुटुम्बभरेण सार्धं
शान्ते[1] करिष्यसि पदं पुनराश्रमेऽस्मिन्॥ १९॥

**गौतमी**—जादे! परिहीअदि[4] गमणवेला। णिवत्तेहि पिदरं। अहवा चिरेण वि पुणो पुणो एसा एव्वं मंतइस्सदि। णिवत्तदु भवं। [जाते! परिहीयते गमनवेला। निवर्तय पितरम्। अथवा चिरेणापि पुनः पुनरेषैवं मन्त्रयिष्यते निवर्ततां भवान्।]

**काश्यपः**—वत्से! उपरुध्यते[6]तपोऽनुष्ठानम्।

**शकुन्तला**[7]—(भूय. पितरमाश्लिष्य) तवच्चरणपीडिदं तादसरीरं। ता मा अदिमेत्तं मम किदे उक्कंठिदुं। [तपश्चरणपीडितं तातशरीरम्। तन्मातिमात्रं मम कृत उत्कण्ठितुम्।]

---

वनं प्रेक्षिष्ये। **भूत्वेति**। चिराय चिरकालम्। चत्वारः समुद्राः। विशेषणेनैव विशेष्यप्रतिपत्ति। तेऽन्तो यस्याः सा चासौ मही च तस्याः सपत्नी भूत्वा। चतुरुदधिमेखलितभूमिवलयोपभोगमुपभुज्येति भाव.। दुष्यन्तस्यापत्यं दौष्यन्तिस्ताम्। 'अत इञ्' (पा ४।१।९५)। न विद्यते प्रति समुखं(खो) रथो यस्य स तम्। प्रतिपक्षाभावात्। 'मात्रार्थे चाभिमुख्ये च प्रतिदानादिषु प्रति' इति विश्वः। अनेन विशेषणद्वयेन महीभारक्षमत्वं ध्वनितम्। निवेश्य स्थापयित्वा। अर्थान्महीसपत्न्याम्। अत्र 'सपत्नी'ग्रहणेन तस्या अपि मातृत्वं सूचितम्। यद्यपि सपत्नी तथापि त्वयि सत्यामेव सपत्नभावः। त्वया समर्पिते तु तन्नास्तीति भाव.। भर्त्रा सहेति गौणत्वमेता प्रत्युत्तरदानेनास्या. प्रकृतत्वान्नानुपपन्नम्। अत्र तस्यां महीसपत्नीत्वं, तस्या तन्निवेशनं, तस्मिंश्च कुटुम्बभरनिवेशनमिति मालादीपकम्। अत्र

---

**पाठा०**—१ 'कण्वः—वत्से! भूत्वा चिराय सदिगन्तमही°'. २ 'दौःषन्ति°... तनयं प्रसूय।'. ३ 'तत्संनिवेशितधुरेण सहैव भर्त्रा शान्त्यै करिष्यसि'. ४ 'दे गमणवेला। ता णिअत्तावेहि'. ५ 'णिअत्तइस्सदि। ता'. ६ 'तपोवनानुष्ठानम्।'. ७ 'शकुं०—तवोवणवावारेण णिरुक्कंठो तादो। अहं उण उक्कंठाभाइणी संवुत्ता।'.

---

**टिप्प०**—1 शान्ते वयसि इत्यनेनात्र वानप्रस्थाश्रमस्य निर्देशोऽभिप्रेतो महर्षिणा, तदुक्तं मनुना (४।२)—'गृहस्थस्तु यदा पश्येद्वलीपलितमात्मन.। अपत्यस्यैव चापत्य तदारण्यं समाश्रयेत्॥' इति।

**काश्यपः**—(सनि:श्वासम्)

**शममेष्यति मम शोकः कथं नु वत्से ! त्वया रचितपूर्वम् ? ।**
**उटजद्वारविरूढं नीवारबलिं विलोकयतः ॥ २० ॥**

गच्छ, शिवास्ते पन्थानः सन्तु ।

(निष्क्रान्ता शकुन्तला सहयायिनश्च)

**सख्यौ**—(शकुन्तलां विलोक्य) हद्धी हद्धी । अंतलिहिदा सउंदला वणराईए । [हा धिक् हा धिक् । अन्तर्हिता शकुन्तला वनराज्या ।]

**काश्यपः**—(सनि:श्वासम्) अनसूये ! गतवती वां सहधर्मचारिणी । निगृह्य शोकमनुगच्छतं मां प्रस्थितम् ।

**उभे**—ताद ! सउंदलाविरहिदं सुण्णं विअ तवोवणं कहं पविसावो ? । [तात ! शकुन्तलाविरहितं शून्यमिव तपोवनं कथं प्रविशावः ? । ]

**काश्यपः**—स्नेहप्रवृत्तिरेवंदर्शिनी । (सविमर्शं परिक्रम्य) हन्त भोः ! शकुन्तलां पतिकुलं विसृज्य लब्धमिदानीं स्वास्थ्यम् । कुतः

---

यावद्दुष्यन्तधारणं पितृभक्त्या तं प्रति मह्या मातृत्ववर्णनं नानौचित्यमावहति । शान्ते प्रकरणानुसाराद्वयसीति गम्यते । इदमाश्रमविशेषणत्वेनापि । जाते ! परिहीयते गमनवेला । निवर्तय पितरम् । अथवा चिरेणापि । पुन पुनरेवैवं मन्त्रयिष्यति । निवर्ततां भवान् । तपश्चरणेन पीडितं तातशरीरम् । तस्मान्मम कृते । अतिमात्रमुत्कण्ठा । मेति निषेधे । उत्कण्ठयाऽलमित्यर्थः । 'क्त्वस्तुमत्तणतुआणा.' इति क्त्वाप्रत्ययस्य तुमादेशः । **शममिति** । वत्से ! मम काश्यपस्य । बाल्यादारभ्य त्वत्कृतपरिपालनस्येत्यर्थान्तरसंक्रान्तत्वम् । एवंभूतस्य शोक· कथं नु शममेष्यति ? कष्टेन शममेष्यतीत्यर्थः । ईदृशस्त्वया तादृशगुणवत्या तथा सकलनिपुणयेत्यादि द्योतयति । पूर्वं रचितो रचितपूर्वस्तम् । नीवारैस्तृणधान्यैर्बलिं पूजा विलोकयतः । कीदृशं बलिम् ? उटजद्वारे विरूढं सजातम् । 'विरूढस्तु सजाताङ्कुरितेऽन्यवत्' इति विश्वः । काव्यलिङ्गानुप्रासौ । हा धिक्, हा धिक् । अन्तर्हिता शकुन्तला

---

**पाठा०-१ 'कण्वः-अयि, किं मामेवं जडीकरोषि । (नि:श्वस्य) अपयास्यति मे शोकः कथं नु वत्से त्वयावचितपूर्वम् । उटजद्वारि विरूढं नीवारबलिं विलोकयतः ॥ गच्छ, शिवास्ते सन्तु पन्थानः ।'. २ 'कण्वः-अनुसूये ! प्रियंवदे, गता वां सहचरी । निगृह्य शोकावेशं मामनुगच्छतं । (सर्वे प्रस्थिताः)'. ३ 'तवोवणं पविसामो'. ४ 'शकुन्तलां विसृज्य'.**

अर्थो हि कन्या परकीय एव
तामद्य संप्रेष्य परिग्रहीतुः ।
जातो ममायं विशदः प्रकामं
प्रत्यर्पितन्यास इवान्तरात्मा ॥ २१ ॥

( इति निष्क्रान्ता सर्वे )

चतुर्थोऽङ्कः

---

वनराज्या । तात ! शकुन्तलाविरहितं शून्यमिव तपोवनं कथं प्रविशावः ? कण्वप्रवेशानन्तरमेतदन्तेन करुणो रसो ध्वनित. । तल्लक्षणं तु—'इष्टबन्धुवियोगश्च स्त्रीनाशो वधबन्धने । विभावा समता· पुंसामुत्तमाना पराश्रिता ॥ मध्यमाधम-पुंसा तु ते स्युरात्मैकगोचरा । अश्रुपातो मुखे शोषो विलापः परिदेवनम् ॥ स्तम्भो विवर्णता स्रस्तगात्रता प्रलयस्तथा । यत्र सचारिणः स्थायी शोकः स करुणो मत. ॥' इति । **अर्थ इति** । हि निश्चितं कन्यार्थ· परकीय एव, उत्पत्त्यनन्तरमेव परकीयत्वेन ज्ञात इत्यर्थः । अद्य परिग्रहीतुः परिणेतुस्ता संप्रेष्य ममायमात्मा प्रकाममत्यर्थं विशदो निर्मलो जातः । पूर्वं सामान्यतोऽन्यदीयत्व-मुक्त्वा 'परिग्रहीतुस्ताम्' इत्यनेन नियतविषयत्वेन परकीयत्वं वदताऽवश्यप्रस्थाप-नीयत्वं ध्वनितम् । इदमेवोत्प्रेक्षाया न्यासेन सह साधर्म्यं ज्ञेयम् । प्रत्यर्पितो न्यासो येनेदृशा इवेत्युत्प्रेक्षा । इन्द्रवज्रा वृत्तम् ॥

इति श्रीमदभिज्ञानशाकुन्तलटीकायामर्थद्योत-
निकायां चतुर्थोऽङ्कः समाप्तः ॥



---

पाठा०—१ 'तामेव संप्रेष्य'. २ 'जातोऽस्मि सद्यो विशदान्तरात्मा चिरस्य निक्षेप इवार्पयित्वा ॥' ३ 'शकुन्तलाप्रस्थानं नाम'.

# पञ्चमाङ्कस्य कथावस्तु



अस्मिन्नङ्के दुष्यन्तस्य वयस्येन सह राजधान्यां संवादे प्रवृत्ते सति 'मधुकर ! नवाभिनवमधुलोलुपोऽसि त्वं रसालमञ्जरीं सकृत्परिचुम्ब्य कमलकोशगतश्च तां कथं विस्मृतोऽसि' इति लय-तालबद्धं हंसपदिकागीतं निशम्य कमलापदेशेन वसुमत्यनुरागलब्धो नृप. सुनिपुणमुपालब्धोऽहमिति हंसपदिकां नागरिकवृत्त्या संज्ञापयति। तद्गीतार्थं स्मारं स्मारं समालोचयन् राजा कामप्यनिर्वचनीयामन्तर्व्यथामनुभवति। एतदन्तरे महर्षिकण्वादेशमादाय सस्त्रीकास्तपस्विजनाः समायाता इति कञ्चुकी निवेदयति। ते श्रौतेन विधिना सत्कृत्य यज्ञशालायां प्रवेशयितव्या इत्यादिश्य राजापि स्वयं तान्प्रतिपालयितुं तत्र गच्छति। तत्र तपस्विजनमध्यगतामवगुण्ठनवतीमपरिस्फुटशरीरसौन्दर्यामाकृतिमवलोक्य समाकृष्टचेता अपि पराङ्गनाभिमर्शांहोभिया संयमयति स्वात्मानम्। ततः शार्ङ्गरवो 'यतोऽन्योन्यसमयान्मदीयां दुहितर भवानुपायंस्त यन्मया प्रीतिमता युवयोरनुज्ञातम्। तदिदानीमापन्नसत्त्वेयं सहधर्माचरणाय प्रतिगृह्यताम्' इति महर्षेः संदेशमुपाहरति। स्मारितोऽप्यन्यान्यप्रसङ्गैर्दुर्वासःशापवव्यवहितस्मृतिर्नृपः शकुन्तलापरिणयादि न स्मरति। अपरं चात्मकार्यनिर्वर्तिनीनामनृतवाङ्मधुभिर्विषयिण आकृष्यन्ते, अन्तरिक्षगमनात् पूर्वं परभृतः (अप्सराः) स्वमपत्यं द्विजैः पोषयन्ति' इत्यादिद्व्यर्थकवाक्यै. स्वजनन्युपमर्देन संतप्ता शकुन्तला दुष्यन्तं प्रति 'अनार्य ! आत्मनोऽनुमानेन प्रेक्षसे ?' प्रभृतिवाक्यैः प्रत्याख्याय 'पतिकुले दास्यमपि तव शुचिव्रतम्' इति तपस्विजनैरादिष्टा स्वानि भाग्यानि निन्दन्ती क्रन्दमाना च तिष्ठति। ततश्चाकाशात्स्त्रीसदृशैका ज्योतिः शकुन्तलामुत्क्षिप्याप्सरस्तीर्थं जगामेति पुरोहितो राजानमावेदयति। राजाऽपि दूनहृदयः शयनवेश्म प्रविशति।



# पञ्चमोऽङ्कः

( तैत प्रविशत्यासनस्थो राजा विदूषकश्च )

**विदूषकः**— ( कर्ण दत्त्वा ) भो वअस्स ! संगीतसालंतरे अवधाणं देहि । [2]कलविसुद्धाए गीदीए सरसंजोओ सुणीअदि । जाणे तत्तहोदी हंसवदिआ वण्णपरिअअं करेदि त्ति । [ भो वयस्य ! संगीतशालान्तरेऽवधानं देहि । कलविशुद्धाया गीतेः स्वरसंयोगः श्रूयते । जाने तत्रभवती हंसपदिका वर्णपरिचयं करोतीति । ]

**राजा**—तूष्णीं भव । यावदाकर्णयामि ।

( आकाशे गीयते )

अहिणवमहुलोलुवो भवं
तह परिचुंबिअ चूअमंजरिं ।
[1]कमलवसइमेत्तणिव्वुदो
महुअर ! विम्हरिओ सि णं कहं ? ॥ १ ॥

[ अभिनवमधुलोलुपो भवांस्तथा परिचुम्ब्य चूतमञ्जरीम् ।
अमलवसतिमात्रनिर्वृतो मधुकर ! विस्मृतोऽस्येनां कथम् ? ]

---

भो वयस्य सखे ! सगीतशालाभ्यन्तरेऽवधानं देहि । कलविशुद्धाया गीतेः स्वरसयोग श्रूयते । कला मधुरास्फुटध्वनियुक्ता । अनेन सुशारीरमुक्तम् । 'भारी तु ध्वनिमाधुर्यरक्तिगाम्भीर्यमार्दवैः' इत्यादिना सुशारीरस्य गुणा उक्ता **रत्नाकरे** । अत एवाग्रे 'लक्ष्यते रागभरिता' इति । विशुद्धा शुद्धा नाम गीतिः । ग्रामरागजनिकेत्यर्थः । तस्याः स्वरसंयोगः, तत्सबन्धी स्वरालाप इत्यर्थः । तदुक्तं तत्रैव—'गीतयः पञ्च शुद्धाख्या भिन्ना गौडा निवेसरा । साधारणी विशुद्धा स्यादवक्रैर्ललितैः स्वरैः ॥' इति । जाने तत्रभवती हंसपदिका वर्णपरिचयं स्थाप्यारोह्यवरोह्यात्मकगानक्रियाभ्यास करोति । तथा च तत्र—'गानक्रियोच्यते वर्णः स चतुर्धा निरूपितः । स्थाप्यारोह्यवरोही च संचारी' इति । [ **अहिणवेति** । ] अभिनवेत्यपरवक्रम् । अभिनवमधुलोलुपो भवांस्तथा

---

**पाठा०**—१ अत्र १५४ तमपृष्ठस्थो हि ( 'ततः प्रविशति कञ्चुकी' ) इत्यारभ्य द्वितीयश्लोकं यावत्पाठः पठ्यते तत्पश्चाचायम् । २ 'लअसुद्धाए वीणाए.'

---

**टिप्प०**—1 भ्रमरस्य कमल एव वसति कविपरम्परयादृता वर्तते तथा च भट्टि (२।१९) 'न पङ्कज त यदलीनपङ्कजम्' 'इद रुणद्धि मा पद्ममन्त क्वणितषट्पदम्' ( विक्रमो० ४। ) इति ।

**राजा**—अहो रागपरिवाहिनी गीतिः[१] ।

**विदूषकः**—किं दाव गीदीए अवगओ अक्खरत्थो ? । [ किं तावद्गीत्या अवगतोऽक्षरार्थः ? ]

**राजा**—( स्मितं कृत्वा ) सकृत्कृतप्रणयोऽयं जनः । तस्या देवीं[२] वसुमतीमन्तरेण मदुपालम्भमवगतोऽस्मि । सखे माढव्य ! मद्वचनादुच्यतां हंसपदिका—निपुणमुपालब्धोऽस्मीति[३] ।

**विदूषकः**—जं भवं आणवेदि । ( उत्थाय ) भो वअस्स ! गहीदस्स ताए परकीएहिं हत्थेहिं[४] सिहंडए ताडीअमाणस्स अच्छराए वीदराअस्स विअ णत्थि दाणिं मे मोक्खो । [ यद्भवानाज्ञापयति । भो वयस्य ! गृहीतस्य तया परकीयैर्हस्तैः शिखण्डके ताड्यमानस्याप्सरसा वीतरागस्येव नास्तीदानीं मे मोक्षः । ]

**राजा**—गच्छ नागरिकवृत्त्या संज्ञापयैनाम्[५] ।

परिचुम्ब्य चूतमञ्जरीम् । कमलवसतिमात्रनिर्वृतो मधुकर ! विस्मृतोऽस्येना कथम् ? ॥ नूतनपुष्परससतृष्णः । नूतनत्वं प्रत्यग्रत्वेन समयविशेषजातत्वेन च । अत एव तथा तेन प्रकारेण, यथा स्वाभिलाषपरिपूर्तिर्भवतीत्यर्थः । चूतमञ्जरीमाम्रमञ्जरीम् । 'मञ्जरी वल्लरी स्त्रियाम्' इत्यमरः । परितः समन्ततश्चुम्बित्वा कमलं सर्वदानुभूतं न त्वपूर्वं चूतमञ्जर्यादि । तत्रापि वसतिमात्रं न तु मध्वास्वादस्तेनापि निर्वृतः सुखितः एनां चूतमञ्जरीं कथं विस्मृतोऽसि ? । अत एव मधुकरेति साभिप्रायम् । हेत्वनुप्रासौ । अत्र सारूप्यनिमित्तया प्रशंसया राज्ञो दुष्यन्तस्य शकुन्तलाविस्मरणस्य प्रस्तुतस्य गम्यत्वादाक्षेपनामाङ्गमुपक्षिप्तम् । तल्लक्षणं **दशरूपके** ( १।४२ )—'गर्भबीजसमुद्भेदादाक्षेपः परिकीर्तितः' इति । अथ चानेन तृतीयं पताकास्थानमुक्तम् । तल्लक्षणमुक्तं **मातृगुप्ताचार्यैः**—'अर्थोपक्षेपणं यत्तु गूढं सविनयं भवेत् । श्लिष्टप्रत्युत्तरोपेतं तृतीयं तन्मतं तथा ॥' इति 'मधुव्रते मधुकरः कामुकेऽपि प्रकीर्तितः' इति विश्वः । कमलाया लक्ष्म्या वसतिस्तया निर्वृत इति । 'दीर्घह्रस्वे मिथो वृत्तौ' इत्यनेन ह्रस्वत्वम् । अभिनवं यन्मध्वधरमधु तत्र लोलुप इति सर्वेषां श्लिष्टत्वम् । रञ्जनं रागस्तत्परिवाहिनी, अत्यन्तरञ्जिकेत्यर्थः ।

**पाठा०**—१ 'कञ्चुकी–( विलोक्य ) अये अन्यासक्तचित्तो देवः । तदवसरं प्रतिपालयामि । ( इत्येकान्ते स्थितः )'. २ 'हंसवतीमन्तरेणोपा०'. ३ 'देवी हंसवती । सम्यगुपालब्धोऽस्मीति'. ४ 'अच्छभल्लो । ता अवीदराअस्स विअ'. ५ 'शान्तयैनाम्'.

विदूषकः—का गई ? । [ का गति. ? । ] ( इति निष्क्रान्त )

राजा—( आत्मगतम् ) किं नु खलु गीतार्थमाकर्ण्येष्टजनविरहादृतेऽपि बलवदुत्कण्ठितोऽस्मि । अथवा,—

**रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्**
**पर्युत्सुकीभवति यत्सुखितोऽपि जन्तुः ।**
**तच्चेतसा स्मरति नूनमबोधपूर्वं**
**भावस्थिराणि जननान्तरसौहृदानि ॥ २ ॥**

( इति पर्याकुलस्तिष्ठति )

---

अत्र धातुसबद्धा न तु गीतिशब्दवाच्या । कि तावद्गीत्या अवगतोऽक्षरार्थ ? । सकृदेकवार कृत प्रणयो याञ्चा येनेदृशोऽयं जनो हसपदिकालक्षण । तस्या सकाशाद्देवीवसुमर्तामन्तरेण विना क्षणमपि न तिष्ठामीति मत्सबन्धमुपालम्भमवगतोऽस्मि । क्वचित् **'तदद्य देवीं वसुमतीमन्तरेणोपालम्भमुपाकृतोऽस्मि'** इति पाठ. सुबोध एव । यद्भवानाज्ञापयति । भो वयस्य ! गृहीतस्य तया परकीयैर्हस्तैः शिखण्डके काकपक्षके । कोऽल्पार्थे । ताड्यमानस्य, तया शिखण्डके गृहीतस्येति योज्यम् । अप्सरसा वीतरागस्येव नास्तीदानी मे मोक्षो मोचनं कैवल्यं च । अप्सरसा गृहीतस्य वीतरागस्येति योज्यम् । श्लेषोपमा । नागरिकवृत्त्येति त्रिपताकस्य मध्यमातर्जनीभ्या वक्राभ्यामधोमुखं कल्पिताभ्यामित्यर्थः । का गति· ? राजवचनमनुल्लङ्घनीयमिति भाव । **'गीतमाकर्ण्य'** इति पाठ । **'गीतार्थमाकर्ण्य'** इति पाठे–गीतं चार्थश्चेति गीतार्थमाकर्ण्य श्रुत्वा ज्ञात्वेति व्याख्येयम् । इष्टजनविरहादृत इति शापप्रभावाद्वस्तुतस्तस्मादेव बलवदधिकम् । **रम्याणीति ।** रम्याणि वस्तूनि वीक्ष्य । विशेषणेनैव विशेष्यावगतेस्तदनुपादानम् । अत एव प्रक्रमभङ्ग । मधुराञ्छ्रुतिसुखदाञ्छब्दान् गीतादीन्निशम्य श्रुत्वा च सुखितोऽपि विरही भवत्येवेति 'अपि'शब्दार्थ· । जन्तुः प्राणिमात्रं पर्युत्सुकीभवत्युत्कण्ठीभवति । रम्याणि वीक्ष्येति प्रसङ्गसङ्गत्योक्तम् । यद्वा,–हृदि स्फुरन्तं चूतमञ्जर्यादिकमर्थं पुरः साक्षादिव कुर्वत इतीयमुक्ति । नूनं निश्चितं तद्भावैर्वासनाभि· स्थिराणि निश्चलानि, जन्मसहस्रैरपि दूरीकर्तुमशक्यानीति भाव· । जननान्तरसौहृदान्यन्यजन्मसौहार्दान्यबोधपूर्वं विषयविशेषज्ञानाभावपूर्वं चेतसा स्मरति । यतो जननान्तरसौहृदमत एव पूर्वमिति हेतुत्वेनेह योज्यम् । सामान्यतो जन्मान्तराणामनुरागं स्मृत्वा समुत्सुकत्वं भवतीत्यर्थ । अत्र स्वस्य शकुन्तलाविषये जन्मान्तरीयोऽधुनातनशापाच्छादितोऽनुरागो गम्य· । यतो विशेषे प्रस्तुते सामान्योक्तेरप्रस्तुतप्रशंसा । तेन

---

पाठा०—१ 'गीतमेवंविधमाकर्ण्येष्टजन०'. २ '( अस्मृतिनिमित्तमुन्मनस्कत्वं रूपयति )'

स्थायिन्या रतेरविच्छेदो ध्वनित । अत्र 'नूनम्' इत्युत्प्रेक्षायामिति कश्चित्,–तन्न; अत्र जन्मान्तरीयस्मरणं शास्त्रसिद्धमेव। तस्यासंभवात्सबन्ध· क्वचिदुत्प्रेक्षणीय । अत्र सामान्यत उक्ते क्वचित्फलाभावान्न तदुत्प्रेक्षा । अथ समयविशेषेऽसदुत्प्रेक्ष्यत इति चेत्–तदपि न, रसोत्पादकारणस्योक्ते· । तेन काव्यलिङ्गमेव। तयोश्च पदार्थवाक्यार्थरूपत्वात्संसृष्टिः । ननु जननान्तराणा नानाविधानामनन्ताना संभवात्कथमेतद्रूपेण स्मरणं तिर्यग्योन्यादिना व्यवधानादिति चेत्,–न, पातञ्जलशास्त्रसिद्धत्वात् । तथा हि–'ततस्तद्विपाकानुगुणानामभिव्यक्तिर्वासनानाम्' । इदं सूत्रम् । अस्य **भोज**कृता वृत्ति—'द्विविधा वासना·–स्मृतिफला जात्यायुर्भोगफलाश्च । जात्यायुर्भोगफला एकानेकजन्मभवा इति पूर्वमेव कृततन्निश्चया· । यास्तु स्मृतिमात्रफलास्तत· कर्मणोऽन्यादृक्शरीरमारब्धं देवमानुषतिर्यगादिभेदं तस्य विपाकस्य या अनुगुणा अनुरूपा वासनास्तासामेव तस्मादभिव्यक्तिर्वासनाना भवति' इति । अयमर्थ—येन कर्मणा पूर्वं देवतादिशरीरमारब्धं जात्यन्तरशतव्यवधानेऽपि पुनस्तथाविधस्यैव शरीरस्यारम्भे तद्दशाया नरकादिशरीरोपभोगवासना व्यक्तिमायान्ति । आसामेव वासनाना कार्यकारणभावानुपपत्तिमाशङ्क्य समर्थयितुमाह—'जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसस्कारयोरेकरूपत्वात्' सूत्रम् । इह नानायोनिषु भ्रमता ससारिणा काचिद्योनिमनुभूय यदा योन्यन्तरसहस्रव्यवधाने पुनस्तामेव योनिं प्रतिपद्यन्ते, तदा तस्या पूर्वानुभूताया योनौ तथाविधशरीरादिव्यञ्जकापेक्षया वासनाः प्रकटीभूता आसन्, तास्तथाविधव्यञ्जकशरीरादिलाभे प्रकटीभवन्ति । जातिदेशकालव्यवधानेऽपि तासा स्वानुरूपस्मृत्यापि फलसाधन आनन्तर्यमेव। कुत ? स्मृतिसस्कारयोरेकरूपत्वात् । तथा हि—अनुष्ठीयमानात्कर्मणश्चित्तसत्त्वेन वासनारूपाः सस्कारा समुत्पद्यन्ते । स च स्वर्गनरकादीना फलाना चाङ्कुरीभूत कर्मणा वा यागादीना शक्तिरूपतयाऽवस्थान कर्तुर्वा तथाविधभोगभोक्तृत्वरूपं सामर्थ्यम् । सस्कारात्स्मृति·, स्मृतेश्च सुखदु·खोपभोग·, तदनुभवाच्च पुनरपि सस्कारस्मृत्यादय· । एवं च यस्य स्मृतिसंस्कारादयो भिन्नास्तस्याप्यानन्तर्याभावे दुर्लभः कार्यकारणभाव । अस्माकं तु यदानुभव एव सस्कारीभवति, सस्कारश्च स्मृतिरूपतया परिणमते, तदैकैकस्यैव चित्तस्यानुसधातृत्वेन स्थितत्वान्न कार्यकारणभावो दुर्घट· । अत एवात्र श्लोके स्मरणस्य चेत कर्तृत्वेऽपि पुनस्तदुपादानम् । अतश्चासावेव कविः—'मनो हि जन्मान्तरसंगतिज्ञम्' (रघु० ७।१५) इत्याह स्म । भवत्वानन्तर्यं कार्यकारणभावश्च वासनानाम् । यदा तु प्रथममेवानुभवः प्रवर्तते । तदा किं वासनानिमित्त उत निर्निमित्त इति शङ्का व्यपनेतुमाह—'तासामनादित्वं चाशिषो नित्यत्वात्' सूत्रम् । तासा वासनानामनादित्वम् । न विद्यत आदिर्यस्य तस्य भावस्तत्त्वम्, आसामादिर्नास्तीत्यर्थ । कुत इत्याह—आशिषो नित्यत्वात् । येयमाशीर्महामोहरूपा सदैव सुखसाधना मे भूयात्, सा मा कदाचन तैर्वियोगो भूदिति यः संकल्प-

( ततः प्रविशति कञ्चुकी )

**कञ्चुकी**—अहो नु खल्वीदृशीमवस्थां प्रतिपन्नोऽस्मि ।

**आचार इत्यवहितेन मया गृहीता**
**या वेत्रयष्टिरवरोधगृहेषु राज्ञः ।**
**काले गते बहुतिथे मम सैव जाता**
**प्रस्थानविक्लवगतेरवलम्बनार्था ॥ ३ ॥**

भोः ! कामं धर्मकार्यमनतिपात्यं देवस्य । तथापीदानीमेव धर्मासनादुत्थिताय पुनरुपरोधकारि कण्वशिष्यागमनमस्मै नोत्सहे निवेदितुम् । अथवाऽविश्रमोऽयं लोकतन्त्राधिकारः । कुतः

---

विशेषो वासनाना कारण तस्य नित्यत्वादनादित्वमित्यर्थ इति । अबोधपूर्वं स्मरतीति शब्दशक्तिमूलो विरोधाभासो व्यङ्ग्यः । म्याम्येति युत्सुयत्सु इति नूननेनेति छेकवृत्तिश्रुत्यनुप्रामाः । वसन्ततिलका वृत्तम् । औत्सुक्यलक्षणं **सुधाकरे**—'कालाक्षमत्वमौत्सुक्यमिष्टवस्तुवियोगत । तद्दर्शनाद्रम्यवस्तुदिदृक्षादेश्च' इति । नन्वत्रौत्सुक्यलक्षणस्य भावस्य शब्दवाच्यत्वं दोष इति चेत्—न; अत्र न तथा विभावादेरौत्सुक्यप्रतीतिर्यथा पुनरौत्सुक्यग्रहणात् । एतदभिप्रायेणैव 'न दोष. स्वपदेनोक्तावपि संचारिण· क्वचित्' इत्युक्तम् । क्वचित् **'भावस्थितानि'** इति पाठ· । सोऽपि सांप्रदायिक एव । पर्याकुल इति विरहित्वात् । सत्यपि शापे स्थायिन्या रतेरविच्छेदार्थमेतादृगुक्ति । एवमग्रेऽपि ज्ञेयम् । अन्यथा मध्ये विच्छेदान्महान्रसदोष· स्यात् । **तत इति** । स्वकार्यवशात्सूचनामकृत्वैव कञ्चुकिनः प्रवेश । कञ्चुकिलक्षणं **मातृगुप्ताचार्यै**रुक्तम्—'ये नित्यं सत्यसपन्नाः कामदोषविवर्जिताः । ज्ञानविज्ञानकुशला· कञ्चुकीयास्तु ते स्मृता ॥' इति । ईदृशीमिति वृद्धावस्थाम् । **आचार इति** । अवहितेन सावधानेन मया, शक्तेनापीत्यर्थ. । राज्ञोऽवरोधगृहेष्वन्त.पुरेष्वाचार इति 'रक्षाधिकारिणा वेत्रयष्टिर्गृहीतव्या' इत्याचाराद्या वेत्रयष्टिर्गृहीता बहुतिथे काले ह्यायुर्लक्षणे गते । 'बहुपूगगणसङ्घस्य तिथुक्' (पा ५।२।५२) इति तिथुक् । मम सैव वेत्रयष्टिरवलम्बनार्था शरीरावलम्बनप्रयोजना जाता । 'अर्थेन सह नित्यसमास परवल्लिङ्गता च' (वा. १२७३-४) इति

---

**पाठा०**—१ 'कञ्चुकी—( उपसृत्य ) जयति जयति देवः'. २ **'अहो, बत कीदृशीं वयोवस्थामापन्नोऽस्मि ।'. ३ '°रवलंबनाय । यावदभ्यन्तरगताय देवाय स्वमनुष्ठेयमकालक्षेपार्हं निवेदयामि । किं पुनस्तत् । विचिन्त्य आं, ज्ञातम् । कण्वशिष्यास्तपस्विनो देवं द्रष्टुमिच्छन्ति । भोश्चित्रमेतत्—'क्षणात्प्रबोधमायाति लंघ्यते तमसा पुनः । निर्वास्यतः प्रदीपस्य शिखेव जरतो मतिः ।'.**

भानुः सकृद्युक्ततुरङ्ग एव
रात्रिन्दिवं गन्धवहः प्रयाति ।
शेषः सदैवाहितभूमिभारः
षष्ठांशवृत्तेरपि धर्म एषः ॥ ४ ॥

यावन्नियोगमनुतिष्ठामि । (परिक्रम्यावलोक्य च) एष देवः

समास. स्त्रीलिङ्गता च । कीदृगो मम ? प्रस्थाने गमनारम्भे विक्लवा गतिर्गमनक्रिया यस्य । अत्र पूर्वार्धे उक्तनिमित्ता विभावना । अशक्तत्वस्य प्रसिद्धकारणस्य निषेधोऽवहितेनेति तद्विरुद्धमुखेनोक्त । निमित्तं चाचार इत्युक्तम् । उत्तरार्धे वार्धकगमनलक्षणकार्यस्यारम्भे वेत्रयष्टे सहायतोपादानात्समाहितम् । 'कार्यारम्भे सहायाप्ति' (स. कं ३।३४) इति तल्लक्षणात् । अत्र 'प्रस्थान-गति'शब्दयोरन्यतराग्रहणे विह्वलत्वं मनोगतमपि प्रतीयत इत्युभयग्रहणम् । गतिशब्दस्य ज्ञानार्थत्वादपि 'वृद्धस्य विक्लवगते' इति वा पठनीयम् । एवमवरोधनियोगकालेन तदप्यर्थपौनरुक्त्यं परिहरणीयम् । त्यतायेति हितेहीतेति गृहीगृहेति गतेगत इति छेकवृत्तिश्रुत्यनुप्रासा । वृत्तमनन्तरोक्तम् । भो' काममिति प्रकाशानुमतौ । अनतिपात्यमनतिक्रमणीयम् । न विद्यते विश्रमो यस्य सोऽविश्रम । लोके भुवने । तन्त्राधिकार प्रधानाधिकार, विश्रान्तिरहित इत्यर्थ । 'लोकस्तु भुवने जने' । 'तन्त्रं प्रधाने सिद्धान्ते' इत्यमरः । 'नोदात्तोपदेशस्य मान्तस्यानाचमे' (पा ७।३।३४) इत्यविश्रमपदे वृद्ध्यभावः । **भानुरिति** । भानु. सूर्यः सकृदेकवारमेव युक्ता योजितास्तुरङ्गा येन स. । एतेन तुरङ्गमात्रयोजनेऽप्यस्याविश्रान्तिर्ध्वनिता, एतादृश एवास्त इति शेष' । यस्य तुरङ्गयोजने विश्रान्त्यभावस्तस्यान्यकार्येऽविश्रान्ति किमु वक्तव्येत्यविश्रान्तगमनं ध्वन्यते । केचिद्रात्रिंदिव यातीत्यत्रापि योजयन्ति,–तन्न सम्यक्, यत प्रतिवस्तूपमाया प्रतिवाक्यसामान्यधर्मस्य भिन्नपदोपादानत्वमपेक्ष्यते तद्धीयेत । किंचैतद्विशेषणोपादानं व्यर्थ स्यात् । भानू रात्रिंदिवं प्रयातीत्येतावतैवाभिमतार्थसिद्धे. प्रक्रमभङ्गश्चापद्येत । अग्रिमयोर्विशेषणानुपादानात् । गन्धवहो वायुरावहप्रवहादी रात्रिन्दिव प्रयाति । 'अचतुर–' (पा. ५।४।७७) इति निपातनाद्रात्रिंदिवमिति सिद्धम् । शेषोऽनन्तः सदैव सर्वदाहितभूमिभारो धृतवसुंधराभारः, अस्तीति शेष' । सामान्यक्रियानिर्देशादध्याहारदोषाभाव । लट्प्रत्ययो नित्यवृत्तत्वं द्योतयति । प्रजाभिरुपार्जितस्य द्रव्यस्य य षष्ठोऽशः स वृत्तिर्वर्तनं यस्य तस्य राज्ञ । 'अपि'शब्दः समुच्चये । एष धर्म स्वीकृतभूमिभारत्वम् । अत्र भारो रक्षणरूप' सार्वकालिकत्वलक्षणसमानधर्मस्य सकृद्युक्तपदेन 'रात्रिंदिव'पदेन 'सदैव'पदेन चोक्तेर्मालाप्रतिवस्तूपमा । दुष्यन्तस्येति विशेषे वक्तव्ये सामान्यवचनादप्रस्तुतप्रशंसापि । श्रुत्यनुप्रासः ।

प्रजाः प्रजाः स्वा इव तन्त्रयित्वा
निषेवतेऽशान्तमना विविक्तम् ।
यूथानि संचार्य रविप्रतप्तः
शीतं दिवा स्थानमिव द्विपेन्द्रः[1] ॥ ५ ॥

(उपगम्य) जयतु जयतु देवः । एते खलु हिमगिरेरुपत्यकारण्यवासिनः काश्यपसंदेशमादाय सस्त्रीकास्तपस्विनः[2] संप्राप्ताः । श्रुत्वा देवः प्रमाणम् ।

**राजा**—(सादरम्) किं काश्यपसंदेशहारिणः ? ।

**कञ्चुकी**—अथ किम् ? ।

**राजा**—तेन हि मद्वचनाद्विज्ञाप्यतामुपाध्यायः सोमरातः—अमूनाश्रमवासिनः श्रौतेन विधिना सत्कृत्य स्वयमेव प्रवेशयितुमर्हति[3]—इति । अहमप्यत्र[4] तपस्विदर्शनोचिते प्रदेशे स्थितः प्रतिपालयामि ।

---

इन्द्रवज्रा वृत्तम् । नियोगं स्वाधिकारं मुनिनिवेदनलक्षणम् । **प्रजा इति** । प्रजाः स्वापत्यानीव स्वा प्रजाः स्वीयलोकास्तन्त्रयित्वा सव्यवहार्याशान्तमना उद्विग्नमनाः सन्विविक्तं विजनं स्थानं निषेवते । 'प्रजा स्यात्संततौ जने' । 'विविक्तौ पूतविजनौ' इति चामरः । यूथानि सचार्य चारयित्वा । 'चर गतिभक्षणयोः' । रविप्रतप्तः सूर्यतप्तो द्विपेन्द्रो गजो दिवा शीतं स्थानमिव । उपमयोश्छेकवृत्त्यनुप्रासयोश्च संसृष्टिः । श्रुत्यनुप्रास । उपेन्द्रवज्रा वृत्तम् । अत्र दिवेति रात्र्यादिसमयं निवर्तयत्रवितापस्याधिक्यं द्योतयति । 'शान्तमनाः' इति तु छेदे रवितप्त इत्युपमानेन सह विरोधः स्यात् । 'एते क्लान्तमनस' (पृ १६४) इति वक्ष्यमाणेन राजवचनेन विरोधापत्तिश्च । हिमगिरेर्हिमाचलस्य । क्वचित् **'हिमवतो गिरेः'** इति पाठः । तत्र हिमं विद्यते यस्मिन्निति यौगिकत्वमङ्गीकृत्य ते च तन्निवासिना दुष्करतपश्चरणं तेन गौरवातिशयो द्योत्यत इति परिहर्तव्यमर्थपौनरुक्त्यम् । उपत्यकारण्यं पर्वतासन्नभूमिवनं तद्वासिनः । 'उपत्यकाद्रेरासन्ना भूमिः' इत्यमरः । सोमरात इत्युपाध्यायनाम । श्रौतेन वेदोक्तेन । सत्कृत्य पूजयित्वा । स्वयमेवेत्यनेन गौरवातिशयो द्योत्यते । वेत्रवतीति प्रतिहारीनाम । द्वारदेशस्थितायास्तस्या राज्ञोऽपि तत्रैव सन्नि-

---

**पाठा०**—१ अत्र—'औत्सुक्यमात्रमवसादयति' इति, 'स्वसुखनिरभिलाषः' 'नियमयसि' इत्यग्रेतनं श्लोकत्रयं दृश्यते. २ 'सस्त्रीकास्तपस्विनः ।'. ३ '°मर्हसीति ।'. ४ 'अहमप्येतांस्तपस्वि°'

**कञ्चुकी**—यदाज्ञापति देवः। (इति निष्क्रान्तः)

**राजा**—(उत्थाय) वेत्रवति! अग्निशरणमार्गमादेशय।

**प्रतीहारी**—इदो इदो देवो। [इत इतो देवः।]

**राजा**—(परिक्रामति, अधिकारखेदं निरूप्य) सर्वः प्रार्थितमर्थमधिगम्य सुखी संपद्यते जन्तुः। राज्ञां तु चरितार्थता दुःखान्तरैव।

**औत्सुक्यमात्रमवसाययति प्रतिष्ठा**
**क्लिश्नाति लब्धपरिपालनवृत्तिरेनम्।**
**नातिश्रमापनयनाय न च श्रमाय**
**राज्यं स्वहस्तधृतदण्डमिवातपत्रम्॥ ६॥**

(नेपथ्ये)

**वैतालिकौ**—विजयतां देवः।

---

धानादप्रवेश । प्रतीहारीलक्षणं **मातृगुप्ताचार्यै**रुक्तम्—'सधिविग्रहसंबद्धं नानाकार्यसमुत्थितम्। निवेदयन्ति या कार्यं प्रतीहार्यस्तु ताः स्मृता ॥' इति। अग्निशरणमग्निगृहम्। 'शरणं गृहरक्षित्रो·' इत्यमर·। इत इतो देव·। दु खान्तरैव दु·खावधिकैव। **'दुःखोत्तरा'** इति पाठे, दु·खाधिकेत्यर्थ·। **औत्सुक्येति।** प्रतिष्ठा सर्वोत्कृष्टं गौरवम्। 'प्रतिष्ठा स्थानमात्रके। गौरवे' इति विश्वः। सा कर्त्री। 'एनम्'इत्यग्रे वक्ष्यमाणत्वात् 'अस्य' इति विपरिणम्यते। अस्य राज्ञ औत्सुक्यमात्रं य (याव)द्विषयजन्यामुत्कण्ठामवसाययति समाप्तिं नयति। अन्यजनस्य तु यत्किंचिद्विषयिणी समुत्पन्नोत्कण्ठा तथैव तिष्ठति, तत्तद्विषयालाभात्। राज्ञस्तु फललाभादुत्कण्ठापरिपूर्तिः। एतावदाभिमानिकं सुखमिति भावः। लब्धस्य प्राप्तस्य फलस्य यत्परित· सर्वतोभावेन पालनं रक्षणं तत्र या वृत्तिर्वर्तना कदाचित्सर्वरात्रिजागरणं तत्रैव कदाचिदच्छिन्नधारावृष्ट्यनुभव इत्यादिकमेनं राजानं क्लिश्नाति। अतः कारणाद्राज्यम्। कर्तृ। न अत्यन्तं यः श्रमस्तदपनयनायेति न, अपि त्वतिश्रमापनयनायैव सुखदत्वात्। तथा न श्रमायेति च न, अपि तु श्रमायैव क्लेशदत्वात्। किमिव? स्वहस्ते धृतो दण्डो यस्य तदातपत्रं छत्रमिवेति। अत्र राज्यं पक्षः। श्रमापनयश्रमौ साध्यौ। पूर्वार्धं हेतुः। चतुर्थचरणो दृष्टान्त इत्यनुमानालंकार·। उपमानानुमानयोरङ्गाङ्गिभाव सकर। यच्छ्रमापनयनाय तच्छ्रमायेति विरोधाभास। यथासख्यमपि। अथ च संबन्धेऽसंबन्धरूपाऽसंबन्धे सबन्धरूपा द्व्यतिशयोक्तिरपि। श्रमाश्रमेति नयनायेति यनायनेति वा छेकवृत्त्यनुप्रासयो· संसृष्टिः। श्रुत्यनुप्रासोऽपि। एकान्तसुखायतनत्वभ्रमेण राज्य आसक्ततया न भवि-

---

**पाठा०—१ 'यथा श्रमाय'. २ '(नेपथ्ये वैतालिकौ) जयति जयति देवः'**

प्रथमः—

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते [1]वृत्तिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् ॥ ७ ॥

द्वितीयः—

नियमयसि [2]कुमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय ।
अतनुषु विभवेषु ज्ञातयः सन्तु नाम
त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम् ॥ ८ ॥

---

तव्यमित्युपदेशो व्यज्यते । वसन्ततिलका वृत्तम् । अधिकारखेदं निरूप्येत्यादिना यः खेदो निबद्धः स निरुपधिपरोपकारप्रवृत्ताना भवदादीनामेतत्स्वभावान्नायं खेद इति वैतालिकवचसा स्तौति—**स्वसुखेति** । नैकाहं न पञ्चषाहमपि तु प्रतिदिनं प्रत्यहम्, निरन्तरमित्यर्थः । त्वं लोकहेतोर्लोककारणात्, लोकनिमित्तमिति यावत् । 'हेतुर्ना कारणं बीजम्' इत्यमरः । खिद्यसे परितप्यसे । तत्रार्थ हेतुमाह—स्वस्मिन् यत्सुखं तत्र निरभिलाषो निर्गतवाञ्छः, प्रासङ्गिकसुखायापि न प्रवृत्तिरिति भाव । अत्र खिद्यस इति 'खिद परितापे' अस्य तौदादिकस्य कर्मकर्तरि प्रयोग । तथा च **वामनः** (काव्याऽ ५।२।५)—'कर्मकर्तरीत्यनुवर्तमाने' खिद्यस इति खिद्यत इति च प्रयोगो दृश्यते । सोऽपि कर्मकर्तर्येव द्रष्टव्यो न कर्तरि । अदैवादिकत्वात्खिदेः' इति । **दुर्गसिंह**स्तु 'खिद दैन्ये' इत्यस्य दैवादिकत्वं मन्यते । तथा च **क्षीरतरङ्गिण्याम्**—'पद गतावेतदनन्तरमत्रैव खिद दैन्य इति दुर्गः' इति । अत एव **मल्लभट्टेनाख्यातचन्द्रिकाया**मुक्तम्—'ताम्यति श्राम्यति ग्लानौ खिन्ते खिन्दति खिद्यते' इति । 'अथवा' इति । पूर्वाक्षेपे । एवंविधैव ते वृत्तिर्वर्तनम् । हि यस्मात्पादपो वृक्षः । पादाश्चरणान्पाति रक्षतीति च । अत एव न वृक्षादिपदोपादानम् । मूर्ध्नाऽग्रभागेनाथवोत्तमाङ्गेन । तीव्रमुष्णं मध्याह्नसंभवमनुभवति । संश्रितानामध उपविष्टानामथ चाश्रिताना छाययातपाभावेन पालनेन च परितस्तापमौष्ण्यं तापखेदं च शमयतीति । व्यवहारसमारोपात्समासोक्ति 'छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितो. । पालनोत्कोचयोः' इत्यादि विश्व । 'तापोऽभितापे दवथौ खेदे च' इत्यजयः । काव्यलिङ्गाक्षेपदृष्टान्ता· । वृत्तिश्रुत्यनुप्रासौ । मालिनी वृत्तम् । **नियमयसीति** । आत्तदण्डो गृहीतदण्ड· प्राप्ताभिमानश्च । 'अभिमाने ग्रहे दण्डः' इति विश्वः ।

---

पाठा०—१ 'सृष्टिरेवंविधैव'. २ 'विमार्गप्रस्थितानात्त०'.

**राजा**—एते क्लान्तमनसः[1] पुनर्नवीकृताः स्मः । (इति परिक्रामति)

**प्रतीहारी**—एसो अहिणवसम्मज्जणसस्सिरीओ सण्णिहिदहोमधेणू अग्गिसरणालिंदो । आरुहदु देवो । [एषोऽभिनवसंमार्जनसश्रीकः संनिहितहोमधेनुरग्निशरणालिन्दः । आरोहतु देवः । ]

**राजा**—(आरुह्य परिजनांसावलम्बी तिष्ठति) वेत्रवति! किमुद्दिश्य भगवता काश्यपेन मत्सकाशमृषयः प्रेषिताः[2] स्युः? ।

**किं तावद्व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं**
**धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम् ।**

---

कुमार्गप्रस्थितानुद्धतान्नियमयसि विनीतान्करोषि, मार्गस्थान्करोषीत्यर्थः । तत्स्वरूपं **मनुसंहितायाम्**—'तदर्थं सर्वभूताना गोप्तार धर्ममात्मजम् । ब्रह्मतेजोमयं दण्डमसृजत्परमेश्वर· ॥' इति । तत्प्रयोगविपये विशेषोऽपि तत्रैव—'स्वराष्ट्रे न्यायवृत्ति स्यादुग्रदण्डश्च शत्रुषु । सुहृत्सु तिलवत्स्निग्धो ब्राह्मणेषु क्षमान्वित· ॥' इति । विवादं परस्परकलहं प्रशमयसि । रक्षणाय कल्पसे प्रभवसि भयात् । 'शत्रुभ्यो धनदानेन' इत्यादि रक्षणं बहुप्रकारम् । अतनुषु बह्वीषु संपत्सु । 'नाम'इति संभावनायाम् । ज्ञातय· सन्तु भवन्तु, बन्धुकृत्यकारिण इत्यर्थ· । तुः पूर्वतो विशेषे । सति विभवेऽसति च विभवे । प्रजाना प्रजासु विषये । षष्ठीसप्तम्योरभेदाद्बन्धूना ज्येष्ठबन्धूना कृत्यममार्गान्निवर्तनं कलहशमनं रक्षणं च तत्त्वयि परिसमाप्तम्, त्वयैव निष्पाद्यते नान्येनेत्यर्थ· । अत्र पूर्वार्धार्थौ हेतुत्वेनोपात्तः । काव्यलिङ्गव्यतिरेकानुप्रासा· । पूर्वार्धे यमकं च । वृत्तमनन्तरोक्तम् । अनेन च पद्येन पूर्वं लोकहेतोरिति यदुक्तं तदेव विवृतम् । नवीकृता, अधिकारचिन्तन इति शेष । अत एवास्माभिस्तत्र 'अशान्तमनाः' इति व्याख्यातम् । यतस्तस्यैवानुवादोऽयम् 'क्लान्तमनस' इति । अभिनवं नूतनं यत्संमार्जनं तेन सश्रीक· सशोभ, सनिहितहोमधेनुरिति, विशेषणद्वयेन पावित्र्यातिशयो द्योत्यते । अग्निशरणालिन्दोऽग्निहोत्रगृहबहिर्द्वारप्रकोष्ठ । 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके' इत्यमर । स्वभावोक्ति· । तस्य खेदविनोदं द्योतयति । आरोहतु देव· । परिजनासावलम्बीति खेदानुभाव एव । **किं तावदिति** । व्रतिना नियमवतामत एवोपोढमत्यूढमधिकं तपो येषाम् । 'उपोढ· कथितोऽत्यूढे समासन्ने विवा-

---

**पाठा०**—१ '(आकर्ण्य) आश्चर्यम्; एतेन कार्यानुशासनपरिश्रान्ताः पुन०'. २ 'प्रेषिताः–किं तावद्'.

आहोस्वित्प्रसवो ममापचरितैर्विष्टम्भितो वीरुधा-
मित्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥ ९ ॥

**प्रतीहारी**—सुचरिदणंदिणो इसीओ देवं सभाजइदुं आअ-देत्ति तक्केमि। [सुचरितनन्दिन ऋषयो देवं सभाजयितुमागता इति तर्कयामि।]

(ततः प्रविशन्ति गौतमीसहिताः शकुन्तला पुरस्कृत्य मुनयः, पुरश्चैष कञ्चुकी पुरोहितश्च)

**कञ्चुकी**—इत इतो भवन्तः।

**शार्ङ्गरवः**—शारद्वत !

महाभागः कामं नरपतिरभिन्नस्थितिरहो
न कश्चिद्वर्णानामपथमपकृष्टोऽपि भजते।
तथापीदं शश्वत्परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव ॥ १० ॥

---

हिते' इति धरणिः। ईदृशा तपस्विनाम्। विशेषणेनैव विशेष्यप्रतिपत्तेर्न तदुपादानम्। तपो विघ्नैर्विघ्नकर्तृभी राक्षसादिभिः। साध्यवसानेयं लक्षणा। तस्या विघ्नातिशय फलं दर्शितम्। किमिति वितर्के। उत धर्मारण्यचरेषु धर्मवनगेषु प्राणिषु जन्तुषु। धर्मपदेन ऋषीणा महत्त्वं सूचयता चेष्टितस्यात्यन्तमनुचितत्वं ध्वन्यते। अत एव केनचित्पामरादिनासत्। वाचापि वक्तुमशक्यमिति भावः। चेष्टितं कृतम्। आहोस्विन्ममापचरितैर्वीरुधा लताना प्रसवः पल्लवपुष्पादिर्विष्टम्भित प्रतिबद्ध। 'पुष्पं फलं च पत्र च वृक्षाणा प्रसवं विदु' इति धरणिः। तदुक्तम्—'राज्ञोऽपचारात्पृथिवी स्वल्पसस्या भवेत्किल। अल्पायुष प्रजाः सर्वा दरिद्रा व्याधिपीडिताः ॥' इति। तपतप इति स्विसवो इति छेकानुप्रासवृत्ति-श्रुत्यनुप्रासाः। शार्दूलविक्रीडितं वृत्तम्। षष्ठीसप्तम्योरभेदान्न विभक्तिप्रक्रमभङ्गः। विशेषणप्रक्रमभङ्गोऽपि नाशङ्कनीय। आदौ विशेषणद्वयं ततस्तदभाव इत्येव क्रमस्य विवक्षितत्वात्। सुचरितनन्दिन ऋषयो देवं सभाजयितुमागता इति तर्कयामि। **महाभाग इति**। न भिन्ना त्यक्ता स्थितिर्मर्यादा येन स नरपतिः काममतिशयेन महाभागः श्रेष्ठ इति विधेयम्। अहो इत्याश्चर्ये। वर्णाना ब्राह्मणाना मध्येऽपकृष्टो हीनोऽपि कश्चिदपथममार्ग न भजते। 'अपथं नपुंसकम्' इति नपुसकत्वम्। इति यद्यपि तथापीदं जनाकीर्णं जनव्याप्तं स्थानं शश्वत्

---

**पाठा०**—१ 'देवस्स सुअसहणिव्वुदे अस्समे कुदो एदं। किं तु सुचरिदाहिणंदिणो इसीओ'. २ 'शकुन्तलामादाय कण्वशिष्यौ'. ३ 'सखे शारद्वत'.

**शारद्वतः**—जाने[1] भवान्पुरप्रवेशादित्थंभूतः संवृत्तः । अहमपि,

**अभ्यक्तमिव[1] स्नातः शुचिरशुचिमिव प्रबुद्ध इव सुप्तम् ।**
**बद्धमिव स्वैरगतिर्जनमिह[2] सुखसङ्गिनमवैमि[3] ॥ ११ ॥**

**शकुन्तला**—( निमित्तं सूचयित्वा ) अम्महे, किं मे वामेदरं णअणं विप्फुरदि ? । [ अहो, किं मे वामेतरं नयनं विस्फुरति ? । ]

---

निरन्तरं परिचितं विविक्तं विजनस्थानं यस्य तेन मनसोपलक्षितोऽहं मनसा हेतुना वा हुतवहपरीतं गृहमिव मन्ये । अत्र पूर्वार्धे यत्कारणमुक्तं विजनस्य तत्सम्यक्त्वं कार्यं तदभावस्तद्विरुद्धमुखेनोक्त इति विशेषोक्ति । अथ च यदग्निपरीतत्वं कार्यं तत्कारणाभावस्य तद्विरुद्धमतेन पूर्वार्धं उक्तेन विभावना । उभे अप्युक्तनिमित्ते शश्वत्परिचितेत्याद्युक्ते । साधकबाधकप्रमाणभावात्संदेहसंकर·—'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभि· । उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः' (कुव १२।३५) इत्युक्तेर्मन्येशब्दस्योत्प्रेक्षाद्योतकत्वेऽप्यत्र न तथा । तत्सामग्र्यभावात् उपमयैव गतार्थत्वात् । तेनात्र 'मन्ये' शब्दस्य बुद्धित्वमात्रमर्थं । तदुक्तं **राजानकरुय्यकेन**—'अस्याश्चेवादिशब्दवन्मन्येशब्दोऽपि प्रतिपादक । कितूत्प्रेक्षा सामग्र्यभावे मन्येशब्दप्रयोगो वितर्कमेव प्रतिपादयति । यथा—'अहं त्विन्दुं मन्ये' इति अनुप्रासः । वक्तुर्वैराग्य ध्वन्यते । शिखरिणी वृत्तम् । अहमपीति श्लोकेनान्वेति । **अभ्यक्तमिति ।** अहं सुखसङ्गिनं जनमीदृशमवैमि । त्वं त्वग्निपरीतं गृहमिव जानासि । अहमप्येतादृशमिति 'अपि' शब्दार्थः । एतादृक्त्वं च विशिष्टोपमारूपकम् । क कमिव? स्नातोऽभ्यक्तं तैलाभ्यक्तमिव । अनेन पापश्लिष्टत्वं ध्वन्यते । 'शुचिरशुचिमिव' इत्यनेन पतिपत्न्यादिषु स्नेहादिविद्धत्वं ध्वन्यते । 'प्रबुद्धः सुप्तमिव' इत्यनेनाज्ञानाविद्धत्वं व्यज्यते । 'स्वैरगतिर्बद्धमिव' इत्यनेन प्रयत्नसहस्रानयने परवशवदत्वं ध्वन्यते । मालोपमेयम् । तेन पारतन्त्र्यलक्षणो भिन्नोऽत्रावगम्यः सामान्यधर्म । छेकवृत्त्यनुप्रासौ । 'स्नातोऽभ्यक्तमिव शुचिरशुचिमिव प्रबुद्धः सुप्तमिव स्वैरगति सयतमिव' इति पठित्वा प्रक्रमभङ्गद्वयं परिहरणीयम् । निमित्तमपशकुनम् । अम्महे इति निर्वेदे । 'अम्महे हर्षे' इति सूत्रे 'हीमाणहे विस्मयनिर्वेदयोः' इति सूत्रान्निर्वेद इत्यनुवर्तते । कि मे वामेतरं दक्षिणं नयनं विस्फुरति ? । **किं मे वामं दक्षिणं नयनम्'** इति पाठे वामं प्रतीपम् । विरोधाभास· ।

---

**पाठा०—१ 'शार्ङ्गरव, स्थाने खलु पुरप्रवेशात्तवेदृशः संवेगः । अहमपि'. २ '°जनमवशः संगिनमवैमि' ३ 'पुरोधाः—अत एव भवद्विधा महन्तः । शकुं०—'.**

---

**टिप्प०**–1 तथा चोक्तम्—'तैलाभ्यङ्गे चिताधूमे मैथुने क्षौरकर्मणि । तावद्भवति चाण्डालो यावत् स्नान समाचरेत् ॥' इति ।

**गौतमी**—जादे ! पडिहदं अमंगलं । सुहाइं[1] दे भत्तुकुलवदाओ वितरंदु ! [जाते ! प्रतिहतममङ्गलम् । सुखानि ते भर्तृकुलदेवता वितरन्तु ।] (इति परिक्रामति)

**पुरोहितः**—(राजानं निर्दिश्य) भो भोस्तपस्विनः ! असावत्रभवान् वर्णाश्रमाणां रक्षिता प्रागेव मुक्तासनो वः प्रतिपालयति । पश्यतैनम् ।

**शार्ङ्गरवः**—भो महाब्राह्मण ! काममेतदभिनन्दनीयं तथापि वयमत्र मध्यस्थाः । कुतः

**भवन्ति नम्रास्तरवः फलागमै-[2]**
**र्नवाम्बुभिर्दूरविलम्बिनो घनाः ।**
**अनुद्धताः सत्पुरुषाः समृद्धिभिः**
**स्वभाव एवैष परोपकारिणाम् ॥ १२ ॥**

---

जाते ! प्रतिहतममङ्गलम् । सुखानि ते भर्तु· कुलदेवता वितरन्तु । अत्रभवान्पूज्यो वर्णाश्रमाणा रक्षितेत्यनेन भवदादीनामस्मदादीना च सर्वदा पालनासक्तत्वम् । प्रागेव मुक्तासन इत्यनेन विनयातिशय । व प्रतिपालयतीति भक्त्यतिशयो व्यज्यते । महाब्राह्मणेति राजपुरोहितत्वात्तं प्रति मुनेरुक्तिरिति नानौचित्यम् । काममतिशयेनैतद्विनयातिशयत्वादिकमभिनन्दनीयं स्तुत्यं यद्यपि तथापि वयमत्र मध्यस्था निःस्पृहा, एतदस्माकं वर्णनीयं न भवतीति भाव· । वर्णनीयत्वाभावे च स्वाभाव्यं हेतुत्वेनोद्दिशति—**कुत इति । भवन्तीति** । तरवो वृक्षा· फलानामासमन्तादागमो गमनं प्राप्तिस्तै । अनेन समृद्धिकाष्ठा तेषा द्योतिता । नम्रा अधोमुखा विनीताश्च भवन्ति । अत्र 'तरु'शब्देन सामान्यविशेषभावसंबन्धेन चूतप्रभृतयो विशेषा लक्ष्यन्ते । तत्सजातीयबहुत्वप्रतिपत्तिश्च फलेषु वनस्पतिप्रभृतिषु । तदभावादर्थासगति· । किं च सत्पुरुषाणां विशिष्टानामेवोपमेयत्वात्तै· सहोपमानतापि न संगच्छते । तर्ह्युत्तरवाक्येऽप्येतद्दोषावकाश इति चेत्—न, मेघादिपदत्यागेन घनपदोपादानात् । तथा च व्याख्यास्यते । केचनैतादृशस्थले 'वाच्य एवार्थो न लक्षणा' इति मन्यन्ते । घना मेघा अथ च निबिडा । नवाम्बुभिरिति वर्षाकालारम्भो ध्वन्यते । तेषा तत्रैव समृद्धत्वाद्दूरविलम्बिनोऽतिशयवर्षुकाः । अथ च विनीता भवन्तीत्यनुषज्यते । अत्र तरुघनयोरचेतनयोर्नम्रत्वदूरविलम्बित्वाभ्या च वस्तुतो भिन्नाभ्यामभेदेनाध्यवसिताभ्यामतिशयोक्ति । सत्पुरुषा समृद्धिभिरनुद्धता नम्रा भवन्तीत्यनुपज्यते । तेन क्रियादीपकम् । विनयस्य

---

पाठा०—१ 'सुहाइं दे होंतु'. २ 'फलोद्गमै°'.

**प्रतीहारी**—देव! पसण्णमुहवण्णा[1] दीसंति । जाणामि विसद्धकज्जा इसीओ । [ देव ! प्रसन्नमुखवर्णा दृश्यन्ते । जानामि विश्रब्धकार्या ऋषयः । ]

**राजा**—( शकुन्तलां दृष्ट्वा ) अथात्रभवती,—

**का स्विदवगुण्ठनवती[1] नातिपरिस्फुटशरीरलावण्या ।**
**मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥ १३ ॥**

**प्रतीहारी**—देव[2]! कुतूहलगब्भोपहिदो ण मे तक्को पसरदि । णं दंसणीआ उण से आकिदी लक्खीअदि । [ देव ! कुतूहलगर्भोपहितो न मे तर्कः प्रसरति । ननु दर्शनीया पुनरस्या आकृतिर्लक्ष्यते । ]

---

साधारणधर्मस्य नम्रदूरविलम्ब्यनुद्धतशब्देनोक्तेर्माला प्रतिवस्तूपमा च । अत्र दुष्यन्तलक्षणे विशेषे प्रस्तुते सत्पुरुषस्य वचनादप्रस्तुतप्रशंसापि । स्वभाव इत्यादिस्तु 'हि'शब्दानुपादानेऽप्यर्थान्तरन्यास । 'क्व नासि शुभप्रद' इतिवत् । हेत्वनुप्रासौ च । वंशस्थं वृत्तम् । 'देव ! प्रसन्नमुखवर्णा दृश्यन्ते । जानामि विस्रब्ध शान्तमक्रूर कार्यं येषा ते तादृशा ऋषय । 'विस्रब्धस्तु दृढे व्यर्थे शान्तविश्वस्तयोरपि' इति विश्व । **का स्विदिति** । स्विदिति वितर्के । 'स्विदिति प्रश्ने वितर्के च' इत्युक्तेः । सशिरोमुखप्रावरणमवगुण्ठनं तद्वती । अत एव नातिपरिस्फुटे शरीरलावण्ये यस्याः सा । नञ्समास. । इदमनूद्यम् । तपोधनाना मध्ये का स्विदिति विधेयम् । अत एवैतन्मात्र उपमा । पाण्डुपत्राणा मध्ये किसलयं कोमलपल्लवमिवेति । अस्याश्च भिन्नलिङ्गत्वेऽपि कोमलत्वादे साधारणधर्मस्य गम्यत्वात्सहृदयमनोनुरञ्जकत्वमेव । हेत्वनुप्रासौ । ननु 'नातिपरिस्फुटे'त्यादौ शरीरमात्रग्रहणेऽप्युभयलाभ इति चेत्,—सत्यम्, स्यादेवं यदि निषेधमात्रे तात्पर्यं स्यात्किंत्वत्र विधौ तात्पर्यम् । अत एवातिपर्योरुपादानम्, तेनैषव्यक्ते इत्यर्थ. । अत्र चोभयग्रहणमन्तरेण विवक्षितार्थालाभात् । यत आद्यमात्रोपादाने द्वितीयाप्राप्तेः । द्वितीयमात्रग्रहणे कनकचम्पकाभतनुवर्णाप्तेः । लावण्यलक्षणं **सुधाकरे**—'मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु लावण्यं तदिहोच्यते' इति । एवंभूतैतदवलोकनेन स्थायिन्या रतेरनुसधानम् । देव ! कुतूहलेन गर्भे मध्य उपहितो युक्तो न मे तर्कः प्रसरति । त्वत्परिगृहीतेन पूर्वत्वेन कुतूहलगर्भत्वं

---

**पाठा०**—१ 'पसण्णमुहा सुत्थकप्पा विअ इसीओ दीसंति । राजा-अये,-केयमवगुंठन°  २ 'प्रती०—भट्टा, दंसणी आकिदी खु लक्खीअदि ।'.

---

**टिप्प०**—1 अनेन भर्तृश्वश्वादीना पुरतो वधूमुखावगुण्ठनस्य परिपाटीय कालिदाससमयादपि प्राचीनतरेति प्रतीयते ।

**राजा**—भवतु, अनिर्वर्णनीयं परकलत्रम् ।

**शकुन्तला**—(हस्तमुरसि कृत्वा, आत्मगतम्) हिअअ! किं एव्वं वेवसि? । अज्जउत्तस्स भावं ओहारिअ धीरं दाव होहि[1] । [हृदय! किमेवं वेपसे? । आर्यपुत्रस्य भावमवधार्य धीरं तावद्भव । ]

**पुरोहितः**—(पुरो गत्वा) एते विधिवदर्चितास्तपस्विनः । कश्चिदेषामुपाध्यायसंदेशः । तं देवः श्रोतुमर्हति ।

**राजा**—अवहितोऽस्मि ।

**ऋषयः**[2]—(हस्तानुद्यम्य) विजयस्व राजन्! ।

**राजा**—सर्वानभिवादये[3] ।

**ऋषयः**—इष्टेन युज्यस्व ।

**राजा**—अपि [4]निर्विघ्नतपसो मुनयः? ।

**ऋषयः**—

कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।
तमस्तपति घर्मांशौ कथमाविर्भविष्यति? ॥ १४ ॥

**राजा**—[5]अर्थवान्खलु मे राजशब्दः । अथ भगवाँल्लोकानुग्रहाय कुशली काश्यपः? ।

---

प्रभुसमक्षत्वात्तुल्यानातत्वं(?) चाप्रसरणे हेतुः । क्वचिद्गतपुस्तके 'कुतूहलगर्भोपहद' इत्यादिकः पाठः । क्वचित्पुस्तके तु नास्त्येवायं पाठः । ननु दर्शनीया सुन्दरा पुनरस्या आकृतिर्लक्ष्यते । भवत्विति निषेधे । 'अस्तु भवतु पूर्यत इति निषेधे' इत्युक्तेः । अनिर्वर्णनीयमद्रष्टव्यम् । हस्तमुरसि कृत्वेति स्वभावोक्तिः । हृदय! किमेवं वेपसे? । आर्यपुत्रस्य भावं चित्ताभिप्रायमवधार्य धीरं तावद्भव । **कुत इति** । त्वयि रक्षितरि सति कुतो धर्मक्रियाविघ्नः? । सर्वमेवैतद्विधेयम् । त्वं रक्षिता । त्वयि रक्षितरि सर्वे सन्त । तेषा क्रियामात्रविघ्नोऽपि न संभाव्यते, सुतरा धर्मक्रियाविघ्न इत्यर्थः । **तम इति** । घर्मांशौ सूर्य उदयाद्रिमारूढ एव तमोनाश, अपि तु तस्मिन्सुतरामाविर्भूते तदभाव इत्यर्थः । दृष्टान्तालंकार, हेत्वनुप्रासौ । अर्थवान् सप्रयोजन । तापयुक्तत्वादिति भावः । लोकानु-

---

**पाठा०**—१ 'भावाणुबंधं सुसरिअ धीरत्तणं दाव अवलंबसु'. २ 'शिष्यौ—स्वस्ति भवते'. ३ 'व.'. ४ निर्विघ्नं तपः ?'. ५ '(आत्मगतम्) सर्वथाऽर्थवान् खलु मे राजशब्दः (प्रकाशम्) अथ'.

**ऋषयः**—स्वाधीनकुशलाः [1]सिद्धिमन्तः । स भवन्तमनामयप्रश्नपूर्वकमिदमाह ।

**राजा**—किमाज्ञापयति भगवान् ? ।

**शार्ङ्गरवः**—यन्मिथः[1]समयादिमां मदीयां दुहितरं [2]भवानुपायंस्त तन्मया प्रीतिमता युवयोरनुज्ञातम् । कुतः

**त्वमर्हतां प्राग्रसरः स्मृतोऽसि [3]य-**
**च्छकुन्तला [4]मूर्तिमती च सत्क्रिया ।**
**समानयंस्तुल्यगुणं वधूवरं**
**चिरस्य वाच्यं न गतः प्रजापतिः ॥ १५ ॥**

तदिदानीमापन्नस[5]त्त्वा प्रतिगृह्यतां सह[2]धर्मचरणायेति ।

ग्रहाय जनानुग्रहाय, भुवनानुग्रहाय चेत्यर्थः । 'लोकस्तु भुवने जने' इत्यमरः । त्रिभुवनानुग्राहकत्वेन लोकोत्तरा तप सिद्धिर्ध्वनिता । तदभिप्रायेणैवोत्तरयन्ति—**स्वाधीनेति** । अनामयप्रश्नपूर्वकमिति तस्य क्षत्रियत्वात् । तदुक्तं **मनुसंहितायाम्**—(२।१२७) 'ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम् । वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च' इति । मिथ समयात्, गान्धर्वेण विवाहेनेत्यर्थः । उपायंस्त विवाहितवान् । 'उपाद्यमः स्वकरणे' (पा. १।३।५६ ) इत्यात्मनेपदम् । **त्वमिति** । यद्यस्मात्त्वमर्हता पूज्याना प्राग्रसरो मुख्यः स्मृतोऽसि, लोकैरिति शेषः । क्वचित् **'स्मृतोऽसि नः'** इति पाठः । सरतीति सरः । 'नन्दिग्रहिपचादिभ्यः' (पा. ३।१।१३४ ) इत्यत्र पचादेराकृतिगणत्वादच् । तत प्रकर्षेणाग्रे सरतीति प्राग्रसरः । सञ्ज्ञाया अभावात् 'हलदन्तात्' (पा ६।३।९) इत्यादिना लुङ् न । **'त्वमर्हतां प्राग्रहरः'** इति वा पाठः । 'पराध्यग्र्यप्राग्रसर' इत्याद्यमरः । यद्यस्माच्छकुन्तला मूर्तिमती शरीरधारिणी । सती पूज्या चासौ क्रिया च सत्क्रिया । इवेत्युत्प्रेक्षा । अनया चाखिलजनपूज्यत्वमस्या ध्वनितम् । अत एव तुल्यगुणत्वम् । तत्तस्मादित्यर्थेन तच्छब्देनान्वयः । **'न'** इति पाठे तूभावप्यार्थौ । तुल्यगुणं समानगुणं वधूवरं समानयन् सयोजयन् । चिरस्य चिरकालेन प्रजापतिर्वाच्यं निन्दा न गतो न प्राप्तः । 'वाच्यं वक्तव्यमित्येतौ प्रवर्तेते प्रतिपादने । वचोहे कुत्सिते हीने दूषणेऽभिधयोदिते' इति धरणिः ।

**पाठा०—१ '°समवायादिमां'. २ 'भवानुपयेमे तन्मया'. ३ 'नः'. ४ 'मूर्तिमतीव सत्क्रिया'. ५ '°सत्त्वेयं गृह्यतां'.**

**टिप्प०**–1 तथा चोक्तं-(उत्तर १।१) "लौकिकाना हि साधूनामर्थं वागनुवर्तते । ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति" इति । 2 'धर्मे चार्थे च कामे च त्वां नातिचरिष्यामि' इत्यादिवैवाहिकसंस्कारप्रतिपन्नवचनानुगुणमिति भाव ।

**गौतमी**—अज्ज[१] ! किंपि वत्तुकाम म्हि । ण मे वअणावसरो अत्थि । कहं[२]त्ति ।

**णावेक्खिओ गुरुअणो इमाइ[३] ण हु पुच्छिदो अ बंधुअणो ।**
**एक्कक्कमे व्व चरिए भणामि किं एक्कमेक्कस्स ॥ १६ ॥**

[ आर्य ! किमपि वक्तुकामास्मि । न मे वचनावसरोऽस्ति । कथमिति ।
नापेक्षितो गुरुजनोऽनया न खलु पृष्टश्च बन्धुजनः ।
परस्परस्मिन्नेव चरिते भणामि किमेकमेकस्य ॥ ]

**शकुन्तला**—( आत्मगतम्[४] ) किं णु खु अज्जउत्तो भणादि ? ।
[ किं नु खल्वार्यपुत्रो भणति ? । ]

**राजा**—किमिदमुपन्यस्तम् ? ।

**शकुन्तला**—( आत्मगतम् ) पावओ[५] खु वअणोवण्णासो ।
[ पावकः खलु वचनोपन्यासः । ]

**शाङ्गरवः**—कथमिदं[६] नाम ? भवन्त एव सुतरां लोकवृत्तान्तनिष्णाताः ।

---

चिरस्येति विभक्तिप्रतिरूपकमव्ययम् । 'चिरायचिररात्रायचिरस्याद्याश्चिरार्थका' इत्यमरः । अन्यत्र तु यत्र वधूवरं मेलयति तत्र तत्रातुल्यगुणम् । जगतीदमेवेति भावः । अत एव चिरस्येत्युक्तिः । प्रजापतिरिति साभिप्रायम् । समहेत्वनुप्रासाः । वंशस्थं वृत्तम् । 'स्मृतोऽसि सत्क्रियेव यन्मूर्तिमती शकुन्तला' इति पठित्वा क्रमलक्षणो दोषः परिहरणीयः । आपन्नसत्त्वा गर्भवती । 'आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी' इत्यमरः । 'धर्माचरणाय' इत्यनेन विधिवदूढत्वं व्यज्यते । आर्य ! किमपि वक्तुकामास्मि । न मे वचनावसरोऽस्तीति भविष्यदाक्षेपः । तस्यैवोपादानं कथमिति । [ **णावेक्खिओ इति** । ] नापेक्षितो गुरुजनोऽनया न खलु पृष्टश्च बन्धुजनः । क्वचित्पुस्तके **'इमाए तुए पुच्छिदो [ण] बंधुजणो'** इति पाठः । त्वया पृष्टो न बन्धुजन इत्यर्थः । उभयोरप्यपराधाविष्करणम् । एक्कक्कमे परस्परस्मिन् व्व एव चरिते भणामि किमेकमेकम् । परस्परानुरागेण भवद्भ्यामिदं विहितम् । तत्रैकः पर्यनुयोज्यो न भवतीति भावः । 'एक्कक्कमण्णोण्ण' इति देशी-

---

**पाठा०**—१ 'भद्दमुह, किंपि वत्तु°' २ 'कधिदुं ति । राजा-आर्ये, कथ्यताम् । गौतमी-'. ३ 'इमीअ ण तुमे वि पुच्छिआ बंधू । एक्कक्कमेण वरिए कीं भणउ एक्कमेक्कस्स'. ४ '( साशङ्कमाकुलमुपवर्ण्य )'. ५ 'हुं सावलेवो से व अणावक्खेवो' ६ 'किं नाम किमिदमुपन्यस्तमिति । ननु भवानेव ... निष्णातः ।'.

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशङ्कते ।
अतः समीपे परिणेतुरिष्यते
प्रियाप्रिया वा प्रमदा स्वबन्धुभिः ॥ १७ ॥

राजा—किं चात्रभवती मया परिणीतपूर्वा ? ।

शकुन्तला—( सविषादम्, आत्मगतम् ) हिअअ ! [1]संपदं दे आसङ्का । [ हृदय ! सांप्रतं त आशङ्का । ]

शार्ङ्गरवः—[2]

किं कृतकार्यद्वेषो धर्मं प्रति विमुखता कृतावज्ञा ? ।

कोश. । 'णव्वे अवि अव्वे अवधारणे' इति सूत्रेण व्वकारोऽवधारणे । एक्कस्सेति 'क्वचिद्द्वितीयादे' इति द्वितीयार्थे षष्ठी । गाथेयम् । तेन 'इमाए' इत्येकारस्य 'एओ सुद्धापआवसाणमि लहू' इति लघुत्वम् । कि नु खल्वार्यपुत्रो भणति ? । पावकोऽग्नि खलु वचनोपन्यास इति भिन्नरूपकम् । क्वचित् **'सावलेपः'** इति पाठ । निष्णाताः कुशलाः । 'निष्णात कुशलेऽपि च' इत्यजय । 'निनदीभ्यां स्नातेः कौशले' इति णत्वम् । **सतीमिति** । जनो लोको भर्तृमतीं विद्यमानधवां प्रमदा सतीं पतिव्रतामपि ज्ञातिकुलं पितृगृहं तत्संश्रयामथ च सगोत्रगणसंश्रयामन्यथा दोषयुक्तत्वेन विशङ्कते । अनौचित्यपरिहाराय कविना दोषादिपदत्यागेनान्यथापदं दत्तम् । 'ज्ञाति· सगोत्रे पितरि कुलं जनपदे गृहे । सजातीयगणो गोत्रः' इति च विश्वः । अत. कारणात्प्रियाप्रिया वा । अर्थाद्भर्तु । प्रमदा स्त्रीमात्रम् । अथ च प्रकृष्टो मदस्तारुण्यमदो यस्या सैतादृशी स्वबन्धुभिर्वधूबन्धुभि परिणेतु· समीप इष्यते । **'प्रियाप्रिया च'** इति समीचीन पाठ· । **'तदप्रियापि'** इति पाठे तस्य भर्तुरप्रिया । 'अपि'शब्दात् प्रियापीति व्याख्येयम् । अत्र शकुन्तलायास्त्वत्समीपे स्थितिर्योग्येति विशेषे प्रस्तुते यत्सामान्यवचनं तेनाप्रस्तुतप्रशंसा, हेत्वनुप्रासौ । वृत्तमनन्तरोक्तम् । अत्र स्त्रीसामान्ये वक्तव्ये यत् 'प्रमदा'इति विशेषवचनं तेन विशेषपरिवृत्तलक्षणं दूषणमिति चेत्—न; शब्दशक्त्युद्भावध्वने. सत्त्वात्तदभिप्रायेणैव व्याख्यातम् । अनेनार्थविशेषणनामा नाट्यालंकार उपक्षिप्त । तल्लक्षणं तु—'उक्तस्यार्थस्य यत्तु स्यादुत्कीर्तनमनेकधा । उपालम्भस्वरूपेण तत्स्यादर्थविशेषणम् ॥' इति । हृदय ! साप्रतं त आशङ्का । **किमिति** । कृतं यत्कार्यं गान्धर्वो विवाहस्तत्र द्वेषः किम् ? । धर्मं प्रति

---

**पाठा०**—१ 'संवुत्ता दे आसंका ।'. २ 'राजन्, किं कृतकार्यद्वेषाद्धर्मं प्रति विमुखतोचिता राज्ञः ॥ राजा–'.

**राजा**—कुतोऽयमसत्कल्पनाप्रश्नः ? ।

**शार्ङ्गरवः**—

मूर्च्छन्त्यमी[1] विकाराः प्रायेणैश्वर्यमत्तेषु[1] ॥ १८ ॥

**राजा**—विशेषेणाधिक्षिप्तोऽस्मि ।

**गौतमी**—जादे[2] मुहुत्तअं मा लज्ज । अवणइस्सं दाव दे ओउंठणं । तदो तुमं भट्टा अहिजाणिस्सदि । [जाते! मुहूर्तं मा लज्जस्व । अपनेष्यामि तावत्तेऽवगुण्ठनम् । ततस्त्वां भर्ताभिज्ञास्यति ।] (इति यथोक्तं करोति)

---

विमुखता किम् ? । कृते विदिनेऽनुभूतेऽवज्ञा किम् ? । यावदनुभूतं तावदेव तद्दुर्लभमिति भाव । 'कृतं युगेऽपि पर्याप्ते विहिते' इति विश्व । असत्कल्पनामुत्तरार्धेन निरस्यति—ऐश्वर्यमत्तेषु सपदुद्धतेषु प्रायेण बाहुल्येनामी विकारा उक्ता मूर्च्छन्ति वर्धन्ते । 'मुर्छा मोहसमुच्छ्राययो.' इति । आदिकारकदीपकसंशयहेत्वर्थान्तरन्यासानुप्रासा । अनेन तोटकं नामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'संरम्भवचनप्रायं तोटकं त्विह सञ्ज्ञितम्' इति । जाते पुत्रि ! मुहूर्तं मा लज्जस्व । अपनेष्यामि तावत्तेऽवगुण्ठनम् । ततस्त्वा भर्ताभिज्ञास्यति परिचेष्यति । यथोक्तमवगुण्ठनापनयनम् । इत आरभ्य षष्ठाङ्कसमाप्तिपर्यन्तमवमर्शसधिः । तल्लक्षणं तु **सुधाकरे**—'यत्र प्रलोभनक्रोधव्यसनाद्यैर्विमृश्यते । बीजादौ गर्भनिर्भिन्न. सोऽवमर्श इतीर्यते ॥' इति । अत्र शापलक्षणव्यसनेनावमर्श, यथा 'इदमुपनतम्' इत्यादि प्रकरीनियताप्त्यानुगुण्यादत्राङ्गकल्पना । 'अपवादोऽथसंफेटो विद्रवद्रवशक्तयः । द्युतिप्रसङ्गौ छलनं व्यवसायो निरोधनम् । प्ररोचनं विचलनमादानं च त्रयोदश ॥' इति । अत्राङ्गाना लक्षणं व्याख्यानावसरे तत्र तत्र वक्ष्याम । प्रकरीलक्षणं **भावप्रकाशिकायाम्**—'शोभायै वैदिकादीनां यथा पुष्पाक्षतादय. । अथर्तुवर्णनादिस्तु प्रसङ्गे प्रकरी भवेत् ॥' इति । यथात्रैव षष्ठेऽङ्के 'तत प्रविशति चूताङ्कुरम्–' इत्यादिना 'नेपथ्ये' इत्यन्तेन । अनेन तु 'फलं तु कल्प्यते यस्या. परार्थायैव केवलम् । अनुबन्धविहीनाना प्रकरी श्रूयते यथा ॥' इति लक्षणानुसारेण मातलिवृत्तान्तं प्रकरीवृत्तमाहु—तन्न; सधिसमाप्तिविषये तस्योद्देशादङ्गाना तदनुगामित्वं नायाति । नियताप्तिलक्षणमादि-**भरते**—'नियता तु फलप्राप्तिं यदा भावेन पश्यति । नियता तु फलप्राप्तिं

---

**पाठा०**–१ 'प्रायेणैश्वर्यमत्तानाम्'. २ 'जाद, मा लज्ज'.

---

**टिप्प०**–1 मूर्च्छंधातोर्वृद्ध्यर्थक प्रयोगो रघुवंशेऽपि (१२।५७) दृश्यते–'मुमूर्च्छ सख्यं रामस्य समानव्यसने हरौ' इति ।

**राजा**—(शकुन्तला निर्वर्ण्य आत्मगतम्)

**इदमुपनतमेवं रूपमक्लिष्टकान्ति**
**प्रथमपरिगृहीतं स्यान्न[1] वेति व्यवस्यन्।**
**भ्रमर इव [2]विभाते कुन्दमन्तस्तुषारं**
**न[3] च खलु परिभोक्तुं नैव शक्नोमि हातुम्[4] ॥ १९ ॥**

(इति विचारयन्स्थितः)

**प्रतीहारी**[5]—अहो धम्मावेक्खिआ भट्टिणो। ईदिसं णाम सुहोवणदं रूवं देक्खिअ को अण्णो विआरेदि?। [अहो धर्मावेक्षिता भर्तुः। ईदृशं नाम सुखोपनतं रूपं दृष्ट्वा कोऽन्यो विचारयति?।]

**शार्ङ्गरवः**—भो राजन्! [6]किमिति जोषमास्यते?।

**राजा**—[7]भोस्तपोधनाः! चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि। तत्कथमिमामभिव्यक्तसत्त्वलक्षणां प्रत्यात्मानं [8]क्षेत्रिणमाशङ्कमानः प्रतिपत्स्ये?।

---

सगुणः परिचक्षते' इति। निर्वर्ण्य दृष्ट्वा। **इदमिति।** एवमुपनतमयत्नप्राप्तम्। न क्लिष्टा कान्तिर्यस्य तत्। अनेन प्रथमं तारुण्यं ध्वनितम्। इदं रूपं प्रथमपरिगृहीतं स्यान्न वा स्यादिति व्यवस्यन्विचारयन्। **'अध्यवस्यन्'** इति पाठे स्वव्यवसायं न जानन्। खलु निश्चयेन। परिभोक्तुं न शक्नोमि निश्चयेन हातुं नैव शक्नोमीत्येवंप्रकारेण रतेरनुसंधानं ध्वनितम्। कः किमिव? विभाते प्रभाते भ्रमरः। अन्तस्तुषारो हिमं यस्य तादृक्कुन्दपुष्पमिव। उपरि हिमस्याच्छादकस्य शापस्थानीयत्वात्त्यागाभाव। ससंदेहोपमानुप्रासाः। अत्र 'विभाते' इत्युक्तेस्तदनन्तरं रविकिरणैर्हिमे नीते मकरन्दभोगोऽवश्यः। एवमिहाप्यभिज्ञानदर्शनेन शापे गते तत्स्वीकारोऽवश्यमिति द्योतयन्त्योपमया रते स्थायित्वदार्ढ्यं ध्वनितम्। मालिनी वृत्तम्। एतेन संशयनामकं भूषणमुपक्षिप्तम्। तल्लक्षणं तु—'अनिश्चयान्तं यद्वाक्यं संशयः स निगद्यते' इति। विचारयन्नित्युत्क्षिप्तैकभ्रूभावादिना। 'अहो' आश्चर्ये। धर्मापेक्षिता भर्तुः। ईदृशम्। 'नाम' प्राकाश्ये। प्रकटं सुखोपनतं रूपं दृष्ट्वा कोऽन्यो विचारयति?। जोषं तूष्णीम्। अभिव्यक्तसत्त्वलक्षणा प्रकटगर्भचिह्नाम्। क्षेत्रं पत्नी यस्यासौ क्षेत्री, तं क्षेत्रिणम्। 'क्षेत्रं पत्नीशरीरयोः' इत्यमरः। एतादृशमात्मानं शङ्कमानः। यत इयं गर्भिणी मया

---

**पाठा०**—१ 'वेत्यध्यवस्यन्'. २ 'निशान्ते'. ३ 'न खलु सपदि भोक्तुं'. ४ 'भोक्तुम् ॥'. ५ '(स्वगतम्)'. ६ 'किमिदं'. ७ 'भोस्तपस्विन्'. ८ 'क्षेत्रियमिव मन्यमानः'.

**शकुन्तला**—(अपवार्य) अज्जस्स परिणए एव्व संदेहो। कुदो दाणिं मे दूराहिरोहिणी आसा ?। [आर्यस्य परिणय एव संदेहः। कुत इदानीं मे दूराधिरोहिण्याशा ?।]

**शार्ङ्गरवः**—मा तावत्,—

**कृताभिमर्शामनुमन्यमानः**
**सुतां त्वया नाम मुनिर्विमान्यः।**
**मुष्टं प्रतिग्राहयता स्वमर्थं**
**पात्रीकृतो दस्युरिवासि येन ॥ २० ॥**

---

चेदधुना प्रतिगृह्येत तत्तदाऽह क्षेत्री स्या न तु बीजी। अत एतज्जातापत्यं नौरसमपि तु क्षेत्रजम्। तच्चौरसाद्धीनमिति शङ्का। अथ चान्येनोढायाः परिग्रहे मत्क्षेत्रत्वमेव स्यान्न तु धर्मपत्नीत्वमिति शङ्का। **'क्षेत्रियम्'** इति पाठे परदारासक्तम्। 'क्षेत्रियं क्षेत्रजतृणे परदाररतेऽपि च' इति विश्व·। कथमिमा प्रतिपत्स्येऽङ्गीकरिष्यामि ?। **अपवार्येति**। रहस्यं कथ्यतेऽन्यस्य परावृत्त्यापवारितम्' इति। आर्यस्य परिणय एव संदेहः। कुत इदानीं मे दूराधिरोहिण्याशा ? दूरमत्यर्थं तत्र गत्वा महिषीपदं प्राप्स्यामीत्याद्यधिरोढुं शीलं यस्या· सा। 'मा तावत्' इति श्लोकेन संबध्यते। **कृतेति**। त्वयेत्येवमपराधं कृत्वाप्यधुना स्मरणक्लेशाभाववतेत्यर्थान्तरसङ्क्रमितम्। कृतोऽभिमर्शो बलाद्धर्षणं यस्या· सा। अनेन सातिशयापराधकर्तृत्वं ध्वन्यते। ईदृशी सुतामनुमन्यमानोऽनुमोदमान इत्यनेनैवं सापराधेऽपि त्वयि मुनित्वेन तादृशकृपा युज्यत इति ध्वनितम्। अत एव मुनि। तावत्साकल्येन। 'नाम' इति क्रोधे। मा विमान्यो न विमाननीयः, अपि तु माननीय एव। सुताभिमर्शलक्षणोऽपराधः सोढः, विमाननालक्षणस्तु न सोढव्य इति दण्ड उक्त·। तेन सूक्ष्मालंकार उक्तः। केचित्तु निषेधमेव विधेयत्वेन मन्यन्ते,-तन्न समीचीनम्, निषेधनियोगस्य मध्यस्थेन राजकीयेन वा वक्तुमुचितत्वात् न मुनिपक्षीयै। अत एव निबर्हणान्ते 'राजा—अत खलु मम नातिक्रुद्धो मुनि' इति। अथ च तस्योचिता विमाननेत्याह—**मुष्टमिति**। स क· ? येन त्वं दस्युश्चौर इव पात्रीकृतोऽसि। कीदृशेनेव ? येन मुष्टं चोरितं स्वमर्थं प्रतिग्राहयता तदधीनं कारयता पुरुषेणेवेति विशेषणेनैव विशेष्यलाभ। यथा चौर्येणापहृतं द्रव्यं पुनस्तस्मा एवार्पणमगृह्णन्विमानना जन-

---

**पाठा०**—१ '(स्वगतम्) हद्धी, हद्धी कधं परिणए जेव संदेहो। भग्गा... आसालदा।'. २ 'कृतावमर्शामनु०'. ३ 'दुष्टं प्रतिग्राहयता'.

---

**टिप्प०**—1 शार्ङ्गरव-शारद्वतौ क्रमात् क्रोधन-शान्तधर्मिणौ दृश्येते तद्वचोभिः। एतयोरत्र कार्यसिद्धौ समुपक्लृप्तत्वात् कालिदासस्य व्यवहारनैपुण्यं सुस्फुट प्रतीयते।

**शारद्वतः**—शार्ङ्गरव ! विरम त्वमिदानीम्; शकुन्तले ! वक्तव्यमुक्तमस्माभिः। सोऽयमत्रभवानेवमाह। दीयतामस्मै प्रत्ययप्रतिवचनम्[1]।

**शकुन्तला**—(अपवार्य) इमं अवत्थंतरं गदे तारिसे अणुराए किं वा सुमराविदेण[2]। अत्ता[3] दाणिं मे सोअणीओ त्ति ववसिदं एदं। (प्रकाशम्) अज्जउत्त ! (इत्यर्धोक्ते-[1]) संसइदे[4] दाणिं ण एसो समुदाहारो। पोरव ! ण जुत्तं णाम दे तह पुरा अस्समपदे सहावुत्ताणहिअअं[5] इमं जणं समअपुव्व[6] पतारिअ ईदिसेहि अक्खरेहिं पच्चाचक्खिदुं। [इदमवस्थान्तरं गते तादृशेऽनुरागे किं वा स्मारितेन? । आत्मेदानीं मे शोचनीय इति व्यवसितमेतत्। आर्यपुत्र !-संशयित इदानीं नैष समुदाचारः। पौरव! न युक्तं नाम ते तथा पुराश्रमपदे स्वभावोत्तानहृदयमिमं जनं समयपूर्वं प्रतार्येदृशैरक्षरैः प्रत्याख्यातुम्।]

---

यति तथेत्यर्थः। क्वचित् **'मुष्टं स्वमर्थम्'** इति पाठ, तदा चोरितमित्यर्थः। एवमपराधिनः कन्यादानेन संतोषार्थं प्रवृत्तस्य स संतोषो नास्ति। परं विमाननालक्षणानर्थोत्पादाद्विषमालंकार। 'इव'शब्दो वाक्यार्थोपमाने। मन्यमान्येति स्युसिये इति छेकवृत्त्यनुप्रासौ च। तृतीयोपजातिरिन्द्रवज्रोपेन्द्रवज्रयो। प्रत्ययजनकं विश्वासजनकं प्रतिवचनमुत्तरम्। मध्यमपदलोपी समास। इदमवस्थान्तरं गते तादृशेऽनुरागे कि वा स्मारितेन? । आत्मेदानीं ते शोचनीय इति व्यवसितमेतत्। आर्यपुत्र इत्यर्धोक्ते–संशयित इदानी नैष समुदाचारः। पौरवेति राजवंश उत्पन्नो राजेत्यत्यन्तवचनचातुरी धत्ते। न युक्तम्। 'नाम' इति कुत्सायाम्। 'नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने' इत्यमरः। तथा पुराश्रमपदे 'स्वभावोत्तानहृदयम्' इत्यनेनात्मनोऽतिमुग्धत्व तेन च परवञ्चनानभिज्ञत्वं परात्मजनविवेकशून्यत्वं ध्वनितम्। इमं जनं समयपूर्वं संकेतपूर्वम्, गान्धर्वेण विवाहेनेत्यर्थः। 'गान्धर्वः समयान्मिथः' (याज्ञ० १।६१) इति स्मरणात्। अथ च समयपूर्वं शपथं कृतवानसीत्यर्थः। अथ च समयपूर्वं कालनियमपूर्वं त्रिचतुरदिनमध्ये पञ्चदिनमध्ये वा पुरुषः प्रेष्यत इति प्रकारेण। अत एव वक्ष्यति (६।१२)—'एकैकमत्र दिवसे

---

**पाठा०**—१ 'प्रतिवचनम्।'. २ '(स्वगतम्)'. ३ 'अप्पा दाणिं मे भोदु; ववसिस्सं'. ४ 'अध वा संसइदो दाणिं एसो'. ५ 'सब्भावुत्ताणहिअअं'. ६ 'संभाविअ संपदं ईदिसेहिं'.

---

**टिप्प०**—1 पति-पत्नीसम्बन्धस्य दुष्यन्तेनास्वीकारात् "पौरव" इति समयानुगुणः नृपेति साधारणशब्दोपयोगः शकुन्तलयात्र कृतोऽस्ति।

**राजा**—( कर्णौ पिधाय ) शान्तं पापम् ।

व्यपदेशमाविलयितुं [1]किमीहसे जनमिमं च पातयितुम् ? ।
कूलङ्कषेव सिन्धुः प्रसन्न[2]मम्भस्तटतरुं च ॥ २१ ॥

**शकुन्तला**—होदु, जइ परमत्थतो परपरिग्गहसंकिणा [3]तुए एव्वं वत्तुं पउत्तं ता अहिण्णाणेण इमिणा तुह आसंकं अवणइस्सं । [ भवतु; यदि परमार्थतः परपरिग्रहशङ्किना त्वयैवं वक्तुं प्रवृत्तं तदभिज्ञानेनानेन तवाशङ्कामपनेष्यामि । ]

**राजा**—[4]उदारः कल्पः ।

**शकुन्तला**—( मुद्रास्थानं परामृश्य ) हद्धी, अंगुलीअ[1]असुण्णा मे अंगुली । [ हा धिक्, अङ्गुलीयकशून्या मेऽङ्गुलिः । ] ( इति सविषादं गौतमीमवेक्षते )

**गौतमी**—[5]णूणं दे सक्कावदारब्भंतरे सचीतित्थसलिलं वंदमाणाए पब्भट्टं अंगुलीअं । [ नूनं ते शक्रावताराभ्यन्तरे शचीतीर्थसलिलं वन्दमानायाः प्रभ्रष्टमङ्गुलीयकम् । ]

**राजा**—( सस्मितम् ) इदं तत्प्रत्युत्पन्नमति [6]स्त्रैणमिति यदुच्यते ।

---

दिवसे मदीयं नामाक्षर गणय गच्छसि यावदन्तम् । तावत्प्रिये मदवरोधगृहप्रवेशं नेता जनस्तव समीपमुपैष्यतीति ॥' इति । अथ च समयपूर्वं ज्ञानपूर्वं प्रतार्य । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । ईदृशैरतिक्रूरैर्हृदयविदारकैरक्षरैः प्रत्याख्यातु न युक्तमिति संबन्धः । इदं प्रत्याख्यानं वाङ्मात्रेण, न तत्त्वतोऽग्रे परिग्रहस्य वक्ष्यमाणत्वादिति रतेरनुसधायकत्वेरक्षरैरित्युक्तिः । **व्यपदेशमिति** । व्यपदिश्यतेऽनेनेति व्यपदेशः । कुलमाविलयितुं मलिनीकर्तुमिमं जन मल्लक्षणं पातयितुं च पतितं कर्तुं किमीहसे चेष्टसे ? । त्वं त्विहागमनेनैव पतितासीति णिचा ध्वन्यते । कूलंकषा तटसंघर्षिणी सिन्धुर्नदी प्रसन्नमम्भो यथा कलुषयति तटतरुं च पातयति तद्वदित्युपमा । अत्र भिन्ने अपि गुणक्रिये अतिशयोक्त्याभेदेनाध्यवसिते । अत्रोपमेये प्रकृतमन्तर्वर्ति विशेषणम् । अस्त्वेवेत्युपमाने कूलंकषेति विशेषणम् । पूर्वार्धे गुणक्रिययो समुच्चयः । दोषप्रसख्यापनया-

---

**पाठा०**—१ 'समीहसे मां च पातयितुम् ।'. २ 'प्रसन्नमोघ तट°'. ३ 'तए एव्वं पउत्तं तुह संदेहं अवणइस्सं ।'. ४ 'प्रथमः कल्प ।'. ५ 'णं दे सक्कावदारे सचीतित्थे उदअं वंदमाणाए'. ६ 'स्त्रीणाम् । शकुं०—एत्थ'.

---

**टिप्प०**—1 दुष्यन्तेनाङ्गुलीयकदान कृतमिति चतुर्थेऽङ्के यद्यपि न लभ्यते, तथाप्यग्रिम ( अ ६।१२ ) श्लोकेन तत्स्फुटीकृतं दृश्यते ।

**शकुन्तला**—एत्थ दाव विहिणा दंसिदं पहुत्तणं। अवरं दे कहिस्सं[1]। [अत्र तावद्विधिना दर्शितं प्रभुत्वम्। अपरं ते कथयिष्यामि।]

**राजा**—श्रोतव्यमिदानीं संवृत्तम्।

**शकुन्तला**—णं एक्कस्सिं[2] दिअहे णोमालिआमंडवे णलिणीपत्तभाअणगअं उअअं तुह हत्थे संणिहिदं आसि। [नन्वेकस्मिन्दिवसे नवमालिकामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते संनिहितमासीत्।]

**राजा**—श्रृणुमस्तावत्।

**शकुन्तला**—तक्खणं सो मे पुत्तकिदओ दीहापंगो णाम [3]मिअपोदओ उवट्ठिओ। तुए[4] अअं दाव पढमं पिअउ त्ति अणुअंपिणा उवच्छंदिदो उअएण। ण उण दे [5]अपरिचआदो हत्थब्भासं उवगदो। पच्छा तस्सिं एव्व मए गहिघे सलिले णेण [6]किदो पणओ। तदा तुमं पहसिदो सि एत्थं[7]—सब्बो सगंधेसु विस्ससिदि दुवेवि एत्थ आरण्णआ[8]—त्ति। [तत्क्षणे स मे पुत्रकृतको दीर्घापाङ्गो नाम मृगपोतक उपस्थितः। त्वयायं तावत्प्रथमं पिबत्वित्यनुकम्पिनोपच्छन्दित उदकेन। न पुनस्तेऽपरिचयाद्धस्ताभ्याशमुपगतः। पश्चात्तस्मिन्नेव मया गृहीते सलिलेऽनेन कृतः प्रणयः। तदा त्वमित्थं प्रहसितोऽसि—सर्वः सगन्धेषु विश्वसिति। द्वावप्यत्रारण्यकौ—इति।]

---

दपवादस्तु स स्मृतः' इति। भवतु पूर्यताम्, अनेन दोषप्रख्यापनेनेत्यर्थः। यदि परमार्थत. परपरिग्रहशङ्किना त्वयैवं वक्तुं प्रवृत्तम्, ता तर्ह्यभिज्ञानेन मुद्रिकारूपचिह्नेन तवाशङ्कामपनेष्यामि। उदारः कल्पो मुख्यो न्याय। 'कल्प स्यात्प्रत्यये न्याये' इति विश्व। महाविश्वासो वा। हा धिक्! अङ्गुलीयकशून्या मेऽङ्गुलिः। नूनं ते शक्रावताराभ्यन्तरे शचीतीर्थसलिलं वन्दमानायाः प्रभ्रष्टमङ्गुलीयकम्। प्रत्युत्पन्नमति स्त्रैणं स्त्रीसमूह इति यज्जगति प्रसिद्धं तदिद परिदृश्यमानम्। 'तात्कालिकी तु प्रतिभा प्रत्युत्पन्नमतिः स्मृता' इति प्रत्युत्पन्नलक्षणं **सुधाकरे**। अत्र तावद्विधिना दर्शितं प्रभुत्वम्। अपरं ते कथयिष्यामि। श्रोतव्यमिदानीं संवृत्तमिति भवतीभिः कल्पनासहस्रं विधायालीकवचनोपन्यासः

---

**पाठा०**—१ 'कधइस्सं'. २ 'एक्कदिअसं वेदसलदामंडवे'. ३ 'मिअसावओ उवत्थिदो'. ४ 'तदो तए'. ५ 'अवरिचिदस्स हत्थादो उदअं...पादुं।'. ६ 'किदो तेण पणओ'. ७ 'एत्थंतरे विहसिअ भणिदं तए। सव्वं सव्वो'. ८ 'तुम्हे आरण्ण°'.

**राजा**—एवमादिभिरात्मकार्यनिर्वर्तिनीनामनृतमयवाङ्मधुभिराकृष्यन्ते विषयिणः ।

**गौतमी**—महाभाअ ! ण अरुहसि एव्वं मंतिदुं । तवोवणसंवड्ढिदो अणभिण्णो अअं जणो कैइदवस्स । [महाभाग ! नार्हस्येवं मन्त्रयितुम् । तपोवनसंवर्धितोऽनभिज्ञोऽयं जनः कैतवस्य ।]

**राजा**—तापसवृद्धे !

**स्त्रीणामशिक्षितपटुत्वममानुषीषु**
**संदृश्यते किमुत याः प्रतिबोधवत्यः ।**
**प्रागन्तरिक्षगमनात् स्वमपत्यजात-**
**मन्यैर्द्विजैः परभृताः खलु पोषयन्ति ॥ २२ ॥**

---

कर्तव्यः । स चेन्मया न श्रोतव्यो ममाश्रवणापराध एव स्यादिति प्रयोजनाभावेऽपि श्रवणमात्रे विधिरिति 'सवृत्त'पदद्योत्यम् । नन्वेकस्मिन्दिवसे नवमालिकामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते सनिहितमासीत् । तत्क्षणे स मे पुत्रकृतको दीर्घापाङ्गो नाम मृगपोतक उपस्थित । त्वयायं तावत्प्रथमं पिबत्वित्यनुकम्पिनोपच्छन्दितोऽभ्यर्थित उदकेन । न पुनस्तेऽपरिचयाद्धस्ताभ्याशमुपगत । पश्चात्तस्मिन्नेव मया गृहीते सलिलेऽनेन कृतः प्रणय' प्रीति । तदा त्वमित्थं प्रहसितोऽसि । सर्वः सगन्धेषु स्वयूथ्येषु विश्वसिति । द्वावप्यत्रारण्यकाविति । आत्मकार्यस्य निर्वर्तिनीना सपादिकाना ललनानाम् । विशेषणादेव विशेष्यप्रतिपत्तेः । अत्रानृतमयवाङ्मधुभिरित्येकदेशविवर्ति रूपकम् । तेन तासा लतात्वं विषयिणा कामुकाना भ्रमरत्वं रूप्यत इति ज्ञेयम् । महाभाग ! नार्हस्येवं मन्त्रयितुं वक्तुम् । तपोवनसवर्धितोऽनभिज्ञोऽयं जन' कैतवस्य । **स्त्रीणामिति** । स्त्रीणा मध्येऽमानुषीषु मानुषव्यतिरिक्तासु । वञ्चकवागादिव्यवहाररहितास्वपीति भावः । तास्वप्यशिक्षितपटुत्वमनुपदिष्टकौशलम् । अर्थाद्वञ्चने सम्यग्दृश्यते । तेनैतिह्यभ्रान्तिज्ञाननिरासः । याः प्रतिबोधवत्यो वागादिव्यवहारकुशलास्ताः किमु वक्तव्याः ? तासामनुपदिष्टवञ्चकत्वकौशलं किमु वक्तव्यमित्यर्थः । खलु ह्यर्थे । परभृता इति साभिप्रायम् । कोकिलाः । 'वनप्रियः परभृत ' इत्यमरः । अन्तरिक्षगमनादाकाशगमनादुड्डयनात्प्राक्स्वं स्वीयमपत्यजातमर्भकसमूहम् । 'जातं जात्यौघ-

---

**पाठा०**–१ 'आभिस्ताभिरात्म°'. २ '°रनृतवाग्भिराकृष्यन्ते'. ३ 'णारिहसि'. ४ 'खु अअं.' ५ 'केदवस्स'. ६ '°मन्यद्विजै'.

---

**टिप्प०**–1 अनन्यसाध्यं वक्रोक्तिपटुत्वमत्र कुविकुलगुरोर्दृश्यते । श्लोकार्धमिद' मेनकया शकुन्तलाया वने त्याग , महर्षिणा कण्वेन तस्या· सवर्धनमित्यादिप्राग्वृत्तस्य वस्तुनो वक्रोक्त्या ख्यापयति कालिदास· ।

**शकुन्तला**—(सरोषम्) अणज्ज[1] ! अत्तणो[2] हिअआणुमाणेण पेक्खसि । को[3] दाणिं अण्णो धम्मकंचुअप्पवेसिणो तिणच्छण्णकूवोवमस्स तव अणुकिदिं पडिवदिस्सदि ? । [अनार्य ! आत्मनो हृदयानुमानेन पश्यसि । क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते ? ।]

**राजा**—(आत्मगतम्) संदिग्धबुद्धिं मां कुर्वन्नकैतव इवास्याः कोपो लक्ष्यते । तथा ह्यनया,—

**मय्येव विस्मरणदारुणचित्तवृत्तौ**
**वृत्तं रहः प्रणयमप्रतिपद्यमाने ।**
**भेदाद्भ्रुवोः कुटिलयोरतिलोहिताक्ष्या**
**भग्नं शरासनमिवातिरुषा स्मरस्य ॥ २३ ॥**

(प्रकाशम्) भद्रे ! प्रथितं दुष्यन्तस्य चरितम् । तथापीदं न लक्षये ।

---

जन्मसु' इति विश्वः । अन्यैर्द्विजैः पक्षिभिः प्रसिद्ध्या काकैः परभृताः परितः सर्वप्रकारेण पोषयन्ति । अत्र शकुन्तलालक्षणे विशेषे प्रस्तुते स्त्रीसामान्यस्योक्तत्वादप्रस्तुतप्रशंसा । किमुतेत्यनेन व्यतिरेकः । अर्थान्तरन्यासोऽपि । त या त्वः इति मना मन्यैरिति छेकवृत्त्यनुप्रासाः । अनेन हेत्ववधारणनामकं सध्यन्तराङ्गमुपक्षिप्तम् । तल्लक्षणं तु **रसार्णवसुधाकरे**—'निश्चयो हेतुनार्थस्य मतं हेत्ववधारणम्' । इति अत्र परभृतादिदृष्टान्तेन स्त्रीत्वेन हेतुना मृषाभाषणलक्षणस्यार्थस्य निश्चयाद्धेत्ववधारणम् । अनार्य ! आत्मनो हृदयानुमानेन पश्यसि जानासि । यथा तव हृदयं वञ्चनापरं तथान्यहृदयान्यपि जानासीत्यर्थः । क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते ? कोऽन्य इति सबन्धः । **मयीति** । अतिरुषाधिकक्रोधयाधिकक्रोधेन वात एवातिलोहिताक्ष्याऽत्यारक्तनयनया । विगतं स्मरणं यस्य तदत एव दारुणं यच्चित्तं तेन वृत्तिर्वर्तनं यस्य तस्मि

---

**पाठा०**—१ 'किल सव्वं एदं पेक्खसि ।'. २ 'णाम अण्णो'. ३ '°कंचुअववदेसिणो तण°'. ४ 'वनवासादविभ्रमः पुनरत्रभवत्याः कोपो'. ५ 'तथा हि—न तिर्यगवलोकितं भवति चक्षुरालोहितं वचोऽपि परुषाक्षरं न च पदेषु संसज्जते । हिमार्त इव वेपते सकल एष बिम्बाधरः स्वभावविनते भ्रुवौ युगपदेव भेदं गते ॥ अथवा सदिग्ध°' ६ 'नापीदं दृश्यते ।'

---

**टिप्प०**— 1 राज्ञ 'आत्मकार्यनिर्वर्तिनीनामनृतमयवाङ्मधुभिराकृष्यन्ते विषयिणः' इत आरभ्य 'प्रागन्तरिक्षगमनात्स्वमपत्यजातमन्यैर्द्विजैः परभृताः खलु पोषयन्ति' इति द्व्यर्थकवचोभिर्मेनकाया निर्देशो दुष्यन्तेन कृत इति जनन्यपमानोद्विग्नया शकुन्तलया 'अनार्य' इत्युक्तिः ।

शकुन्तला—सुट्ठु दाव अत्त सच्छंदचारिणी किदम्हि । जा अहं इमस्स पुरुवंसप्पच्चएण मुहमहुणो हिअअट्ठिअविसस्स हत्थब्भासं उवगदा । [सुष्ठु तावदत्र स्वच्छन्दचारिणी कृतास्मि, याहमस्य पुरुवंशप्रत्ययेन मुखमधोर्हृदयस्थितविषस्य हस्ताभ्याशमुपगता ।] (इति पटान्तेन मुखमावृत्य रोदिति ।)

शार्ङ्गरवः—इत्थमात्मकृतं प्रतिहतं चापलं दहति ।

**अतः परीक्ष्य कर्तव्यं विशेषात्संगतं रहः ।**
**अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥ २४ ॥**

राजा—अयि भोः ! किमत्रभवतीप्रत्ययादेवास्मान्संयुतदोषाक्षरैः क्षिणुथ ? ।

शार्ङ्गरवः—(सासूयम्) श्रुतं भवद्भिरधरोत्तरम् ।

---

त एव रह एकान्ते वृत्तं सपद्मं प्रणयं स्नेहमप्रतिपद्यमानेऽजानाने । मय्येवेत्येवकारेण कोपस्य तात्त्विकत्वं ध्वनितम् । कुटिलयोर्वक्रयोर्भ्रुवोर्भेदाद्भ्रूभङ्गात्स्मरस्य दर्पस्य शरासनं धनुर्भग्नमिवेत्युत्प्रेक्षा । अनया च तथास्याः कोपो यथोपायशतैरप्यनुनीयमाना कोपं न मुञ्चेत्, तावत्कामस्य शरासनं भग्नमेव व्यर्थत्वमेतदनुनयाभावादिति तात्त्विकः कोप इति वस्तु ध्वन्यते । अनेन च स्थायिन्या रतेरनुसंधानम् । काव्यलिङ्गम् । रणरणेति वृत्तौ वृत्तमिति प्रप्रेति स्मरस्येति च्छेकानुप्रासो वृत्त्यनुप्रासश्च । वृत्तं तयोर्वसन्ततिलकम् । 'शकुन्तला—सरोषम्' इत्यादिनैतदन्तेन सफेटं नामाङ्गमुपक्षिप्तम् । तल्लक्षणम्—'रोषग्रथितवाक्यं तु सफेटः परिकीर्तितः' इति । इदं वञ्चकत्वम् । सुष्ठु तावदत्र स्वच्छन्दचारिणी कृतास्मि । याहमस्य पुरुवंशे प्रत्ययो विश्वासस्तेन मुखमधोर्हृदयस्थितविषस्य । तत्र खत्वं द्योतयितुं स्थितपदम् । विषस्येत्यनेन कापट्यनिगरणादतिशयोक्तिः । हस्ताभ्याशं करसमीपमुपगता । विशेषणद्वयेनातिखलस्वभावत्वं ध्वनितम् । आत्मकृतं चापलं कदाचिद्दैवानुकूल्येन सम्यक्तया परिणमति । प्रतिहतं केनचिद्विरुद्धं सद्दहति । **अत इति** । अतः कारणात्संगतं मैत्र्यं परीक्ष्य कर्तव्यम् । रह एकान्ते संगतं विशेषात्परीक्ष्य कर्तव्यमित्यनुषज्यते । अत्र शकुन्तला-दुष्यन्तयोः संगतस्य कर्तव्ये विशेषे प्रस्तुते यत्सामान्यसंगतमात्रस्याप्रस्तुतस्य वचनं साऽप्रस्तुतप्रशंसा । अज्ञातहृदयेषु व्यवहारादिनाज्ञातचित्तेषु सौहृदं मैत्री वैरी भवति । अयं वैधर्म्येणार्थान्तरन्यासः । अत्रभवतीप्रत्ययात् पूज्याविश्वासात् । भवद्भिरियं पूज्यैव,

---

**पाठा०—१ 'हिअअपत्थरस्स'. २ 'इत्थमप्रतिहतं'. ३ 'समीक्ष्य'. ४ 'संभृतदोषैरधिक्षिपथ ।'; 'संवृतदोषाक्षरेण क्षिणुथ'.**

आ जन्मनः शाठ्यमशिक्षितो य-
स्तस्याप्रमाणं वचनं जनस्य।
परातिसंधानमधीयते यै-
र्विद्येति ते सन्तु किलाप्तवाचः ॥ २५ ॥

**राजा**—भोः सत्यवादिन्! अभ्युपगतं तावदस्माभिरेवम्[1]। किं पुनरिमामतिसंधाय[2] लभ्यते?।

**शार्ङ्गरवः**—विनिपातः।

**राजा**—विनिपातः [3]पौरवैः प्रार्थ्यत इति न श्रद्धेयम्।

**शारद्वतः**—[4]शार्ङ्गरव! किमुत्तरेण?। अनुष्ठितो गुरोः संदेशः। प्रतिनिवर्तामहे वयम्। (राजानं प्रति)—

---

तद्वचनविश्वासादित्यर्थ। एवकारेण युक्त्यन्तरनिरासः। अस्मानिति पुरुवंशोत्पन्नान्सर्वधर्मनिष्ठानिन्द्रादिभिरप्युपचारेण गृहीतानित्यादिधर्मशत व्यनक्ति। सम्यक् न त्वीषत्। युतः सपृक्तः, न तु स्पृष्टो दोषो येषु तान्यक्षराणि येषु वचनेषु तैर्वचनैरिति विशेष्यमुन्नेयम्। क्षिणुथ हिंस्थ। अधरं हीन च तदुत्तरं चाधरोत्तरम्। स्वदोषाज्ञानादिति भावः। 'अधरमधस्तात्प्रथममिदमुत्तरमूर्ध्वं न किंचिदिष्यती'ति (?) न ज्ञायत इति भावः। 'अधरो दन्तवसनेऽनूर्ध्वे हीनेऽधरोऽन्यवत्' इति विश्वः। **आ जन्मन इति**। यो जन आ जन्मनो जन्मन आरभ्य शाठ्यं धौर्त्यमशिक्षित, स्वेनान्येन वेत्यर्थ.। तस्य जनस्य वचनमप्रमाणम्। यैर्जनैः परातिसंधानं परवञ्चनं विद्येति विद्यारूपत्वेन। यथा विद्या सद्गुरो सत्सप्रदायात्सुदिने मङ्गलपूर्वकमनध्यायनिवृत्तिपूर्वकं नियतात्मभिस्तद्वदियमप्यधीयते न तु शिक्ष्यते। त आप्तवाच सत्यवचना। किलेति सभावनायाम्। 'किलशब्दस्तु वार्ताया सभाव्यानुनयार्थयो.' इति विश्वः। अत्र शकुन्तलावचनं, सत्यं दुष्यन्तवचनमसत्यमिति विशेषे प्रस्तुते यत्सामान्यवचनं सा वैधर्म्येणाप्रस्तुतप्रशंसा। अथवाप्रमाणमपि तु न, त आप्तवाचोऽपि तु नेति काकौ साधर्म्येणैवाप्रस्तुतप्रशंसा। रूपकानुप्रासौ च। चतुर्थ्युपजातिः। 'शकुन्तला—सुट्ठु दाव' इत्यादेतदन्तेन द्रवो नामाङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'गुरुव्यतिक्रमो यस्तु विज्ञेयोऽथ द्रवस्तु सः' इति। सत्यवादिन्निति सोल्लुण्ठम्। अतिसंधाय वञ्चयित्वा।

---

**पाठा०–१ '०रेवंविधा एव वयम्।'. २ '०मभिसंधाय'. ३ 'पौरवैर्लभ्यत इत्यश्रद्धेयमेतत्।'. ४ 'भो राजन्, किमत्रोत्तरोत्तरैः। अनुष्ठितो गुरुनियोगः। संप्रति निवर्तामहे वयम्।'.**

तदेषा भवतः[1] कान्ता त्यज वैनां गृहाण वा ।
उपपन्ना[2] हि दारेषु प्रभुता सर्वतोमुखी ॥ २६ ॥

गौतमि ! गच्छाग्रतः ।

( इति प्रस्थिता. )

**शकुन्तला**—कहं[3] इमिणा किदवेण विप्पलद्ध म्हि ! । तुम्हे वि मं परिच्चअह ? । [कथमनेन कितवेन विप्रलब्धास्मि ? । यूयमपि मां परित्यजथ ? । ] ( इत्यनुप्रतिष्ठते )

**गौतमी**—( स्थित्वा ) वच्छ संगरव ! अणुगच्छदि इअं खु णो करुणपरिदेविणी सउंदला । पच्चादेसपरुसे[4] भत्तुणि किं वा मे पुत्तिआ करेदु ? । [वत्स शार्ङ्गरव ! अनुगच्छतीयं खलु नः करुणपरिदेविनी शकुन्तला । प्रत्यादेशपरुषे भर्तरि किं वा मे पुत्रिका करोतु ? । ]

**शार्ङ्गरवः**—( सरोषं निवृत्य )[5] किं पुरोभागे ! स्वातन्त्र्यमवलम्बसे ?

( शकुन्तला भीता वेपते )

**शार्ङ्गरवः**—शकुन्तले !

यदि यथा वदति क्षितिपस्तथा
त्वमसि किं पितुरुत्कुलया त्वया ।
अथ तु वेत्सि शुचि व्रतमात्मनः
पतिकुले[6] तव दास्यमपि क्षमम् ॥ २७ ॥

तिष्ठ; साधयामो वयम् ।

---

'राजा—भोः सत्यवादिन्' इत्यादिना 'न श्रद्धेयम्' इत्यन्तेनाक्षमा नाम नाट्यालंकारो निबद्ध. । तल्लक्षणम्—'अक्षमा सा परिभव. स्वल्पोऽपि न विषह्यते' इति । **तदिति** । 'तत्' इत्युपसहारे । एषा भवत कान्ता । एनां त्यज वा गृहाण वा । अर्थान्तरन्यासमाह—**उपेति** । सर्वतोमुखी त्यागे ताडने स्वीकारे दान इत्यादि । तेन त्वं यथेच्छं कुर्विति भावः । कथमनेन किनवेन धूर्तेन विप्रलब्धास्मि ? यूयमपि मा परित्यजथ ? । तत्कथमिति सबन्धः । वत्स शार्ङ्गरव ! अनुगच्छतीयं खलु नोऽस्मान् करुणपरिदेविनी शकुन्तला । प्रत्यादेशपरुषे निराकृतिनिष्ठुरे । 'प्रत्यादेशो निराकृति ' इत्यमर । भर्तरि कि वा मे पुत्रिका करोतु ? । पुरोभागे दोषदर्शिनि । 'दोषैकदृक् पुरोभागी' इत्यमरः । **यदीति** ।

---

**पाठा०**—१ 'भवतः पत्नी'. २ 'उपयन्तुर्हि दारेषु' । ३ 'अहं इमिणा दाव किदवेण'. ४ '०पिसुणे भत्तारे किं करेदु तवस्सिणी ।'. ५ 'आः पुरोभागिनि, किमिदं स्वातन्त्र्य०'. ६ 'पतिगृहे'.

**राजा**—भोस्तपस्विन्! किमत्रभवतीं विप्रलभसे?।

**कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव।**
**वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः॥ २८॥**

**शार्ङ्गरवः**—यदा तु पूर्ववृत्तमन्यसङ्गाद्विस्मृतो भवांस्तदा कथमधर्मभीरुः?।

**राजा**—(पुरोहितं प्रति) भवन्तमेवात्र गुरुलाघवं पृच्छामि।

---

क्षितिपो राजा यथा वदति तथा त्वमसि, तदा उत्कुलयातिक्रान्तकुलमर्यादया त्वया पितु कि प्रयोजनमित्यर्थ। तु पूर्वतो व्यतिरेके। अथात्मनः शुचि पवित्रं व्रतं नियम वेत्सि यदि तदा प्रतिकुले भर्तृगृहे नव दास्यमपि क्षमं समीचीनम्। हेत्वनुप्रासौ। द्रुतविलम्बितं वृत्तम्। **कुमुदानीति**। नापराणीत्युभयत्रैवकारार्थः। हि निश्चितं वशिना जितेन्द्रियाणा वृत्तिर्वर्तनं परस्यान्यस्य परिग्रह आयातं वस्तु कलत्रं च तस्याश्लेषः संपर्कस्तस्मात्सम्यगतिशयेन पराङ्मुखी निवर्तनशीला। परकलत्रपराङ्मुखत्व नापि तु तत्संपर्कपराङ्मुखत्वम्, तदपि तन्मात्रं नापि तु सम्यगिति। तेन सम्शब्द पराङ्मुखविशेषणतया योज्यः। 'परिग्रहः परिजने पत्न्याम्' इति विश्व। अत्र दुष्यन्तशकुन्तलानङ्गीकारे विशेषे प्रस्तुते सामान्यवचनेनाप्रस्तुतप्रशंसा। पूर्वार्धवैधर्म्येण मालादृष्टान्तालंकारः। अत्र पूर्वमुपमेयं पश्चात्तत्प्रतिबिम्बत्वेनोपमानं निबद्धव्यमिति नायं नियम। 'दृष्टान्तः पुनरेतेषा सर्वेषा प्रतिबिम्बनम्' इति लक्षणात्। उदाहृतं च **रुय्यकेन**—'अब्धिर्लङ्घित एव वानरभटैः किं त्वस्य गम्भीरतामापातालनिमग्नपीवरवपुर्जानाति मन्थाचल। देवी वाचमुपासते हि बहव सारं तु सारस्वतं जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारि कवि' इति। अत्र ज्ञानाख्यधर्मेणौपम्यं वा कि बिम्बभावेन वेति। कश्चित्त्वालकारिक पूर्वार्धे वैधर्म्येण मालाप्रस्तुतप्रशंसोत्तरार्धे तत्समर्थनरूपोऽर्थान्तरन्यास इत्यवदत्–तन्न, यतोऽयमप्रस्तुते विशेष सामान्य बोधयेदिति वक्तव्यं। तत्र प्रस्तुतस्य विशेषरूपत्वादेव। नापि तयो कार्यकारणभावः। नाप्यत्र सारूप्यं तादृशधर्माभावात्कुमुदानीति पङ्कजानीति नपुंसकोपादानाच्च। तेन पूर्वोक्तमेव साधु। ननु तवापि कथं बिम्बप्रतिबिम्बभाव इति चेत्, उच्यते–वशिन शशाङ्कसवितारौ प्रतिबिम्बत्वेनोपात्तौ। परपरिग्रहस्य कुमुदपङ्कजे पराङ्मुखस्य वैधर्म्येण विकास इति सर्वं समञ्जसम्। अङ्कपङ्केति न्येवन्येवेति परपरीति छेकवृत्त्य-

---

**पाठा०–१ 'किमत्रभवती विप्रलभ्यते; पश्य'. २ 'अथ पुनः पूर्ववृत्तं व्यासंगाद्विस्मृतं भवेत्तदा कथमधर्मभीरोर्दारपरित्यागः।'.**

मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये ।
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः ॥ २९ ॥

पुरोहितः—(विचार्य) यदि तावदेवं क्रियताम् ।[1]

राजा—अनुशास्तु मां भवान् ।

पुरोहितः—अत्रभवती तावदा प्रसवादस्मद्गृहे तिष्ठतु ।[2] कुत इदमुच्यत इति चेत् । त्वं साधुभिरुद्दिष्टः प्रथममेव चक्रवर्तिनं पुत्रं जनयिष्यसीति । स चेन्मुनिदौहित्रस्तल्लक्षणोपपन्नो भविष्यति, [3]अभिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यसि । विपर्यये तु पितुरस्याः [5]समीपनयनमवस्थितमेव ।

राजा—यथा गुरुभ्यो रोचते ।

पुरोहितः—वत्से ! [6]अनुगच्छ माम् ।

शकुन्तला—भअवदि वसुहे ! देहि मे[7] विवरं [भगवति वसुधे ! देहि मे विवरम् ।] (इति रुदती प्रस्थिता, निष्क्रान्ता सह पुरोधसा तपस्विभिश्च)

(राजा शापव्यवहितस्मृतिः शकुन्तलागतमेव चिन्तयति)

(नेपथ्ये)

आश्चर्यम् ।

राजा—(आकर्ण्य) किं नु खलु स्यात् ? ।

---

नुप्रासौ एतदभिप्रायेणैव शार्ङ्गरववचनम् 'यदा तु–' इति । अन्यस्यालौकिकस्य शापस्य सङ्ग. सक्तिः संबन्धस्तस्मात् । अथ चान्यस्या वसुमत्या देव्याः प्रसङ्गात् । अथवाऽन्यस्या लोकोत्तराया राजलक्ष्म्याः सङ्गादित्यादि योज्यम् । विस्मृतं विद्यते यस्य स विस्मृत· । अर्शआदित्वादच् । विस्मरणयुक्त इत्यर्थः । अनेनोत्प्रासननामा नाट्यालंकार उपक्षिप्तः । तल्लक्षणं तु—'उत्प्रासनं रूपहासो योऽसाधौ साधुमानिनि' इति । **मूढ इति** । आहो पक्षान्तरे । 'पांसुलः पुंश्चल.' इति

---

**पाठा०**–१ 'यदि तावदेवं क्रियते ।'. २ 'गुरुः ।'. ३ 'राजा–कुत इदम् । पुरोधाः–त्वं साधुनिमित्तकैरादिष्टपूर्वः प्रथममेवोभयचक्रवर्तिनं'. ४ 'ततः प्रतिनन्द्य'. ५ 'समीपगमनमवस्थितमेव ।'. ६ 'इत इतोऽनुगच्छ'. ७ 'अंतरं'.

(प्रविश्य)

**पुरोहितः**—(सविस्मयम्) देव ! अद्भुतं खलु संवृत्तम्।

**राजा**—किमिव ?।

**पुरोहितः**—देव ! परावृत्तेषु कण्वशिष्येषु

**सा निन्दन्ती स्वानि भाग्यानि बाला**
**बाहूत्क्षेपं क्रन्दितुं च प्रवृत्ता।**

**राजा**—किं च,

**पुरोहितः**—

**स्त्रीसंस्थानं चाप्सरस्तीर्थमारा-**
**दुत्क्षिप्यैनां ज्योतिरेकं जगाम ॥ ३० ॥**

(सर्वे विस्मयं रूपयन्ति)

**राजा**—भगवन् ! प्रागपि सोऽस्माभिरर्थः प्रत्यादिष्ट एव । किं वृथा तर्केणान्विष्यते ? । विश्राम्यतु भवान्।

**पुरोहितः**—(विलोक्य) विजयस्व । (इति निष्क्रान्त)

---

विश्व० । 'राजा—भो सत्यवादिन्' इत्यादिनैतदन्तेन विरोधनामकमङ्गमुपक्षिप्तम् । 'उत्तरोत्तरवाक्यं तु विरोध इति सञ्ज्ञित०' इति । अनुशास्तु शिक्षयतु । शुद्धान्तमन्तःपुरम् । भगवति वसुधे ! देहि मे विवरं छिद्रम् । प्रवेशायेत्यार्थम् । शापव्यवहितस्मृतिरिति कविवचनमनुवादेऽन्तर्भूतम् । **सा निन्दन्तीति** । यतो बालाऽत एव बाहूत्क्षेपं यथा स्यात्तथा क्रन्दितुं प्रवृत्तेति बालास्वभावोक्तिः । इदं ज्ञातमेवेति राजा पृच्छति—**किं चेति** । **स्त्रीति** । स्त्रीसस्थानं ललनाकारम् । तेजोरूपत्वेन स्पष्टमदृश्यमानमत एव सस्थानशब्दप्रयोगः । देवेन नीतापि स्त्र्याकारेणैवेति परपुरुषासंस्पर्शित्वं ध्वनितम् । एकं केवलं ज्योतिरेनामाराद्दूरादुत्क्षिप्याप्सरस्तीर्थं शचीतीर्थं जगामेति सबन्धः । क्रिययो समुच्चितत्वात्समुच्चयालंकारः । छेकानुप्रासश्च । शालिनी वृत्तम् । 'नेपथ्ये' इत्याद्येतदन्तेन शक्तिर्नामाङ्गमुप-

---

**पाठा०**—१ **'खलु वृत्तम् ।'.** २ **'रोदितुं च'.** ३ **'°क्षिप्त्वैवाशु ज्योतिरेनां तिरोऽभूत् ॥'.** ४ **'गुरो ! प्रथममेवास्माभिरर्थः प्रत्यादिष्टः । किं मृषा तर्केणान्विष्यते विश्राम्यताम् ।'.**

---

**टिप्प०**—1 साहित्यपरिपोषिकेयं क्लृप्तिः कविकुलशेखरेण स्वकपोलकल्पिता, सा चाग्रिमपुनर्मिलनसंविधानकस्य कियती पोषणावहा भविष्यतीत्यत्र वाचकहृदयमेव शरणम् ।

राजा—वेत्रवति ! पर्याकुलोऽस्मि[1] । शयनभूमिमार्गमादेशय ।

प्रतीहारी—इदो ईदो देवो[2] । [इत इतो देवः ।] (इति प्रस्थिता)

राजा—

**कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।**
**बलवत्तु दूयमानं प्रत्याययतीव मे[3] हृदयम् ॥ ३१ ॥**

(इति निष्क्रान्ताः सर्वे)

**पञ्चमोऽङ्कः ।**

---

क्षिप्तम् । तल्लक्षणं तु—'विरोधप्रशमो यस्तु सा शक्तिरिति कीर्तिता' इति । अनेनाद्भुतरसोऽपि ध्वनित· । तल्लक्षणम्—'दुर्लभाभीष्टसप्राप्ति खेचराणा विलोकनम् । एते यत्र विभावा· स्युरनुसचारिणस्त्वमी ॥ स्तम्भः स्वेदश्च रोमाञ्चः प्रलयो गद्गदं वचः । आवेगसंभ्रमौ जाड्यमिति यत्राथ विस्मयः ॥ स्थायी तमद्भुतं प्राह' इति । पर्याकुलत्वं शापावसानस्य नैकट्यात् । इत इतो देवः । **काममिति ।** काममतिशयेन प्रत्यादिष्टा निराकृता मुनेस्तनयां परिग्रहं पत्नी न स्मरामि । तु पुनः बलवदधिकं दूयमानं पीड्यमानं मे मम हृदयं प्रत्याययति विश्वासमुत्पादयतीवेत्युत्प्रेक्षा । अनया स्थायिन्या रतेरनुसंधानं ध्वनितम् । पीडायाः कारणस्य स्मरणस्याभावेऽपि पीडेति विभावनालंकारः । अनुमानालंकारोऽपि । तत्प्रत्यायनस्य साध्यत्वं हृदयपीडाहेतुत्वादनुमानम् । तदुक्तम्—'यत्साध्यसाधनयोर्वचः' इति तल्लक्षणात् । अनेन प्रसङ्गनामाङ्गमुपक्षिप्तम् । तल्लक्षणम्—'प्रसङ्गश्चैव विज्ञेयो गुरूणां कीर्तनं हि यत्' इति । अत्र मुनेस्तनयेति गुरुकीर्तनम् ॥

**इति श्रीमदभिज्ञानशाकुन्तलटीकायामर्थद्योतनिकायां पञ्चमोऽङ्कः समाप्तः ॥**



---

पाठा०—१ 'पर्याकुल इवास्मि । शयनीयगृह°'. २ 'इदो एदु देवः ।'. ३ 'मां'.

# षष्ठाङ्कस्य कथावस्तु



तत्र प्रथमतः प्रवेशके नागरिकश्यालो रक्षिद्वयसमेतो बद्धहस्तं धीवरमादाय प्रविशति। रत्नैर्नृपनामोत्कीर्णं सुवर्णमयं राजकीयाङ्गुलीयकं कुतो मुष्टमिति पृष्टो धीवरो राजकुले कथयति–धीवरोऽहं जालादिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि। एकदा जाले ह्येको रोहितमत्स्यो मयासादितः खण्डशः कल्पितश्च। तदुदराभ्यन्तरे चेदं रत्नभास्वरमङ्गुलीयकं लब्धम्। यदाहमस्य विक्रयार्थं प्रवृत्तस्तदा रक्षिभिर्गृहीतोऽत्रानीतश्चेति। राजा च तदाङ्गुलीयकदर्शनक्षणादेव शकुन्तलया सह रहसि प्रणयः परिणयश्च संस्मरति। तेन हि नृपः सुसन्तुष्टो धीवरायाङ्गुलीयकमूल्यदापनं समादिशति। ततो मेनकायाः सहचरी सानुमती प्रमदवने प्रविशति। उद्यानपालिका-कञ्चुकीसम्भाषणतो ज्ञायते–यत् शकुन्तला रहसि सत्यमेवोढपूर्वा किञ्च मोहात्प्रत्यादिष्टेत्यनुतापमुपगतेन राज्ञा वैमनस्याद्वसन्तोत्सवः प्रत्याख्यात इति। प्रत्यादेशविमानितायाः प्रेयस्या वियोगेनाविश्रान्तदुःखमनुभवन् दुष्यन्तश्चिरप्रबोधाद्धर्मासनं मयाध्यासितुमसंभावितमत एव यत्प्रत्यवेक्षितममात्येन तत्पत्रमारोप्य दीयतामित्यादिशति। अथ च समुद्रव्यवहारी सार्थवाहो धनमित्रो नौव्यसने विपन्नः। अत एव राजगामी तस्यार्थसंचय इत्यमात्यलिखितं विचार्य बहुपत्नीकस्य तस्य काचिद्भार्यापन्नसत्त्वा स्यात्। स च गर्भः पित्र्यं रिक्थमर्हतीत्यमात्यं समाज्ञापयति। एतदन्तरे दानवगणमुच्छेत्तुं भवानात्तशस्त्र एव विजयाय प्रतिष्ठतामितीन्द्रेण मातलिद्वाराज्ञप्तो राजामात्ये राज्यभारमारोप्य प्रस्थितवान्।



# षष्ठोऽङ्कः

( ततः प्रविशति नागरिकः श्यालः पश्चाद्बद्धपुरुषमादाय रक्षिणौ च । )

**रक्षिणौ**—( ताडयित्वा ) अले[1] कुंमीलआ ! कहेहि कहिं तुए एशे मणिबंधणुक्किण्णणामहेए[2] लाअकीए अंगुलीअए शमाशादिए[3] ? । [ अरे कुम्भीरक ! कथय कुत्र त्वयैतन्मणिबन्धनोत्कीर्णनामधेयं राजकीयमङ्गुलीयकं समासादितम् ? । ]

**पुरुषः**—( भीतिनाटितकेन ) पशीदंतु भावमिश्शे[4] । हगे णं ईदिशकम्मकाली[5] । [ प्रसीदन्तु भावमिश्राः । अहं नेदृशकर्मकारी । ]

**प्रथमः**—किं[6] सोहणे बम्हणोत्ति कलिअ रज्जा पडिग्गहे दिण्णे ? । [ किं शोभनो ब्राह्मण इति कलयित्वा राज्ञा प्रतिग्रहो दत्तः ? । ]

**पुरुषः**—शुंणध[7] दाणिं । हगे शक्कावदालब्भंतरालवाशी धीवले । [ शृणुतेदानीम् । अहं शक्रावताराभ्यन्तरालवासी धीवरः । ]

---

नागरिको नगररक्षाधिकृतः । श्यालो, राजश्यालः, कोष्ठपाल इति यावत् । अले अरे कुंमीलआ कुम्भीरक चौर ! 'कुम्भीरको गण्डपदस्तस्करश्च मलिम्लुचः' इति नाममाला । 'आच्चाक्षेपे' इति मागध्या **वररुचि**सूत्रेण संबुद्धावाकारादेशः । कथय कुत्र त्वया एशे एतन्मणिबन्धनोत्कीर्णनामधेयं मणेर्बन्धनं सुवर्णेन प्रत्युप्तीकरणं तत्रोत्कीर्णं व्यक्तीकृतं नामधेयं यत्र तत्तथा लाअकीए राजकीयं अंगुलीअए अङ्गुलीयकं शमाशादिए समासादितम् । 'मागधी राक्षसादेः स्यात्' इति भरतोक्तेः । आदिग्रहणेन शकारधीवरादीनामपि ग्रहणादत्रैषां मागध्युक्ति । तत्र 'रसोर्लशौ' इति सूत्रेण रेफस्य लो दन्त्यस्य तालव्य । 'अत एत्स्यात्' इत्यनेन प्रथमैकवचनस्यैकारः । प्रसीदन्तु भावमिश्रा । 'मान्यो भावस्तु वक्तव्यः' इत्युक्तेर्भावेति सबोधनम् । असौ नीच सुतरा ग्रामीग इति तेन 'मिश्र'पदं गौरवार्थमुक्तम् । हगे अहम् । 'वयमोर्हगे' इति सूत्रेणाहमित्यस्य हगे आदेशः । नेदृशकर्मकारी । कि शोभनो ब्राह्मण इति कलयित्वा ज्ञात्वा रज्जा राज्ञा प्रतिग्रहो दत्त इति सोपहासम् । मागध्याम् 'प्यन्यज्ञक्षा ञ्ज' इति सूत्रेण ञ्जः । सुणध दाणिं शृणुतेदानीम् । इह 'हचोर्हध' इति धः । 'इदानीमो दाणिं' इति दाणिमादेशः । अहं

---

पाठा०-१ 'हण्डे'. २ 'महालदणभाशुले उक्किण्णामकले'. ३ 'शमाशादिदे'. ४ 'भावमिश्शा'. ५ 'ण हगे ईदिशश्श अकय्यश्श कालके ।' ६ 'किं णु खु शोहणे बम्हणे शि त्ति कदुअ लञ्जा'. ७ 'शुणाध दाव । हगे खु शक्कावदालवाशी'.

**द्वितीयः**—पाडच्चला ! किं[1] अम्हेहिं जादी पुच्छिदा ? । [पाटच्चर ! किमस्माभिर्जातिः पृष्टा ? ।]

**श्यालः**—सूअअ ! कहेदु शव्वं अणुक्कमेण । मा णं अंतरा पडिबंधह[2] । [सूचक ! कथयतु सर्वमनुक्रमेण । मैनमन्तरे प्रतिबन्धय ।]

**उभौ**—जं आवुत्ते आणवेदि कहेहि[3] । [यदावुत्त आज्ञापयति कथय ।]

**पुरुषः**—अहके[4] जालुग्गालादिहिं मच्छबंधणोवाएहिं कुडुंबभलणं कलेमि । [अहं जालोद्गालादिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि ।]

**श्यालः**—(विहस्य) विसुद्धो दाणिं[5] आजीवो । [विशुद्ध इदानी-माजीव. ।]

**पुरुषः**—

**शहजे[6] किल जे[7] विणिंदिए ण हु दे[8] कम्म विवज्जणीअए[1] ।**
**पशुमालणकम्मदालुणे[2] अणुकंपामिदु जेव्व शोत्तिए[3] ॥ १ ॥**

[सहजं किल यद्विनिन्दितं न खलु तत्कर्म विवर्जनीयम् ।
पशुमारणकर्मदारुणोऽनुकम्पामृदुरेव श्रोत्रियः ॥]

---

शक्रावताराभ्यन्तरालवासी धीवर. । शक्रावतार इति तीर्थनाम । तत्संबन्धाद्ग्राम-नामापि । एतदेव पूर्वाङ्के 'शचीतीर्थ'शब्देनोक्तम् । पाटच्चर चौर ! 'दस्युः पाटच्चरः स्तेन.' इति हैमः । किमस्माभिर्जातिः पृष्टा ? । सूचकेति रक्षिणोरेकतरस्य नाम । कथयतु सर्वमनुक्रमेण; मैनमन्तरे मध्ये प्रतिबन्धय । यदावुत्त आणवेदि आज्ञा-पयति । 'दिरिचेचोः' इति दिः । 'भगिनीपतिरावुत्त.' इत्यमरः । कथय । अहके अहम् । 'अहमर्थेऽहके हगे' इत्युक्तेः । जालोद्गालादिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि । जालमानाय । 'उज्झलो वडिअंसभिअ' इति देशीकोशे । विशुद्ध इदानीमाजीव. । **शहजे इति** । सहजं किल यद्विनिन्दितं न खलु तत्कर्म

---

**पाठा०**—१ 'किं तुमं अस्सेहिं यादिं वशादि पुश्चिदे ।'. २ 'नागरकः—सूअअ...सव्वं कमेण । मा णं पडिबंधेध ।'. ३ 'लवेहि ले लवेहि ।'. ४ 'शे हगे यालबडिशप्पहुदीहिं'. ५ 'धीवरकः—भस्टके, मा एवं भण ।'. ६ 'शहये'. ७ 'ये'. ८ 'शे'. ९ 'पशुमालिं कलेदि दालुणं...मिदुले वि शोणिके ।'.

---

**टिप्प०**—1 तथा चोक्तं **मनुना** (१०।९७)—'वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठित. । परधर्मेण जीवन् हि सद्यः पतति जातित: ॥' इति । 2 'यज्ञार्थं पशव. सृष्टास्तस्माद्यज्ञे मतो वधः' इत्युक्ते पशुवधो यज्ञे न हिंसास्पद इति श्रूयते । 3 'जन्मना जायते शूद्रः संस्काराद्द्विज उच्यते । विद्यया याति विप्रत्व त्रिभिः श्रोत्रिय उच्यते' इति श्रोत्रियलक्षणम् ।

श्यालः—तदो तदो ? । [ततस्ततः ? ।]

पुरुषः—एक्कश्शिं दिअशे खंडशो लोहिअमच्छे मए कप्पिदे जाव तश्श उदलब्भंतले एदं [1]लदणभाशुलं अंगुलीअअं देक्खिअ[2] पच्छा अहके शे विक्कआअ दंशअंते गहिदे भावमिश्शेहिं । [3]मालेह वा मुंचेह वा । अअं शे आअमवुत्तंते । [एकस्मिन्दिवसे खण्डशो रोहितमत्स्यो मया कल्पितः । यावत्तस्योदराभ्यन्तर इदं रत्नभासुरमङ्गुलीयकं दृष्ट्वा पश्चादहं तस्य विक्रयाय दर्शयन्गृहीतो भावमिश्रैः । मारयत वा मुञ्चत वा । अयमस्यागमवृत्तान्तः ।]

श्[4]यालः—जाणुअ ! विस्सगंधी गोहादी मच्छबंधो एव्व णिस्संसअं । अंगुलीअअदंसणं शे विमरिसिदव्वं । राअउलं एव्व गच्छामो । [जानुक ! विस्रगन्धी गोधादी मत्स्यबन्ध एव निःसंशयम् । अङ्गुलीयकदर्शनमस्य विमर्शयितव्यम् । राजकुलमेव गच्छामः ।]

रक्षिणौ—तह । गच्छ अले गंडभेदअ ! । [तथा । गच्छ अरे गण्डभेदक ! ।]

(सर्वे परिक्रामन्ति)

---

विवर्जनीयम् । धीवरस्य मत्स्याजीवे विशेषे प्रस्तुते सामान्यमुक्तमित्यप्रस्तुतप्रशंसा । अनुकम्पा कृपा तया मृदुरेव श्रोत्रियो दारुणं पशुमारणं न कर्म विवर्जयति यथा तथा मम सहजं कर्म विवर्जनीयं न भवतीति वैधर्म्यदृष्टान्तः । व्व इवार्थे । तदोपमा । यथा श्रोत्रियश्छान्दसो वैदिकं दारुणं पशुमारणकर्मापि यज्ञादौ न विवर्जयति क्रतुषु हिंसाया विहितत्वात्सहजम् । विनिन्दितमिति बौद्धादिभिः । एकस्मिन्दिवसे खण्डशो रोहितमत्स्यः रोहित इति मत्स्यसञ्ज्ञा । मया कप्पिदे कल्पितः खण्डितः । 'कल्पनं कर्तनं क्लृप्तौ' इति विश्वः । यावत् तस्योदराभ्यन्तर इदं रत्नभासुरमङ्गुलीयकं दृष्ट्वा पश्चादहं तस्य विक्रयाय दर्शयन्गृहीतो भावमिश्रैः । मारयत वा मुञ्चत वा । अयमस्याङ्गुलीयकस्यागमः प्राप्तिस्तद्वृत्तान्तः । विक्रयायेति 'चतुर्थ्या षष्ठी' इति षष्ठ्या नियमेन प्राप्तौ 'तादर्थ्ये' इति विकल्पेन चतुर्थ्येकवचनम् । जानुकेति द्वितीयपुरुषनाम । विस्रगन्धी । 'विस्रं स्यादामगन्धि यत्' इत्यमरः । गोधादी गोधाशनो मत्स्यबन्धो धीवर एव निःसंशयम् । अङ्गुलीयकदर्श-

---

पाठा०—१ 'महालदणभाशुलं'. २ 'पेस्कामि ! पश्चा इध'. ३ 'अधुणा मालेध वा कुस्टेध वा'. ४ 'नागरिकः—(अंगुलीयकमाघ्राय) जाणुअ, मच्छोदरसंठिदं ति णत्थि संदेहो । तधा अअं से विस्सगंधो । आगमो दाणिं एदस्स विमरिसिदव्वो । ता एध । राअउलं जेव'.

**श्यालः**—सूअअ! इमं गोपुरदुआरे अप्पमत्ता पडिबालह जाव इमं अंगुलीअअं जहागमणं भट्टिणो णिवेदिअ तदो सासणं पडिच्छिअ णिक्कमामि। [सूचक! इमं गोपुरद्वारेऽप्रमत्तौ प्रतिपालयतं यावदिदमङ्गुलीयकं यथागमनं भर्तुर्निवेद्य ततः शासनं प्रतीक्ष्य निष्क्रमामि।]

**उभौ**—पविसदु आवुत्ते शामिपशादश्श। [प्रविशत्वावुत्तः स्वामिप्रसादाय।]

(इति निष्क्रान्तः श्यालः)

**प्रथमः**—जाणुअ! चिलाअदि खु आवुत्ते। [जानुक! चिरायते खल्वावुत्तः।]

**द्वितीयः**—णं अवशलोवशप्पणीआ लाआणो। [नन्ववसरोपसर्पणीया राजानः।]

**प्रथमः**—जाणुअ! फुल्लंति मे हत्था इमश्श वहस्स शुमणा पिणद्धुं। [जानुक! प्रस्फुरतो मम हस्तावस्य वधार्थं सुमनसः पिनद्धुम्।] (इति पुरुषं निर्दिशति)

**पुरुषः**—णं अलुहदि भावे अकालणमालणं भाविदुं। [नार्हति भावोऽकारणमारणं भावयितुम्।]

---

नमस्य विमर्शयितव्यम्। राजकुलमेव गच्छामः। तह तथा। गच्छ, अग्रे गच्छेत्यर्थः। अरे गण्डभेदक चौर। सूचक! इमं गोपुरद्वारे। 'पुरद्वारं तु गोपुरम्' इत्यमरः। तत्राप्रमत्तौ सावधानौ प्रतिपालयतं रक्षतम्। यावदिदमङ्गुलीयकं यथागमनं। भर्तुरिति चतुर्थ्यर्थे षष्ठी। तेन भर्त्रे निवेद्य ततः शासनमाज्ञा प्रतीक्ष्य गृहीत्वा निष्क्रमामि। प्रविशत्वावुत्त स्वामिप्रसादाय। जानुक! चिरायते खल्वावुत्त। नन्ववसरोपसर्पणीया राजान। फुल्लन्ति प्रस्फुरतो मम हस्तौ अस्य वहस्स वधार्थं सुमनसः कुसुमानि पिनद्धुं परिधापयितुम्। 'आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत्' इत्यमरः। 'चतुर्थ्याः षष्ठी तादर्थ्ये च' इत्यनुवर्तमाने 'वधाडाइश्च वा' इति सूत्रेण चतुर्थ्येकवचनस्य षष्ठ्येकवचनम्। तेन वहस्सेति सिद्धम्। **'वज्झस्स'** वध्यस्येत्यसाप्रदायिक पाठः। नार्हति भावोऽकारणमारणं भावयितुं प्रापयितुम्। 'ततः प्रविशति' इत्याद्येतदन्तेन विद्रवनामकमङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'वधबन्धादिकोपस्तु विद्रवः परिकीर्तितः' इति।

---

**पाठा०**—१ **'राअउलं पविसिअ णिक्कमामि।'**. २ **'लाआणो होंति।'** ३ **'याणुअ, स्फुलंति मे अग्गहत्था।'**. ४ (धीवरं निर्दिश्य) **इमं गंठिभेदअं वावादेदुं।'**. ५ **'णालिहदि भावे अकालणमालके भविदुं।'**.

**द्वितीयः**—(विलोक्य) एशे [1]अम्हाणं शामी पत्तहत्थे लाअशाशणं पडिच्छिअ इदोमुहे देक्खीअदि। गिद्धबली भविश्शशि, शुणो मुहं वा देक्खिश्शशि। [एष नः स्वामी पत्रहस्तो राजशासनं प्रतीक्ष्येतोमुखो दृश्यते। गृध्रबलिर्भविष्यसि, शुनो मुखं वा द्रक्ष्यसि।]

(प्रविश्य)

**श्यालः**—सुअ! मुंचेदु एसो जाली[2]अजीवी। उववण्णो खु अंगुलीअअस्स आअमो। [सूचक! मुच्यतामेष जालोपजीवी। उपपन्नः खल्वङ्गुलीयकस्यागमः।]

**सूचकः**—जह आवुत्ते भणादि। [यथावुत्तो भणति।]

**द्वितीयः**—एशे जमशदणं पविशिअ पडिणिवुत्ते। [एष यमसदनं प्रविश्य प्रतिनिवृत्त.।] (इति पुरुषं परिमुक्तबन्धनं करोति)

**पुरुषः**—(श्यालं प्रणम्य) [3]भट्टा! अह कीलिशे मे आजीवे?। [भर्तः! अथ कीदृशो म आजीवः?।]

**श्यालः**—एसो भट्टिणा[4] अंगुलीअअमुल्लसम्मिदो पसादो वि दाविदो। [एष भर्त्राङ्गुलीयकमूल्यसंमितः प्रसादोऽपि दापितः।] (इति पुरुषाय स्वं प्रयच्छति)

**पुरुषः**—(सप्रणामं प्रतिगृह्य) भट्टा! अणुग[5]हीद म्हि। [भर्तः! अनुगृहीतोऽस्मि।]

---

एषोऽस्माकं स्वामी पत्रहस्तो राजशासनं प्रतीक्ष्येतोमुखो दृश्यते। गृध्रबलिर्भविष्यसि, शुनो मुखं द्रक्ष्यसि वा। सूचक! मुच्यतामेष जालोपजीवी। उपपन्नः खल्वङ्गुलीयकस्यागम॰। यथावुत्तो भणति। एष यमसदनं प्रविश्य प्रतिनिवृत्तः। अथ कीदृशो म आजीव॰?। एष भर्त्राङ्गुलीयकमूल्यसंमितः प्रसादोऽपि दापितः। मोचनमपिशब्द॰ समुच्चिनोति। स्वं धनम्। 'स्वोऽस्त्रिया धने' इत्यमरः।

---

**पाठा०**—१ 'अस्माणं ईशले पत्ते गेण्हिअ लाअशाशणं। (धीवरं प्रति) ता शउलाणं मुहं पेस्कशि अथवा गिद्धशिआलाणं बली भविश्शशि।'. २ 'धीवरं'. ३ 'भस्टके, तव केलके मम यीविदे।'. ४ 'पारिदोसिओ पसादीकिदो ता गेण्ह एदं।'. ५ '॰ग्गहीदे स्मि'.

**सूचकः**—एशे णाम अणुग्गहे जे शूलादो अवदालिअ हत्थिक्कंधे पडिट्ठाविदे । [एष नामानुग्रहो यच्छूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः ।]

**जानुकः**—आवुत्त! पलिदोशं कहेहि । तेण अंगुलीअएण भट्टिणो शम्मदेण होदव्वं । [आवुत्त! परितोषं कथय । तेनाङ्गुलीयकेन भर्तुः संमतेन भवितव्यम् ।]

**श्यालः**—ण तस्सिं महारुहं रदणं भट्टिणो बहुमदं त्ति तक्केमि । तस्स दंसणेण भट्टिणो अभिमदो जणो सुमराविदो । मुहुत्तअं पकिदिगंभीरो वि पज्जुस्सुअणअणो आसि । [न तस्मिन्महार्हं रत्नं भर्तुर्बहुमतमिति तर्कयामि । तस्य दर्शनेन भर्तुरभिमतो जनः स्मारितः । मुहूर्तं प्रकृतिगम्भीरोऽपि पर्युत्सुकनयन आसीत् ।]

**सूचकः**—शेविदं णाम आवुत्तेण । [सेवितं नामावुत्तेन ।]

**जानुकः**—णं भणाहि । इमश्श कए मच्छिआभत्तुणोत्ति । [ननु भण । अस्य कृते मात्स्यिकभर्तुरिति ।] (इति पुरुषमसूयया पश्यति)

**पुरुषः**—भट्टालक! इदो अद्धं तुम्हाणं शुमणोमुल्लं होदु । [भट्टारक! इतोऽर्धं युष्माकं सुमनोमूल्यं भवतु ।]

---

भर्त, अनुगृहीतोऽस्मि । एष नामानुग्रहो यच्छूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः । परितोषं कथय । समृद्ध्यादित्वादात्वम् (?) । तेनाङ्गुलीयकेन भर्तु संमतेन भवितव्यम् । न तस्मिन्महार्हं रत्नं भर्तुर्बहुमतमिति तर्कयामि । तस्य दर्शनेन भर्तुरभिमतो जनः स्मारितः । मुहूर्तं प्रकृतिगम्भीरोऽपि पर्युत्सुकनयन आसीत् । सेवितं नामावुत्तेन, सेवा दर्शितेत्यर्थः । ननु भण । अस्य कृते मात्स्यिकभर्तुः । मत्स्येन जीवन्तीति मात्स्यिकास्तेषा भर्तुरस्य पुरुषस्य कृते सेवितम् । धनप्राप्तिस्त्वेतचिछेति सेवनमेतदर्थमेव जातमिति भावः । अत एवासूयया पश्यतीति । भट्टारक!

---

**पाठा०—१ 'जानुकः-एशे सु लब्धा तधा णाम अणुग्गहीदे यं शूलादो ओदालिअ हत्थिस्कंधं शमालोविदे ।'. २ 'सूचक.-लाउत्ते पालिदोशिए कधेदि महालिहलदणेण तेण अंगुलीएण'. ३ 'महारिहरदणं तिण परिदोसो । एत्तिकं उण । उभौ-किं णाम । नागरकः-तक्केमि तस्स दंसणेण'. ४ 'तोशिदे दाणिं भस्टा लाउत्तेण ।'. ५ 'धीवरकः-भस्टका,...तुस्माणं पि शुलामुल्लं'.**

जानुकः—एत्तके जुज्जइ। [एतावद्युज्यते।]

श्यालः—धीवर! महत्तरो तुमं पिअवअस्सओ दाणिं मे संवुत्तो। कादंबरीसक्खिअं अम्हाणं पढमसोहिमदं इच्छीअदि। ता सोंडिआपणं एव्व गच्छामो। [धीवर! महत्तरस्त्वं प्रियवयस्यक इदानीं मे संवृत्तः। कादम्बरीसाक्षिकमस्माकं प्रथमशोऽभिमतमिष्यते। अच्छौण्डिकापणमेव गच्छामः।]

(इति निष्क्रान्ता. सर्वे)

---

प्रवेशकः।

(तत प्रविशत्याकाशयानेन सानुमती नामाप्सराः)

सानुमती—णिव्वट्टिदं मए पज्जाअणिवत्तणिज्जं अच्छरातित्थसण्णिज्झं जाव साहुजणस्स अभिसेअकालो त्ति। संपदं इमस्स राएसिणो उदंतं पच्चक्खीकरिस्सं। मेणआसंबंधेण सरीरभूदा मे सउंदला। ताए अ दुहिदुणिमित्तं आदिट्ठपुव्व म्हि। (समन्तादवलोक्य) किं णु खु उदुच्छवे वि णिरुच्छवारंभं विअ राअउलं दीसइ।

---

इतोऽर्धं युष्माकं सुमनोमूल्यं भवतु। सुमनोमूल्यं पुष्पमूल्यमिति विनयोक्तिः। एतावद्युज्यते। प्रियवयस्यक इदानी मे सवृत्त। कादम्बरी मदिरा तत्साक्षिकमेकत्र पानेनास्माकं प्रथमशोभिमतमद्ययावत्पूर्वं न जातमिष्यते। तच्छौण्डिकापणमेव गच्छामः। प्रवेशक इति। प्रवेशकलक्षणं तु **सुधाकरे**—'यन्नीचै केवलं पात्रैर्भाविभूतार्थसूचनम्। अङ्कयोरुभयोर्मध्ये स विज्ञेयः प्रवेशक॥' इति। 'अङ्कयोरुभयोर्मध्ये' इत्यनेन प्रथमाङ्कनिषेधः। क्वचित्पुस्तके **'तृतीयः प्रवेशकः'** इति पाठ। तत्र विष्कम्भद्वयं तृतीयचतुर्थयोरङ्कयोः षष्ठे तृतीयः प्रवेशक इत्यर्थः। निर्वर्तितं मया पर्यायनिर्वर्तनीयमप्सरस्तीर्थसानिध्यं यावत्साधुजनस्याभिषेककाल इति। 'पर्यायोऽवसरे क्रमे' इत्यमरः। तत्र गङ्गायामप्सरस्तीर्थं नाम तीर्थमस्ति। तत्र यावत्सज्जनस्नानकालमेकैकस्मिन्दिवस एकैकयाप्सरसा सनिहितया स्थात-

---

**पाठा०**—१ 'कादंबलिशक्खिके खु पडमं अस्माणं शोहिदे इच्छीअदि। ता शुंडिकागालं येव गश्चस।'. २-३ 'मिश्रकेशी'. ४ 'ता जाव इमस्स राएसिणो वुत्तंतं पच्चक्खीकरइस्सं। ५ 'संदिट्ठ म्हि। ६ 'उवत्थिदवक्खिणे वि दिअसे णिरूसवारंभं। विअ राअउलं'.

---

**टिप्प०**—1 राजकुले कालिदासेन राजव्यवहार सूक्ष्मेक्षिकया दृष्टोऽभिज्ञातश्चासीदिति सुमनोमूल्येन क्षणार्ध एव मदिरासाक्षिक तेषा सौहार्दं सपादितमित्यनेन दृश्यते।

अत्थि मे विहवो पणिधाणेण सव्वं परिण्णादुं। किं दु सहीए आदरो मए माणइदव्वो। होदु; इमाणं एव्व उज्जाणपालिआणं तिरक्खरिणीपडिच्छण्णा पस्सवत्तिणी भविअ उवलहिस्सं। [ निर्वर्तितं मया पर्यायनिर्वर्तनीयमप्सरस्तीर्थसांनिध्यं यावत्साधुजनस्याभिषेककाल इति। सांप्रतमस्य राजर्षेरुदन्तं प्रत्यक्षीकरिष्यामि। मेनकासंबन्धेन शरीरभूता मे शकुन्तला। तया च दुहितृनिमित्तमादिष्टपूर्वास्मि। किं नु खलु ऋतूत्सवेऽपि निरुत्सवारम्भमिव राजकुलं दृश्यते। अस्ति मे विभवः प्रणिधानेन सर्वं परिज्ञातुम्। किं तु सख्या आदरो मया मानयितव्यः। भवतु; अनयोरेवोद्यानपालिकयोस्तिरस्करिणीप्रतिच्छन्ना पार्श्ववर्तिनी भूत्वोपलप्स्ये। ] ( इति नाट्येनावतीर्य स्थिता )

( ततः प्रविशति चूताङ्कुरमवलोकयन्ती चेटी, अपरा च पृष्ठतस्तस्याः )

**प्रथमा—**

[1]आतम्महरिअपंडुर जीविदं[2] सत्तं वसंतमासस्स।
दिट्ठो[3] सि चूदकोरअ! उदुमंगल! तुमं पसाएमि॥ २॥

[ आताम्रहरितपाण्डुर जीवित! सत्यं वसन्तमासस्य।
दृष्टोऽसि चूतकोरक! ऋतुमङ्गल! त्वां प्रसादयामि॥ ]

---

व्यमिति नियमः। तस्मिन्दिने सानुमत्या तत्कार्यं कृतमित्यर्थः। साम्प्रतमस्य राजर्षेरुदन्तं वार्ताम्। 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्' इत्यमरः। प्रत्यक्षीकरिष्यामि। मेनकासंबन्धेन शरीरभूता मे शकुन्तला। तया च दुहितृनिमित्तमादिष्टपूर्वास्मि। किं नु खलु ऋतूत्सवारम्भेऽपि निरुत्सवारम्भमिव राजकुलं दृश्यते। अस्ति मे विभवः सामर्थ्यं प्रणिधानेन सर्वं परिज्ञातुम्। किंतु सख्या मेनकाया आदरो मया मानयितव्यः। भवतु, अनयोरेवोद्यानपालिकयोस्तिरस्करिणीप्रतिच्छन्नान्तधानविद्यया प्रतिच्छन्ना पार्श्ववर्तिनी भूत्वोपलप्स्ये। नाट्येनेति गङ्गावतरणेन। तल्लक्षणं तु—'अङ्घ्रेरुत्क्षेपनिक्षेपावनुप्रोन्नतसन्नतौ। भजेता विपताकौ चेदेवमेव शिरस्तदा॥ गङ्गावतरणम्' इति। 'णिव्वट्टिदं'। इत्याद्येतदन्तेन सानुमत्यात्मश्लाघायाः कृतत्वाद्विचलनं नामाङ्गमुपक्षिप्तम्। तल्लक्षणं **दशरूपके** (१।४८)—'विकत्थना विचलनम्' इति। ततः प्रविशतीति। उद्यानपालिकयोरिति सूचितत्वात्तयोः प्रवेशः। **आतम्मेति**। आताम्रहरितपाण्डुरजीवित सत्यं वसन्तमासस्य। दृष्टोऽसि चूतकोरक ऋतुमङ्गल! त्वां प्रसादयामि॥ अत्र

---

**पाठा०—१** 'आअंबहरिअवेंटं ऊससिसं विअ वसंत°'. २ 'जीविदसव्वं'. ३ 'दिट्ठं चूअकरअं छणमंगलअं णिअच्छामि'

**द्वितीया**—परहुदिए! किं एआइणी मंतेसि? । [परभृतिके! किमेकाकिनी मन्त्रयसे?।]

**प्रथमा**—[1]महुअरिए! चूदकलिअं देक्खिअ उम्मत्तिआ परहुदिआ होदि। [मधुकरिके! चूतकलिकां दृष्ट्वोन्मत्ता परभृतिका भवति!]

**द्वितीया**—(सहर्षं त्वरयोपगम्य) कहं उवट्ठिदो महुमासो? । [कथमुपस्थितो मधुमासः?।]

**प्रथमा**—महुअरिए! [2]तव दाणिं कालो एसो मदविब्भमगीदाणं। [मधुकरिके! तवेदानीं काल एष मदविभ्रमगीतानाम्।]

---

प्रथमसंबोधनेन स्वभावोक्तिः। सत्यमिति शपथे। 'सत्यं च शपथे तथ्ये' इति विश्वः। वसन्तमासस्य जीवितेति रूपकम्। सत्स्वपीतरेषु प्रसूनेषु तदङ्कुरेण ऋतोरुच्छ्वसितत्वमिव गम्यत इति रूपणम्। क्वचित् **'जीवितसर्वम्'** इति पाठः। तदा प्राकृते पूर्वनिपातानियमात्सर्वजीवितेति। अन्यत्र 'वसंतमासस्स जीअसव्वस्स' इति पाठः। जीवितरूपं सर्वस्वमित्यर्थः। अत्र जीवितपदेन 'यावत्तावज्जीविते' इति सूत्रेण विकारस्य लोपे 'जीअं' इति रूपम्। सत्स्वपीतरेषु पुष्पेषु त्वमेवोत्कृष्टतममिति भावः। ऋतुमङ्गलेत्यपि रूपकम्। प्रथमपरिदृश्यमानत्वादृतौ मङ्गलं सर्वत्र मङ्गलेषु प्रथम परिजृम्भमाणत्वादृतौ मङ्गलं सर्वेष्वृतुषु वसन्तस्योत्कृष्टत्वं त्वयैव कृतमिति। ऋतुश्चासौ मङ्गलश्चेति कार्यकारणयोरभेदोपचारात्। परभृतिकायाः कोकिलायाश्चूताङ्कुरप्रसादन युक्तमेव। अत्र 'तुमम्' इति पाठः प्रामादिकः। पञ्चमगणस्य पञ्चमात्रिकत्वापत्तेः। द्वितीयैकवचनादेशे 'तुह' इति पाठेऽपि चरमेऽर्धे पञ्चमके क्लेशमुखालायतिरुक्ता(?)सा विहन्येत। तस्मात् 'तुमं' इति पाठोऽन्याय्यः। तुंतुंतुमंतुवंतुहतुएअमा' अनेन सूत्रेण सप्तादेशा अपि भवन्ति। परभृतिके! किमेकाकिनी मन्त्रयसे?। मधुकरिके! चूतकलिका दृष्ट्वोन्मत्ता परभृतिका भवति, छलात्कोकिलेत्यर्थः। कथमुपस्थितो मधुमासः?। मधुकरिके! तवेदानीं काल एष मदविभ्रमगीतानाम्, छलाद्भ्रमरीत्यर्थः। सखि! अवलम्बस्व मा यावदग्रपादस्थिता भूत्वा चूतकलिका गृहीत्वा कामदेवार्चनं करोमि। यदि ममापि खल्वर्धमर्चनफलस्य। अकथितेऽप्येतत्सपद्यते, यत एकमेव नो जीवितं द्विधा स्थितं शरीरम्। अये, अप्रतिबुद्धः कोमलोऽपि चूतप्रसव एत्थ अत्र वसन्तारम्भे। **'एसो'** इति पाठ एषः। बन्धने वृन्ते भङ्गस्तत्र सुरभिर्भवति।

---

**पाठा०**—१ 'सहि महुअरिए, चूदलदिअं...भोदि।'. २ 'तुहावि'.

**द्वितीया**—सहि! अवलंब मं जाव अग्गपादट्ठिआ भविअ[1] चूदकलिअं गेण्हिअ कामदेवच्चणं करेमि । [सखि! अवलम्बस्व मां यावदग्रपादस्थिता भूत्वा चूतकलिकां गृहीत्वा कामदेवार्चनं करोमि । ]

**प्रथमा**—जइ मम वि खु अद्धं अच्चणफलस्स[2] । [यदि ममापि खल्वर्धमर्चनफलस्य । ]

**द्वितीया**—अकहिदे वि एदं संपज्जइ, जदो एक्कं[3] एव्व णो जीविदं दुधा ट्ठिदं सरीरं । (सखीमवलम्ब्य स्थिता चूताङ्कुरं गृह्णाति) अए, अप्पडिबुद्धो वि चूदप्पसवो एत्थ बंधणभंगसुरमी होदि । (इति कपोतहस्तकं कृत्वा)

**तुमं[4] सि मए चूदंकुर दिण्णो कामस्स गहीदधणुअस्स ।**
**पहिअजणजुवइलक्खो पंचब्भहिओ सरो होहि ॥ ३ ॥**

[अकथितेऽप्येतत्संपद्यते । यत एकमेव नौ जीवितं द्विधा स्थितं शरीरम् । अये, अप्रतिबुद्धोऽपि चूतप्रसवोऽत्र बन्धनभङ्गसुरभिर्भवति ।

त्वमसि मया चूताङ्कुर दत्तः कामाय गृहीतधनुषे ।
पथिकजनयुवतिलक्ष्यः पञ्चाभ्यधिक शरो भव ॥]

(इति चूताङ्कुरं क्षिपति)

---

'संदाने च तथा वृन्ते मायाया बन्धनं स्मृतम्' इति रुद्र । **कपोतहस्तकमिति।** तल्लक्षणं **संगीतरत्नाकरे**—'कपोतोऽसौ करो यत्र श्लिष्टमूलाग्रपार्श्वक । प्रणामे गुरुसंभाषे' इति । **तुमं सीति**। त्वमसि मया चूताङ्कुर दत्त कामाय गृहीतधनुषे । गृहीतधनुष इत्यनेन सर्वदा सज्जत्वं ध्वनितम् । पथिकजनयुवतिलक्ष्यः पञ्चाभ्यधिक· शरो भव । अत्र पञ्चाभ्यधिकत्वे शरस्यासबन्धे संबन्धलक्षणातिशयोक्तिः । अपटीक्षेपेणेति तिरस्करिणीतिरस्कारेत्यर्थ । 'नासूचितस्य पात्रस्य प्रवेशो निर्गमोऽपि च' इत्युक्तेरत्र कञ्चुकिनः सूचनाभावादपटीक्षेपेण प्रवेशः । तत्र कुपितत्वं हेतुः कञ्चुकिलक्षणं पूर्वमुक्तम् । मा तावदिति भिन्नं वाक्यं निषेधे ।

---

**पाठा०**—१ 'भविअ इमिणा पसवेण संपादेमि कामदेवस्स वाअणं ।'. २ 'वाअणफलस्स'. ३ 'एक्कं जेव णो एदं सरीरं ।'. ४ 'अरिहसि मे चूअंकुर दिण्णो कामस्स महिअचावस्स । सच्चविअजुअइलक्खो पंचब्भहिओ सरो होउं ॥'.

(प्रविश्यापटीक्षेपेण कुपितः)

**कञ्चुकी**—मा तावत्। अनात्मज्ञे! [1]देवेन प्रतिषिद्धे वसन्तोत्सवे त्वमाम्रकलिकाभङ्गं किमारभसे?।

**उभे**—(भीते) पसीददु अज्जो। अग्गहीदत्थाओ [2]वेअं। [प्रसीदत्वार्यः। अगृहीतार्थे आवाम्।]

**कञ्चुकी**—[3]न किल श्रुतं युवाभ्यां यद्वासन्तिकैस्तरुभिरपि देवस्य शासनं प्रमाणीकृतं तदाश्रयिभिः पत्रिभिश्च। तथा हि,—

चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः
संनद्धं यदपि स्थितं कुरबकं तत्कोरकावस्थया।
कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं
शङ्के संहरति स्मरोऽपि चकितस्तूणार्धकृष्टं शरम्॥ ४॥

---

अनात्मज्ञे स्वभावानभिज्ञे। देवेन प्रकरणाद्राज्ञा दुष्यन्तेन। किमारभसे किमर्थमारम्भं करोषि? त्वयाप्यधुनारम्भ एव क्रियते। सोऽपि किमर्थमिति भावः। इदमेव कोपकारणम्। प्रसीदत्वार्य। अगृहीतार्थे अगृहीतनिषेधवस्तुस्वरूपे आवाम्। वासन्तिकैरेतत्कालोद्गतपुष्पैस्तरुभिरपि। चेतनैस्तु प्रमाणीकृतमेव। अचेतनैरपीत्यपिशब्दार्थः। शासनमाज्ञा। 'शासनं नृपदत्तोर्व्यां शास्त्राज्ञालेखशास्तिषु' इति हैमः। प्रमाणीकृतमिति गम्योत्प्रेक्षा। वक्ष्यमाणाना वस्तुस्वाभाव्यादेव तथात्वात्। अथवाऽसबन्धे संबन्धरूपातिशयोक्तिश्च। राजाज्ञायास्तत्त्वतोऽसबन्धात्। तदेव दर्शयति—**तथा हीति। चूतानामिति**। चूताना कलिका मञ्जरीति जात्यभिप्रायेणैकवचनम्। 'कलिका'शब्दो बाधितमुख्यार्थोऽभिनवोद्गतसाधर्म्यान्मञ्जरीं लक्षयति। अविकासितत्वं च फलं ज्ञेयम्। चिरनिर्गता शिशिरान्तप्रोद्भिन्नापि। स्वं स्वीयम्। आत्मीयमिति यावत्। अत्यावश्यकत्वं ध्वनितम्। रजः परागं न बध्नाति। न दृष्टं करोतीत्यर्थः। यथा काचन बाला प्रौढतया रजोदर्शनं न यातीति समासोक्तिरपि। संनद्धमपि वृन्ताद्बहिर्निर्गतमपि। 'संनद्ध'शब्दो बाधितमुख्यार्थः सन् यः संनद्धः स युद्धाय बहिर्निर्गच्छतीति बहिर्निर्गमनसाम्यात्कुरबकं लक्षयन्नतिशोभावत्त्वं ध्वनयति। यत्कुरबकं शोणकुरण्टकं पुष्पमिति जातावेकवचनम्। 'तत्र शोणे कुरबकः' इत्यमरः। तत्कोरकावस्थया कलिकावस्थया स्थितम् अत्र कोरकत्वं

---

पाठा०—१ 'देवेनैवं निषिद्धेऽपि मधूत्सवे चूतकलिकाभङ्गमारभसे।'. २ 'अम्हे'. ३ 'हुं। न खलु श्रुतं भवतीभ्यां तावद्वासन्तैस्तरुभिरपि प्रमाणीकृतं देवस्य शासनं तदाश्रयिभिश्च।'.

**उभे**—णत्थि संदेहो । महाप्पहाओ राएसी । [नास्ति संदेहः । महाप्रभावो राजर्षिः । ]

**प्रथमा**—अज्ज ! कति दिअहाइं अम्हाणं मित्तावसुणा रट्ठिएण भट्टिणीपाअमूलं पेसिदाणं ? इत्थं अ णो पमदवणस्स पालणकम्म समप्पिदं । ता आअंतुअदाए अस्सुदपुव्वो अम्हेहिं एसो वुत्तंतो । [आर्य ! कति दिवसान्यावयोर्मित्रावसुना राष्ट्रियेण भट्टिनीपादमूलं प्रेषितयोः ? । इत्थं च नौ प्रमदवनस्य पालनकर्म समर्पितम् । तदागन्तुकतयाऽश्रुतपूर्व आवाभ्यामेष वृत्तान्तः । ]

---

न जहातीति कार्याभावे वक्तव्ये तद्विरुद्धत्वेनोक्तिः । गतेऽपि शिशिरे वसन्तारम्भसमये पुंस्कोकिलानां रुतं शब्दितं कण्ठेषु स्खलितम्, तथाऽस्फुटः कोकिलस्वनो जात इत्यर्थः । अत्र च चिरनिर्गतादेः कारणस्योक्तेः कार्यस्य परागादेर्निषेधान्मालाविशेषोक्तिः । नन्वत्र विरोधवाचकापिशब्दश्रवणाद्विरोधाभास एवास्त्विति चेत्–न; 'कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने । हरतापि तनुं यस्य शंभुना न हृतं बलम् ॥' इत्यादौ सत्यपि 'अपि'शब्दे विशेषोक्तेर्दर्शनात् । उक्तं च **राजानकरुय्यकेन**—'कार्याभावेनेहोपक्रान्तत्वाद्बलवता कारणसत्ताया एव बाध्यमानत्वं न तु तया कार्याभावस्येत्यन्योन्यबाधानुप्राणिताद्विरोधालंकाराद्भेदः' इति । ननु दग्धत्वस्य शक्तिमत्त्वं शक्तिमत्त्वस्य विषय परित्यज्यैवोत्सर्गस्य दग्धत्वं तनुहरणत्वस्य बलहरत्वं तस्य तनुहरणत्वमित्यन्योन्यबाधकत्वं प्रतीयत एवेति चेत्,–सत्यम्, तर्हि यथा विरोधे सत्यपि भिन्नविषयत्वेनासगतेर्न विरोधाभासत्वम्, एवं कारणाभावे कार्यसत्त्वे तत्र च सति तदभाव इत्येवंरूपविषयद्वयपरित्यागेनैव तस्य विषय इति ज्ञेयम् । अपवादविषयं परित्यज्यैवोत्सर्गस्य प्रवृत्तेः । दृश्यते चैतद्व्यतिरिक्तविषयतैवास्य 'जडयति च तापं च कुरुते' ( मालती. १।३० ) 'विशालैरपि भूरिशालैः', 'कुपतिमपि कलत्रवल्लभम्' इत्यादाविति सर्वं निरवद्यम् । स्वभावोक्तिश्च । चकितो भीतः स्मरोऽपि तूणार्धकृष्टं तूणीरादर्धनिष्कासितं शरं संहरतीति । शङ्के इत्युत्प्रेक्षायाम् । अत्र भीतत्वं शरसंहरणमुभयमुत्प्रेक्ष्यम् । कामस्य प्रसूनशरत्वाद्वसन्तपुष्पाणामसकलोत्पन्नत्वादियमुत्प्रेक्षा । अस्या च पूर्ववाक्यत्रयं हेतुत्वेन योज्यम् । काव्यलिङ्गम् । स्थिस्थेति कुरकोरेति रेपुंरोपीति छेकश्रुतिवृत्त्यनुप्रासाः । शार्दूलविक्रीडितं वृत्तम् । नास्ति सदेहः । महाप्रभावो राजर्षिः । तयोः स्त्रीत्वादयथाश्रुतग्राहितया नायकप्रभावातिशयवर्णनीयतया चैवमुत्तरम् । आर्य ! कति दिवसान्यावयोर्मित्रावसुना राष्ट्रियेण भट्टिनीपादमूलं प्रेषितयोः ? ।

---

**पाठा०—१ 'एत्थ संदेहो । महाप्पहावो खु एसो'. २ 'अम्हाणं इध पमदवणे चित्तकम्मं अप्पिदुं । अदो ण सुदपुव्वो'.**

**कञ्चुकी**—[1]भवतु । न पुनरेवं प्रवर्तितव्यम् ।

**उभे**—अज्ज ! कोदूहलं णो । जइ इमिणा जणेण सोदव्वं कहेदु अअं किंणिमित्तं भट्टिणा वसंतुस्सवो [2]पडिसिद्धो । [ आर्य ! कौतूहलं नौ । यद्यनेन जनेन श्रोतव्यं कथयत्वयं किंनिमित्तं भर्त्रा वसन्तोत्सवः प्रतिषिद्धः । ]

**सानुमती**—उस्सवप्पिआ खु मणुस्सा[3] गुरुणा कारणेण होदव्वं । [ उत्सवप्रियाः खलु मनुष्याः । गुरुणा कारणेन भवितव्यम् । ]

**कञ्चुकी**—[4]बहुलीभूतमेतत्किं न कथ्यते । किमत्रभवत्योः कर्णपथं नायातं शकुन्तलाप्रत्यादेशकौलीनम् ? ।

**उभे**—सुदं रट्ठिअमुहादो जाव अंगुलीअदंसणं । [ श्रुतं राष्ट्रियमुखाद्यावदङ्गुलीयकदर्शनम् । ]

**कञ्चुकी**—( आत्मगतम् ) तेन ह्यल्पं कथयितव्यम् । ( प्रकाशम् ) यदैव खलु स्वाङ्गुलीयकदर्शनादनुस्मृतं देवेन सत्यमूढपूर्वा [5]मे तत्रभवती रहसि शकुन्तला मोहात्प्रत्यादिष्टेति । [6]तदाप्रभृत्येव पश्चात्तापमुपगतो देवः । तथा हि,—

**रम्यं द्वेष्टि यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते**
**[7]शय्याप्रान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः ।**

---

कतिचिद्दिनानीत्यन्वय. । इत्थं च नौ प्रमदवनस्य पालनकर्म समर्पितम् । तदागन्तुकतयाऽश्रुतपूर्व आवाभ्यामेष वृत्तान्त. । भवतु, यज्जातं तज्जातमित्यर्थः । आर्य ! कौतूहलं नौ । यद्यनेन जनेन श्रोतव्यम् । अस्य श्रवणयोग्यमित्यर्थः तत्कथयत्वयं किंनिमित्तं भर्त्रा वसन्तोत्सवः प्रतिषिद्ध । उत्सवप्रियाः खलु मनुष्या । गुरुणा कारणेन भवितव्यम् । प्रत्यादेशो निराकृतिस्तल्लक्षणं यत्कौलीनं लोकवादः । 'स्यात्कौलीनं लोकवादे' इत्यमरः । श्रुतं राष्ट्रियमुखाद्यावदङ्गुलीयकदर्शनम् । म इति मया । तथा च **वामनः** ( काव्या. सू. ५।२।१० )—'तेमेशब्दौ निपातौ त्वयामयेत्यर्थे' इति । यदैव स्मृतं देवेन तदाप्रभृतीत्यन्वयः । **रम्यमिति** । रम्यं स्रक्चन्दनचन्द्रपक्षादिकं द्वेष्टि, चक्षुषापि न पश्यतीत्यर्थः । 'यावद्रम्यमुज्ज्वलं च' इत्युक्तेः ।

---

**पाठा०**—१ 'तेन हि पुनरेवं न'. २ 'णिसिद्धो'. ३ 'राआणो होंति । ता गुरुणा'. ४ '( स्वगतम् ) बहुलीभूतोऽयमर्थः किं न कथ्यते । ( प्रकाशम् ) अस्ति...पथमागतं'. ५ 'रहसि मया'. ६ 'तदैव'. ७ 'शय्योपान्त०'.

दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा
गोत्रेषु स्खलितस्तदा भवति च व्रीडाविलक्षश्चिरम् ॥ ५ ॥

सानुमती—पिअं मे । [प्रियं मे ।]

कञ्चुकी—अस्मात्प्रभवतो वैमनस्यादुत्सवः प्रत्याख्यातः ।

उभे—जुज्जइ । [युज्यते ।]

(नेपथ्ये)

एदु एदु भवं । [एतु एतु भवान् ।]

कञ्चुकी—(कर्णं दत्त्वा) अये! इत एवाभिवर्तते देवः । स्वकर्मानुष्ठीयताम्[१] ।

उभे—तह । [तथा ।] (इति निष्क्रान्ते)[२]

---

प्रकृतिभिरमात्यैः पुरा पूर्वं यथा तथा न सेव्यते, पूर्वं तु कार्यापेक्षितयाधुना त्ववसरापेक्षमित्यर्थः । पूर्वं प्रत्यहमधुना न तथा यथापूर्वं प्रत्यहमित्युभयं विधेयम् । शय्यानाम् । न शय्यायाः प्रान्तेषु, न मध्ये । यानि विवर्तनानि परिलुण्ठनानि । न स्वापः । तैरुन्निद्रो गतनिद्र एवेति पूर्वत्र हेतुत्वेन योज्यम् । क्षपा निशाः । न तु निशाम् । विगमयतीति विरुद्धं यथा स्यात्तथाऽतिवाहयति, न तु गच्छति । यदन्तःपुरेभ्यो देवीभ्यो दाक्षिण्येनात्यन्तानुरोधेन । 'दाक्षिण्यं नाम बिम्बोष्ठि! बैम्बिकाना कुलव्रतम्' इत्युक्तेः । एतेनात्यावश्यकत्वं ध्वनितम् । उचितामित्यवश्यापेक्षणीयत्वं ध्वनितम् । ईदृशी वाचं ददाति । तदा गोत्रेषु नामसु । 'गोत्रं तु नाम्नि च' इत्यमरः । स्खलितोऽन्यनामग्रहे कृतान्यनामग्रहः संश्चिरमतिकालं व्रीडया लज्जया विलक्षो विस्मयान्वितो भवति । 'विलक्षो विस्मयान्वित' इत्यमरः । अहं राजा दुष्यन्तो ममाप्येतादृश्यवस्थेति स्वमनस्येव सविस्मय इत्यर्थः । अत्र पश्चात्तापादिके कारणे वक्तव्ये यत्तत्कार्यस्य रम्यद्वेषादेर्वचनं तत्पर्यायोक्तम् । काव्यलिङ्गं च । पुराप्रेति प्रप्रेति क्षक्षीति छेकवृत्त्यनुप्रासौ । वृत्तमनन्तरोक्तम् । प्रियं मे । अस्माद्वैमनस्यादिति व्यधिकरणे पञ्चम्यौ । अस्मात्कारणात्प्रभवतः समर्थात् अधिकादित्यर्थः । वैमनस्यादुद्वेगात् । युज्यते 'प्रविश्यापटीक्षेपेण' इत्याद्येतदन्तेन द्युतिनामकमङ्गमुपक्षिप्तम् । तल्लक्षणं **दशरूपके** (१।४६)—'तर्जनोद्वेजने द्युतिः' इति । एतु एतु भवान् । तह इति तथेति । प्रतीहारीलक्षणमुक्तं प्राक् । अहो आश्चर्ये । सर्वावस्थास्वित्यर्थान्तरन्यास एवमित्यादेरुत्तरवाक्यार्थस्य समर्थकः । सर्वासु यदा यादृश्यो या उपस्थितास्तासु तादृूप्येण रमणीयत्वमित्यर्थः । उत्सुक उत्क-

---

**पाठा०**—१ 'तद्गच्छतम्'. २ '(इत्युभे निष्क्रान्ते)'.

( ततः प्रविशति पश्चात्तापसदृशवेषो राजा विदूषकः प्रतीहारी च )

**कञ्चुकी**—( राजानमवलोक्य ) अहो सर्वास्ववस्थासु रमणीयत्व[1]-माकृतिविशेषाणाम् । एवमुत्सुकोऽपि[2] प्रियदर्शनो देवः । तथा हि,—

**प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठार्पितं[3]**
**बिभ्रत्काञ्चनमेकमेव वलयं श्वासोपरक्ताधरः ।**
**चिन्ताजागरणप्रतान्तनयनस्तेजोगुणादात्मनः[4]**
**संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते ॥६॥**

---

ण्ठित', विरह्यपीत्यर्थ' । एतदवस्थाया अन्यत्र प्रियदर्शनत्वं 'अपि'शब्दद्योत्यम् । अत एवार्थान्तरन्यासे 'विशेष'पदम् । तथा हीत्युभयपरामर्श. । स एव पद्ये वाच्येन पूर्वांशस्य व्यङ्ग्येनोत्तरांशस्येति ज्ञेयम् । **प्रत्यादिष्टेति** । प्रत्यादिष्टो निराकृतो विशेषमण्डनस्य प्रक्षेप्यस्याङ्गुलीयककुमुदादेर्विधिर्धारणविधिर्येन सः । अनेन 'अङ्गान्यभूषितान्येव प्रक्षेप्याद्यैर्विभूषणै' । येन भूषितवद्भान्ति तद्रूपमिह कथ्यते' इति रूप ध्वनितम् । वामस्य प्रकोष्ठस्य मणिबन्धोर्ध्वभागस्यार्पितं दत्तम् । 'प्रकोष्ठे विस्तृतकरे रूपकक्षान्तरेऽपि च । कूर्परादधरे चापि' इति विश्वः । काञ्चन-मेवेत्यन्यासंस्पृष्टत्वेनातिशीतलत्वं ध्वनितम् । 'वलयम्' इत्येकवचनं द्वितीयस्य वोढुम-सामर्थ्यात् । बिभ्रत् । अभ्यस्तत्वान्न नुम् । 'वाम'ग्रहणेन बिरुदार्थमवश्यं धारणमु-क्तम् । अत एकं मुख्यं सर्वदा सत्त्वात् । 'एके मुख्यान्यकेवला ' इत्यमरः । अत एव वामप्रकोष्ठस्यार्पितं दत्तमिति भूतत्वं च । एतन्मात्रेणैव विशेषो ध्वनितः । श्वासेन विरहित्वादुष्णेनोपरक्त' पाटलो न तु रूक्षोऽधरो यस्य स' । तादृशस्यैव शोभायुक्तत्वं च ध्वनितम् । चिन्तया शकुन्तलागतया यज्जागरणं तेन प्रकर्षेण तान्ते म्लाने नयने यस्य सः । जागरणेन रक्तप्रान्तत्वं तेन च शोभातिशययोगित्वं च ध्वनितम् । एषु स्वभावोक्तिः परिकरालंकारश्च । आत्मनस्तेजो गुणाद्दीप्तिलक्षणा-त्क्षीणोऽपि कृशोऽपि क्षीणत्वेन नालक्ष्यते । क इव ? संस्कारार्थमुद्धृष्टो महामणि-रिव । महाशब्देन जात्यत्वं सर्वगुणविशिष्टत्वं महत्त्वं च ध्वनितम् । यथा शाणो-ल्लिखितो महामणि. स्वतेजसा क्षीणो न दृश्यते तद्वदित्युपमा । अनेन महामण्युप-मानेनास्य क्षीणत्वेऽप्यन्त.सारता सर्वदा दृश्यमानत्वेऽप्यवितृप्तता च ध्वनिना । प्रप्रेति ष्टष्टेति तान्तेति क्षीक्ष्येति छेकश्रुतिवृत्त्यनुप्रासा. । अथ चिन्तेति सकल्पः, जागरेति निद्राच्छेदः, क्षीण इति तनुता, प्रत्यादिष्टेति विषयनिवृत्ति , इति कामा-वस्था अपि सूचिताः । वृत्तमनन्तरोक्तम् । अथ चानेन नायकसात्त्विकगुणेषु

---

पाठा०—१ 'रामणीयक'. २ 'तथा ह्येवं वैमनस्यपरीतोऽपि प्रिय०'. ३ '°वामप्रकोष्ठे श्लथं'. ४ '°प्रताम्रनयनस्तेजोगुणैरात्मनः'.

**सानुमती**—( राजानं दृष्ट्वा ) ठाणे खु पच्चादेसविमाणिदा वि इमस्स किदे सउंदला किलम्मदि त्ति । [ स्थाने खलु प्रत्यादेशविमानिताप्यस्य कृते शकुन्तला क्लाम्यतीति । ]

**राजा**—( ध्यानमन्दं परिक्रम्य )

**प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम् ।**
**अनुशयदुःखायेदं हतहृदयं संप्रति विबुद्धम् ॥ ७ ॥**

**सानुमती**—णं ईदिसाणि तवस्सिणीए भाअहेआणि । [ नन्वीदृशानि तपस्विन्या भागधेयानि । ]

**विदूषकः**—( अपवार्य ) लंघिदो एसो भूओ वि सउंदलावाहिणा । ण आणे कहं चिकिच्छिदव्वो भविस्सदि त्ति । [ लङ्घित एष भूयोऽपि शकुन्तलाव्याधिना । न जाने कथं चिकित्सितव्यो भविष्यतीति । ]

---

माधुर्यनामा गुण उपक्षिप्त. । तल्लक्षणं तु—'तन्माधुर्यं यत्र गात्रदृष्ट्यादे स्पृहणीयता । सर्वावस्थासु सर्वत्र' इति । अन्ये आचार्या. प्रवासविप्रलम्भेऽन्याः कामदशा आहुः ( सा. द. ३।२०५-६ )—'अङ्गेष्वसौष्ठवं चैव पाण्डुता कृशताऽरुचिः । अधृतिः स्यादनालम्बस्तन्मयोन्मादमूर्च्छना । मृतिश्चेति क्रमाज्ज्ञेया दश स्मरदशा इह ॥' इति । 'प्रत्यादिष्ट–' इत्यादिनाङ्गेष्वसौष्ठवम्, 'क्षीण.' इत्यनेन कृशता, 'रम्यं द्वेष्टि यथा पुरा' इति पूर्वपद्येऽरुचि । 'अरुचिर्वस्तुवैराग्यम्' इत्युक्तेः । दाक्षिण्येत्यादिना धृति. । 'सर्वत्रारागिता धृतिः' इत्युक्ते. । स्थाने युक्तं खलु प्रत्यादेशेन निराकरणेन विमानिताप्यस्य कृते शकुन्तला क्लाम्यतीति । तत्स्थान इत्यन्वयः । ध्यानमन्दमित्यनेनालम्बनतोक्ता । 'अनालम्बनता वापि शून्यता मनसः स्मृता' इत्युक्ते । **प्रथममिति** । सारङ्गो हरिणस्तस्येक्षणे इवेक्षणे यस्यास्तया । अनेन तद्दर्शनमात्रेण प्रतिबोध उचित इति ध्वन्यते । तत्रापि प्रिययात्यन्तहृद्यया शकुन्तलया प्रतिबोध्यमानमपि । स्वत एव प्रतिबोध उचितः, स नास्त्यपि तु प्रयत्नेनापि प्रतिबोध्यमान सुप्तं मोहमुपागतम् । अत एव हतहृदयं दुष्टहृदयं संप्रत्यधुनानुशयदु खाय पश्चात्तापदु खाय विबुद्धम् । अत्र पूर्वार्धे विशेषोक्ति । अत्र प्रतिबोधाभावस्तद्विरुद्धेन 'सुप्त'पदेनोक्तः । उत्तरार्धे विभावनोपमानुप्रासौ च नन्वीदृशानीति राजोक्तानुवादः । तपस्विन्या अनुकम्पार्हाया भागधेयानि भाग्यानि । 'तपस्वी चानुकम्पार्हः' इत्यमरः । लङ्घित एष भूयोऽपि शकुन्तलाव्याधिना शकुन्तलायाः सकाशाद्यो व्याधिस्तेन । अथवा रूपकम् । शकुन्तलैव व्याधिरुद्वेगदायित्वात् । न

---

पाठा०—१ कारणादो'. २ '( स्वगतम् ) भूओ वि एसो सउंदलावादेण'.

**कञ्चुकी**—(उपगम्य) [1]जयतु जयतु देवः । महाराज ! प्रत्यवेक्षिताः प्रमदवनभूमयः । यथाकाममध्यास्तां विनोदस्थानानि [2]महाराजः ।

**राजा**—वेत्रवति ! मद्वचनाद[3]मात्यमार्यपिशुनं ब्रूहि । [4]चिरप्रबोधनान्न संभावितमस्माभिरद्य धर्मासनमध्यासितुम् । यत्प्रत्यवेक्षितं पौरकार्यमार्येण तत्पत्रमारोप्य [5]दीयतामिति ।

**प्रतीहारी**—जं देवो आणवेदि । [यद्देव आज्ञापयति ।] (इति निष्क्रान्ता)

**राजा**—[6]वातायन ! त्वमपि स्वं नियोगमशून्यं कुरु ।

**कञ्चुकी**—[7]यदाज्ञापयति देवः । (इति निष्क्रान्तः)

**विदूषकः**—किदं भवदा णिम्मच्छिअं । सपदं [8]सिसिरातवच्छेअरमणीए इमस्सि पमदवणुद्देसे अत्ताणं रमइस्ससि । [कृतं भवता निर्मक्षिकम् । साम्प्रतं शिशिरातपच्छेदरमणीयेऽस्मिन्प्रमदवनोद्देश आत्मानं रमयिष्यसि ।]

**राजा**—वयस्य ! [1]रन्ध्रोपनिपातिनोऽनर्था इति यदुच्यते [9]तदव्यभिचारि वचः । कुतः

**मुनिसुताप्रणयस्मृतिरोधिना**
**मम च मुक्तमिदं तमसा मनः ।**

---

जाने कथं चिकित्सितव्यो भविष्यतीति । प्रत्यवेक्षिता· प्रमदवनभूमय· इति राज्ञो नि.शङ्कसचारार्थं प्रत्यवेक्षणमिति नीति । 'विज्ञेयं प्रमदवनं नृपस्तु यस्मिञ्छुद्धान्तैः सह रमते पुरोपकण्ठम्' इति हलायुधः । चिरकालेन प्रबोधनाज्जागरणात् । यद्देव आज्ञापयतीति । वातायनेति कञ्चुकिनाम । नियोगमधिकारम् । कृतं भवता निर्मक्षिकम् । साप्रतं शिशिरातपच्छेदरमणीये । नाप्यत्यन्तं शिशिरं नाप्यातपः । अस्मिन्प्रमदवनोद्देश आत्मानं रमयिष्यसि । रन्ध्रोपनिपातिनः । 'छिद्रेष्वनर्था बहुलीभवन्ति' (पं त. २.१७५) इत्युक्ते । **मुनीति** । मुनिसुताया शकुन्तलायाम् । राज्ञो मुनिसुतात्वेन प्रत्यभिज्ञानात्तथोक्तिः । य प्रणयः प्रेमा तस्य स्मृतिस्तस्या रोधिना तमसा मोहेनेदं मम मनो मुक्तम् । प्रहरिष्यता मनसिजेन कन्दर्पेण धनुषि चूतशरो

---

**पाठा०**—१ 'जयति जयति महाराजः'. २ 'देव.'. ३ '°दमात्यपिशुनं'. ४ 'अद्य चिर°'. ५ 'प्रस्थाप्यतामिति'. ६ 'पार्वतायन'. ७ 'तथा'. ८ 'सिसिरविच्छेदरमणीए इमस्सिं उज्जाणे अत्ता°'. ९ 'तदव्यभिचारि । पश्य—'.

---

**टिप्प०**—1 तथा भर्तृहरिरप्याह—'प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः' इति ।

मनसिजेन सखे! प्रहरिष्यता
धनुषि चूतशरश्च निवेशितः[१] ॥ ८ ॥

**विदूषकः**—[२]चिट्ठ दाव, इमिणा दंडकट्ठेण कंदप्पवाहिं णासइस्सं। [तिष्ठ तावत्; अनेन दण्डकाष्ठेन कन्दर्पव्याधिं नाशयिष्यामि।] (इति दण्डकाष्ठमुद्यम्य चूताङ्कुरं पातयितुमिच्छति)

**राजा**—(सस्मितम्) भवतु; दृष्टं ब्रह्मवर्चसम्। सखे! [३]क्वोपविष्टः प्रियायाः किंचिदनुकारिणीषु लतासु दृष्टिं विलोभयामि।

**विदूषकः**—[४]णं आसण्णपरिआरिआ चदुरिआ भवदा संदिट्ठा–माहवीमंडवे इमं वेलं अदिवाहिस्सं। तहिं मे चित्तफलअगदं सहत्थलिहिदं तत्तहोदीए सउंदलाए पडिकिदिं आणेहि त्ति। [नन्वासन्नपरिचारिका चतुरिका भवता संदिष्टा—माधवीमण्डप इमां वेलामतिवाहयिष्ये। तत्र मे चित्रफलकगतां स्वहस्तलिखितां तत्रभवत्याः शकुन्तलायाः प्रतिकृतिमानयेति।]

**राजा**—[५]ईदृशं हृदयविनोदनस्थानम्। तत्तमेव मार्गमादेशय।

**विदूषकः**—इदो इदो भवं। [इत इतो भवान्।]

(उभौ परिक्रामत, सानुमत्यनुगच्छति)

---

निवेशितश्च, मम तद्वियोगो वसन्तकालश्च प्रादुरभूदित्यर्थः। चावेककालत्वं द्योतयतः। समुच्चयालंकारः। **भोजेन** तु (स. कं. ३।४२)—'अदृष्टादपि स्मरणे स्मरणालंकारः' इत्युक्त्वा तदलंकार इदमुदाहृतम्। अनुप्रासश्च। द्रुतविलम्बितं वृत्तम्। तिष्ठ तावत्। अनेन दण्डकाष्ठेन कन्दर्पव्याधिं नाशयामि। कन्दर्परूपो व्याधिर्यस्मादिति 'कन्दर्पव्याधि'शब्देन चूताङ्कुर उक्त इति ज्ञेयम्। नन्वासन्ना परिचारिका चतुरिका भवता संदिष्टा। परिचारिकालक्षणं **मातृगुप्ताचार्यै**रुक्तम्—'संवाहने च गन्धे च तथा चैव प्रसाधने। तथाभरणसंयोगमाल्यसंग्रथनेषु च ॥ विज्ञेया नामतः सा तु नृपतेः परिचारिका ॥' इति। माधवीमण्डपे वासन्तीमण्डप इमां वेलामतिवाहयिष्ये। तत्र मे चित्रफलकगतां स्वहस्तलिखितां तत्रभवत्याः शकुन्तलायाः प्रतिकृतिमानयेति। ईदृशं हृदयविनोदनस्थानमिति प्रश्नः। तत्तस्मात्तमेव

---

**पाठा०–१ 'अपि च–उपहितस्मृतिरङ्गुलिमुद्रया प्रियतमामनिमित्तनिराकृताम्। अनुशयादनुरोदिमि चोत्सुकः सुरभिमास सुखं समुपस्थितम्।'. २ 'भो वअस्स, चिट्ठ...कंदप्पबाणं णासेमि'. ३ 'क्वेदानीमुपविष्टः ..विनोदयामि' ४ 'णं भवदा...लिविअरी मेधाविणी आदिट्ठा।'. ५ 'ईदृशमेव मे हृदयप्रत्याश्वासनम्। तत्तदेवादेशय माधवीलतागृहम्।'.**

---

**टिप्प०–1** नायकस्य सर्वगुणसम्पन्नत्वं सर्वकलाचातुर्यं च प्रदर्शयितुमनुगुणोऽयं प्रसङ्गः, अत एवात्र नाटकान्तरेऽपि सविधानकमालोच्य चित्रलेखः कविनोपन्यस्तः।

**विदूषकः**—एसो मणिसिलापट्टअसणाहो [1]माहवीमंडवो उवहाररमणिज्जदाए णिस्संसअं साअदेण विअ णो पडिच्छदि। ता पविसिअ णिसीददु भवं। [एष मणिशिलापट्टकसनाथो माधवीमण्डप उपहाररमणीयतया निःसंशयं स्वागतेनेव नौ प्रतीच्छति। तत्प्रविश्य निषीदतु भवान्।]

( उभौ प्रवेशं कृत्वोपविष्टौ )

**सानुमती**—लदासंस्सिदा देक्खिस्सं द्वाव सहीए पडिकिर्दि। तदो से भत्तुणो बहुमुहं अणुराअं णिवेदइस्सं। [लतासंश्रिता द्रक्ष्यामि तावत्सख्याः प्रतिकृतिम्। ततोऽस्या भर्तुर्बहुमुखमनुरागं निवेदयिष्यामि।]

( इति तथा कृत्वा स्थिता )

**राजा**—सखे! सर्वमिदानीं [1]स्मरामि शकुन्तलायाः [2]प्रथमवृत्तान्तम्। कथितवानस्मि भवते च। स भवान्[3]प्रत्यादेशवेलायां मत्समीप[4]गतो नासीत्। [5]पूर्वमपि न त्वया कदाचित्संकीर्तितं तत्रभवत्या नाम। कच्चिदहमिव विस्मृतवानसि त्वम्।

**विदूषकः**—ण विसुमरामि। किंतु सवं कहिअ अवसाणे उण तुए परिहासविअप्पओ एसो ण भूदत्थो त्ति आचक्खिदं। मए वि मिप्पिंडबुद्धिणा तह एव्व गहीदं। अहवा भविदव्वदा खु बलवदी। [न विस्मरामि। किंतु सर्वं कथयित्वाऽवसाने पुनस्त्वया परिहासविजल्प एष न भूतार्थ इत्याख्यातम्। मयापि मृत्पिण्डबुद्धिना तथैव गृहीतम्। अथवा भवितव्यता खलु बलवती।]

---

मार्गं माधवीलतामण्डपमार्गमादेशय। इत इतो भवान्। एष मणिशिलापट्टकसनाथो माधवीलतामण्डप उपहार पुष्पोपहारस्तेन रमणीयता तया निःसंशयं स्वागतेनेव नौ आवां प्रतीच्छति। तत्प्रविश्य निषीदतु भवान्। लतासंश्रिता द्रक्ष्यामि तावत्सख्याः प्रतिकृतिम्। ततस्तस्या भर्तुर्बहुमुखमनेकप्रकारमनुरागं निवेदयिष्यामि। इदानीं शकुन्तलायाः सर्वं प्रथमवृत्तान्त स्मरामीति सबन्ध। प्रत्यादेशवेलाया निराकरणसमये। न विस्मरामि। कि तु सर्वं कथयित्वाऽवसाने पुनः त्वया

---

**पाठा०**—१ 'माधवीलदामडवो'. २ 'प्रथमदर्शन०' ३ 'प्रत्याख्यानकाले'. ४ '०गत एव नासीत्'. ५ 'प्रथममपि तत्रभवत्याः कीर्तितं नाम मया...त्वमपि।'.

---

**टिप्प०**—1 दैवघटितो दुर्वासशापजनितोऽय मोह इति दुष्यन्तो न दोषभाक्, अग्निदिव्यपरीक्षिताया देव्या सीताया रामेण त्यागस्तु स्वेच्छानुष्ठित प्रजाप्रवादभियेति द्वयोर्भेदः। कविकल्पनेय नायकोत्कर्षसपादनार्थं कालिदासलेखनीप्रसूता।

**सानुमती**—एव्वं णेदं । [एवमेवैतत् ।]

**राजा**—( ध्यात्वा ) सखे ! त्रा[1]यस्व माम् ।

**विदूषकः**—भो ! किं एदं ? अणुववण्णं खु ईदिसं तुइ । कदा वि सप्पुरिसा सोअवत्तव्वा ण होंति । णं पवादे वि[2] णिक्कंपा गिरीओ । [ भोः ! किमेतत् ? अनुपपन्नं खल्वीदृशं त्वयि । कदापि सत्पुरुषाः शोकवक्तव्या न भवन्ति । ननु प्रवातेऽपि निष्कम्पा गिरयः । ]

**राजा**—वयस्य ! निराकरणविक्लवायाः प्रि[3]यायाः समवस्थामनुस्मृत्य बलवदशरणोऽस्मि । सा हि,—

इतः प्र[4]त्यादेशात् स्वजनमनुगन्तुं व्यवसिता
मु[5]हुस्तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।
पुनर्दृष्टिं बाष्पप्रसरकलुषामर्पितवती
मयि क्रूरे यत्तत्सविषमिव शल्यं दहति माम् ॥ ९ ॥

---

'परिहासविजल्प एष न भूतार्थः सत्यार्थः' ( २।१८ ) इति । 'वृत्ते क्ष्मादावृते भूतम्' इत्यमरः । आख्यातम् । मयापि मृत्पिण्डबुद्धिना तथैव गृहीतम् । अथवा भवितव्यता खलु बलवती । एवमेवैतत् । भोः ! किमेतत् ? अनौचित्यमित्यर्थः । अनुपपन्नं खल्वीदृशं त्वयि सर्वदा धीरे राज्ञि स्वयं दुष्यन्ते । कदापि सत्पुरुषाः शोकवक्तव्या न भवन्ति । शोके जातेऽन्येन वक्तव्या न भवन्तीत्यर्थः । अप्रस्तुतप्रशंसा । तत्र दृष्टान्तमाह—ननु प्रवातेऽप्यतिशयितवातेऽपि निष्कम्पा गिरय । निराकरणेन विक्लवाया विह्वलाया । बलवदधिकम् । **इत इति** । अनुगन्तुं व्यवसिता प्रयत्नं कुर्वाणा मुहुरनन्तरमुच्चैस्तिष्ठेति गुरो पितुः शिष्यस्तस्मिन्गुरुसमे कण्वसमे वदति सति पुनरनन्तरं बाष्पस्याश्रुण प्रसर आधिक्य तेन कलुषामाविला दृष्टिं । क्रूरे कठिने । इदं व्यङ्ग्यावकाशदानाय । यथा—( ध्वन्या ३।१६ ) 'तद्गेहं नतभित्तिमन्दिरम्' इत्यादौ । मयि निर्घृणहृदये परोपकारानिरते तादृशनिरुपाधिवञ्चकेऽलीकधर्मकञ्चुक इत्यर्थान्तरसंक्रमितवाच्यम् । अर्पितवती यत्तन्मा दहति । अत्र दृष्टेर्दाहकत्वासंभवान्मुख्यार्थबाधे कार्यकारणसबन्धात्ताप लक्षयंस्तदतिशयं व्यञ्जयतीति 'दहति'पदमत्यन्ततिरस्कृतवाच्यम् । किमिव ? सविषं विषाक्तं शल्यमिव । 'शल्यं शङ्कौ शरे वंशे कम्बिकाया च तोमरे' इति विश्वः । उपमानुप्रासौ । तादृशदृष्टेस्तादृशे-

---

**पाठा०—१ 'परित्रायस्व'. २ 'णिक्कंपा जेव गिरीओ'. ३ 'सख्यास्तामवस्था°'. ४ 'प्रत्यादिष्टा'. ५ 'स्थिता तिष्ठे°'.**

**सानुमती**—अम्महे[1], ईदिसी स्वकज्जपरदा। इमस्स संदावेण अहं रमामि। [अहो, ईदृशी स्वकार्यपरता। अस्य संतापेनाहं रमे।]

**विदूषकः**—भो! अत्थि मे तक्को—केण वि तत्तहोदी आआससंचारिणा णीदे त्ति। [भोः! अस्ति मे तर्कः—केनापि तत्रभवत्याकाशसंचारिणा नीतेति।]

**राजा**—कः[2] पतिदेवतामन्यः परामर्ष्टुमुत्सहेत[3]? मेनका किल सख्यास्ते जन्मप्रतिष्ठेति[4] श्रुतवानस्मि। तत्सहचारिणीभिः सखी ते हृतेति मे हृदयमाशङ्कते।

**सानुमती**—संमोहो खु विम्हअणिज्जो ण पडिबोहो। [संमोहः खलु विस्मयनीयो न प्रतिबोध.।]

**विदूषकः**—जइ एव्वं अत्थि खु समाअमो कालेण तत्तहोदीए। [यद्येवमस्ति खलु समागमः कालेन तत्रभवत्या।]

**राजा**—कथमिव?।

**विदूषकः**—ण खु मादापिदरा[5] भत्तुविओअदुक्खिअं दुहिदरं पेक्खिदुं[6] पारेंति। [न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं द्रष्टुं पारयतः।]

---

ऽर्पणात्समं च। गुरुशिष्ये गुरुसम इत्यत्र कथितपदत्वं न शङ्कनीयम्। तात्पर्यभेदेन लाटानुप्रासार्थमेव तथा प्रयुक्तत्वात्। उत्तरत्र पदे वचनस्याकारित्वभयकारणत्वद्योतनादितात्पर्यमवगन्तव्यम्। शिखरिणी वृत्तम्। 'अम्महे' आश्चर्ये। ईदृशी स्वकार्यपरतेत्यर्थान्तरन्यासः। अस्य सतापेनाहं रमे, मम सतोष इत्यर्थः। सतापे संतोष इति विषमम्। एतद्वाक्यार्थसमर्थकः पूर्वोक्तोऽर्थान्तरन्यास। यथा यथाऽस्य तापस्तथा तथा शकुन्तलानयनोपायं प्रति प्रयत्नवान् भविष्यतीत्याशयः। अस्ति मे तर्कः। केनापि तत्रभवत्याकाशसचारिणा नीतेति। पतिदेवता पतिव्रता परामर्ष्टुं स्प्रष्टुम्। जन्मप्रतिष्ठा जन्मस्थानम्। 'प्रतिष्ठा स्थानमात्रके' इति विश्वः। संमोहः खलु विस्मयनीयोऽस्वभावत्वात्, न प्रतिबोधः। स्वाभाव्यात्तस्ये-

---

**पाठा—१ 'इमस्स ईदिसी अकज्ज°...संतावेदि।'. २ 'कः पतिव्रतां तामन्यः'. ३ '°मुत्सहते'. ४ 'सखीजनादस्मि श्रुतवान्।°. ५ 'मादा पिदा वा भत्तुविरहिदं चिरं दुहिदरं पेक्खिदुं पारेंदि।'. ६ 'चिरं देक्खिदुं'.**

राजा—वयस्य !

स्वप्नो नु माया नु मतिभ्रमो नु
क्लिष्टं नु तावत्फलमेव पुण्यम् ।
असंनिवृत्त्यै तदतीतमेते
मनोरथा नाम तटप्रपाताः ॥ १० ॥

**विदूषकः**—मा एव्वं; णं अंगुलीअअं एव्व णिदंसणं अवस्सभावी अचिंतणिज्जो समाअमो होदि त्ति । [मैवम्; नन्वङ्गुलीयकमेव निदर्शनमवश्यंभाव्यचिन्तनीयः समागमो भवतीति ।]

---

त्यर्थः । यद्येवमस्ति खलु समागमः कालेन तत्रभवत्या. पूज्याया. । न खलु मातापितरौ भर्तृवियोगदु खिता दुहितरं द्रष्टुं पारयत. शक्नुतः । न खल्विति सबन्धः । **स्वप्न इति** । तच्छकुन्तलालक्षणं वस्त्वसंनिवृत्त्यै पुनर्निवर्तनाभावाय । अनेनोत्कण्ठातिशयो व्यज्यते । अतीतं गतम् । तत्र स्वप्नादिभिश्चतुर्भिर्वितर्कैरत्यन्तासंभावनीयदर्शनीयत्वं व्यज्यते । तत्र 'अदृष्टमप्यर्थमदृष्टवैभवात्करोति सुप्तिर्जनदर्शनातिथिम्' इत्युक्ते· । स्वप्ने संभाव्यत एतदिति 'स्वप्नो नु' इति पूर्ववितर्क· । स्वप्नश्चेत्स्याज्जाग्रदवस्थाया नानुभूयत इत्यत आह—**माया न्विति** । मन्त्रतन्त्राभ्यामसत. प्रकटनं माया, तस्याः कपटघटितत्वाद्विषयसत्त्वाभाव इति भाव. । स्यादेवं यद्यधिष्ठानं न प्रतीतं स्यादत आह—**मतिभ्रमो न्विति** । तेनान्याधिष्ठाने शकुन्तलाभ्रम इत्यर्थः । स्यादेवं यदि व्यवहारक्षमत्वं न स्यादत आह—तावत्फलमत एव क्लिष्टं पुण्यं न्विति । यावान्व्यवहार· सभाषणादिर्जातस्तावदेव फलं यस्य तत्क्लिष्टमत्यल्पम् । तादृश कश्चिदत्युत्कृष्टो धर्म· पूर्वजननेऽत्यल्प एवाचरितः, यस्य तादृगल्पं फलमित्यर्थ । संदेहालंकार. । अत परमेते त्वयोच्यमाना मया वा आशास्यमाना मनोरथा । नामेत्यलीके । अलीका मनोरथा इत्यर्थ । ते तटप्रपाता इति भिन्नरूपकम् । यथा वर्षासमये गङ्गादेस्तटा ओघेन पीड्यमाना अहमहमिकया पतन्ति । एकः पतति तदुपर्यन्यस्तदुपरीतरः । एवं मनोरथानामेके विलीयन्तेऽन्य उत्पद्यन्ते तेऽपि विलीयन्ते तदितरे उत्पद्यन्त इत्यर्थ. । 'प्रपातस्त्वतटो भृगुः' इति कोशात्पुनरुक्तवदाभास. । नुमानुमेति तमेमतेति छेकवृत्त्यनुप्रासौ । द्वादश्युपजातिरिन्द्रवज्रोपेन्द्रवज्रयोः । मैवम्; नन्वङ्गुलीयकमेव निदर्शनमुदाहरणम् । अवश्यंभाव्यचिन्तनीय. समागमो भवतीति । विदूषकः

---

पाठा०—१ 'क्लृप्तं नु'. २ 'पुण्यः'. ३ 'तदतीव मन्ये'. ४ 'मनोरथानामतटप्रपातम् ।'.

**राजा**—( अङ्गुलीयकं विलोक्य ) अये ! इदं तावदसुलभस्थानभ्रंशि शोचनीयम् ।

**तव सुचरितमङ्गुलीय ! नूनं**
**प्रतनु ममेव विभाव्यते फलेन ।**
**अरुणनखमनोहरासु तस्या-**
**श्च्युतमसि लब्धपदं यदङ्गुलीषु ॥ ११ ॥**

---

'जइ एव्वं' इत्यादिनैतदन्तेन प्ररोचना नामाङ्गमुपक्षिप्तम् । तल्लक्षणं **दशरूपके** ( १।४७ )—'सिद्धामन्त्रणतो भाविदर्शिका स्यात्प्ररोचना' इति । न सुलभमसुलभं तच्च तत्स्थानं च तस्माद्भ्रंशोऽस्यास्ति तत्, शकुन्तलाङ्गुलिभ्रंशीत्यर्थः । अत एव शोचनीयम् । **तवेति** । हे अङ्गुलीय ! नूनं निश्चितं तव सुचरितं पुण्यं ममेव प्रतन्वल्पं विभाव्यते ज्ञायते । अतीन्द्रियस्य धर्मस्य प्रतनुत्वं कथं ज्ञातुं शक्यत इत्यत आह—**फलेनेति** । अत्यल्पफलत्वेन हेतुनेत्यर्थः । ममेवेति सहोपमा । तेन ममापि पुण्यमल्पं तवापीत्यर्थः । तत्र स्वस्याल्पपुण्यत्वे हेतुः पूर्वं दर्शितः । अस्याल्पपुण्यत्वे हेतुमाह—**अरुणेति** । यस्मात्तस्या विजितत्रिभुवनसुन्दर्या मयि निर्व्याजमनुरक्तायाः पुरः परिस्फुरन्त्या इवाङ्गुलीषु पुरुषाङ्गुलीयस्य स्थूलत्वात्कदाचित्कनिष्ठिकाया तत्र शिथिलं सदन्याङ्गुलौ तत्रापि तथाविधमितराङ्गुल्यामिति बहुवचनाभिप्रायः । प्रेमातिशयेन वा सर्वाङ्गस्पृष्टिकेव सर्वाङ्गुलीषु निक्षेपः । यद्वा,—विरहातिकृशतया मुकुलीकृतासु पञ्चस्वङ्गुलीषु विन्यासाद्बहुवचनोपपत्तिः । तथा चाभियुक्ताः—'तस्याः किंचित्सुभग ! तदभूत्तानव त्वद्वियोगाद्येनाकस्माद्वलयपदवीमङ्गुलीयं प्रयाति' इति । लब्धपदं महता भाग्योदयेन यथाकथंचित्प्राप्तस्थित्यपि सच्च्युतमसि । कीदृशीष्वङ्गुलीषु ? अरुणा नखा यासु ताः । नखेति तलस्याप्युपलक्षणम् । ताश्च ता मनोहराश्च नातिस्थूला नातिकृशा नातिह्रस्वा नातिदीर्घा न वक्राः न सरला इत्यर्थः । एतेन स्वयोग्यत्वं ध्वनितम् । उक्तं च सामुद्रे **स्त्रीलक्षणे**—'नातिह्रस्वा नातिदीर्घा न स्थूला न कृशा अपि । अवक्राः सरला रक्तनखा रक्ततला अपि । कोमलाः सितबिन्द्वाढ्या भङ्गुरा दीप्तिमन्नखाः । तादृगङ्गुल्यो यस्याः सा भवेद्राजवल्लभा ॥' इति अनुमानकाव्यलिङ्गानुप्रासाः । ननु ममेवेतिवत् 'कमलमिव मुखं मनोज्ञमेतत्' इत्यादावपि सहोपमा किं न स्यादिति चेत्,—उच्यते, प्रकृतमुपमेयमप्रकृतमुपमानमिति साधारणी स्थितिः । यत्रोभयमपि प्रकृतमिवशब्दप्रयोगश्च तत्र सहोपमेति रहस्यम् । यथा—'आदाय शेषामिव भर्तुराज्ञाम्' इत्यादावुभयस्यापि प्रकृतत्वेन विधेयत्वात् । अन्यत्र त्वतिशायकत्वेनाप्रकृतस्योपमानस्यानुवाद्यत्वात् । इयं च साधारणधर्मस्य वाच्यत्व एव

**सानुमती**—जइ अण्णहत्थगदं भवे सच्चं एव्व सोअणिज्जं भवे[1]। [यद्यन्यहस्तगतं भवेत्सत्यमेव शोचनीयं भवेत्।]

**विदूषकः**—भो! इअं णाममुद्दा केण उग्घादेण[2] तत्तहोदीए हत्थाब्भासं[3] पाविदा? । [भोः! इयं नाममुद्रा केनोद्धातेन तत्रभवत्या हस्ताभ्याशं प्रापिता?]

**सानुमती**—मम वि[4] कोदूहलेण आआरिदो[5] एसो । [ममापि कौतूहलेनाकारित एषः।]

**राजा**—श्रूयताम्[6]; स्वनगराय प्रस्थितं मां प्रिया सबाष्पमाह[7]—कियच्चिरेणार्यपुत्रः प्रतिपत्तिं दास्यति[8]—इति ।

**विदूषकः**—तदो तदो? । [ततस्ततः?।]

**राजा**—पश्चादिमां मुद्रां तदङ्गुलौ[9] निवेशयता मया प्रत्यभिहिता,—

**एकैकमत्र दिवसे दिवसे मदीयं**
**नामाक्षरं गणय गच्छति यावदन्तम्[10]।**

संभवतीत्यपि ज्ञेयम्। पुष्पिताग्रा वृत्तम्। यद्यन्यहस्तगतं भवेत्सत्यं शोचनीयं भवेत्। इयं नामसुद्रा केनोद्धातेन केनोपक्रमेण। 'उद्धातः कथ्यते धीरैः स्खलिते समुपक्रमे' इति धरणिः। तत्रभवत्याः शकुन्तलाया हस्ताभ्याशं हस्तनैकट्यं प्रापिता? त्वया तस्यै किमर्थं दत्तेति वचनेऽनौचित्यप्रसङ्गादेतादृगुक्तिः। ममापि कौतूहलेनाकारित एषः। आकारित इवेति गम्योत्प्रेक्षा। ममाप्येतच्छ्रवणे कौतूहलमासीत्, तदेवानेन पृष्टमिति भावः। कियच्चिरेण कियता विलम्बेन। प्रतिपत्तिम्, वार्तामिति यावत्। 'प्रतिपत्तिः प्रवृत्तौ स्यात्' इति धरणिः। **एकैकमिति**। अत्र मुद्रिकाया दिवसे दिवसे मदीयमेकैकं नामाक्षरं गणय। यावत्तद्गणनमन्तं गच्छति। यावद्गणनसमाप्तिरित्यर्थः। त्रिचतुरैर्दिनैरिति भावः। हे प्रिये! ममावरोधगृहमन्तःपुरं तत्र प्रवेशस्तं नेता प्रापयिता जनस्तव समीपमुपै-

पाठा०—१ 'सच्चं सोअणीअं भवे। सहि, दूरे वट्टसि। एआइणी जेव कण्णसुहाइं अणुभवामि।'. २ 'उवुग्घादेण'. ३ 'हत्थसंसग्गं'. ४ 'मम विअ'. ५ 'आलाविदो'. ६ 'वयस्य, श्रूयताम्। यदा तपोवनात्स्वनगराय'. ७ 'सबाष्पमिदमाह'. ८ 'पुनरस्माकं स्मरिष्यतीति'. ९ 'अथेमां नाममुद्रामंगुल्यां'. १० 'यासि न यावदन्तम्।'.

टिप्प०—1 तृतीयाङ्के समुचितमभिज्ञानप्रतिपादकमिदमङ्गुलीयकदानं शकुन्तलादुष्यन्तमिलनावसरे कविना तत्र कथं नानुष्ठितमिति न ज्ञायते।

तावत्प्रिये ! मदवरोधगृहप्रवेशं
नेता जनस्तव समीपमुपैष्यतीति ॥ १२ ॥

तच्च दारुणात्मना मया मोहान्नानुष्ठितम् ।

**सानुमती**—रमणीओ खु अवही विहिणा विसंवादिदो । [ रमणीयः खल्ववधिर्विधिना विसवादितः । ]

**विदूषकः**—कहं धीवलकप्पिअस्स लोहिअमच्छस्स उदलब्भंतले आसि ? । [ कथं धीवरकल्पितस्य रोहितमत्स्यस्योदराभ्यन्तर आसीत् ? ]

**राजा**—शचीतीर्थं वन्दमानायाः सख्यास्ते हस्ताद्गङ्गास्रोतसि परिभ्रष्टम् ।

**विदूषकः**—जुज्जइ । [ युज्यते । ]

**सानुमती**—अदो एव्व तवस्सिणीए सउंदलाए अधम्मभीरुणो इमस्स राएसिणो परिणए संदेहो आसि । अहवा, ईदिसो अणुराओ अहिण्णाणं अवेक्खदि । कहं विअ एदं ? । [ अत एव तपस्विन्याः शकुन्तलाया अधर्मभीरोरस्य राजर्षेः परिणये संदेह आसीत् । अथवेदृशोऽनुरागोऽभिज्ञानमपेक्षते । कथमिवैतत् ? । ]

**राजा**—उपालप्स्ये तावदिदमङ्गुलीयकम् ।

---

ष्यतीति । मयापि प्रत्यभिहितेति संबन्ध । छेकवृत्त्यनुप्रासौ काव्यलिङ्गं च । वसन्ततिलका वृत्तम् । मया विस्मृततादृशस्नेहो दुर्जनधुरंधरेणेत्यादि व्यज्यते । 'दारुणात्मना' इति तादृशव्यङ्ग्यावकाशदानाय । रमणीयः खल्ववधिर्निधिना दैवेन शापलक्षणेन च विसवादितः । कथं धीवरकल्पितस्य कैवर्तखण्डितस्य रोहितमत्स्यस्योदराभ्यन्तर आसीत् ? । शचीतीर्थमिति गङ्गाया शक्रावतारापरपर्यायस्तीर्थविशेष उच्यते । युज्यते । अत एवाङ्गुलीयकादर्शनादेव तपस्विन्या अनुकम्पार्हायाः शकुन्तलाया अधर्मभीरोरस्य राजर्षेः परिणये सदेह आसीत् । अथवेदृशोऽनुरागोऽभिज्ञानमपेक्षते । कथमिवैतत् ? । शापाज्ञानादस्या ईदृग्युक्ति । उपालप्स्येऽस्यो-

---

पाठा०—१ 'मदवरोधनिदेशवर्ती'. २ 'तच्च मोहाद्दारुणमनुष्ठितम्'. ३ 'कधं रोहिदमच्छस्स मुहं बडिसं विअ एदं पविट्ठं आसि ।. ४ 'शचीतीर्थे सलिलं'. ५ '°यास्तव सख्याः परिभ्रष्टम् ।'. ६ '°भीरुणो राएसिणो'. ७ 'संदेहो । अध वा' ८ 'ता कधं विअ'. ९ 'भवतु, उपालप्स्ये'.

**विदूषकः**—[१](आत्मगतम्) गहीदो णेण पंथा उम्मत्तआणं। [गृहीतोऽनेन पन्था उन्मत्तानाम्।]

**राजा**—(अङ्गुलीयकं विलोक्य) मुद्रिके!

**कथं नु तं बन्धुरकोमलाङ्गुलिं**
**करं विहायासि निमग्नमम्भसि?।**

अथवा,—

**अचेतनं नाम गुणं न लक्षये-**
**न्मयैव कस्मादवधीरिता प्रिया॥ १३॥**

**विदूषकः**—(आत्मगतम्) कहं बुभुक्खाए खादिदव्वो म्हि। [कथं बुभुक्षया खादितव्योऽस्मि।]

पालम्भं करिष्ये। अनेनोन्माद। गृहीतोऽनेन पन्था उन्मत्तानाम्। **कथमिति**। न्विति प्रश्ने। बन्धुरा सुन्दराः कोमला अङ्गुलयो यत्र तम्। 'बन्धुरं सुन्दरे रम्ये' इति विश्व। एतद्विशेषणप्रयोजनमेतत्पूर्वतरपद्ये निरूपितम्। तं रक्तोत्पलच्छविमतिमृदुलं मया वारंवारं स्वहृदयन्यस्तं येनातिप्रीत्या तव धारणं कृतं पुर इव परिस्फुरन्तं करं विहाय त्यक्त्वा। अनेन बुद्धिपूर्वकस्त्याग उक्तो न मोहाद्भ्रंश। कथमम्भसि निमग्नमसि?। त्वं त्वलंकरणं तेन तव दृश्यमेव प्रयोजनं तत्करस्थमपि दृश्यमेव स्थितं सद्यदम्भसि नितरा मग्नमदृश्यत्वं गतमिति कथम्? एवं तत्करत्यागस्तत्राप्यदृश्यत्वगमनमित्युपालम्भद्वयम्। अत्र चेतनव्यवहारारोपात्समासोक्तिः। सा च गुरुत्वात्स्वाभाविको जलपातस्तत्कर्तृत्वेनोच्यत इति स्वाभाविककृत्रिमयोरभेदाध्यवसायादतिशयोक्तिगर्भा। अथवेति वृत्ताक्षेपालंकारः। नामेति प्रसिद्धौ। अचेतनं कर्तृ गुणं सौन्दर्यादिकं प्रेमादिकं च न लक्षयेदित्यर्थान्तरन्यासः। त्वया त्वचेतनत्वादिदं कृतं, मया तु सचेतनेनाप्यत्यनुचितकारिणा त्वा प्रति किं वक्तव्यम्। मयैवेत्येवशब्दार्थ। कस्मात्, अकारणकमित्यर्थ। स्त्रीमात्रं न भवत्यपि तु प्रिया, अवधीरिता तिरस्कृता न तु त्यक्ता, त्यक्तायाः पुनरुपादाने महापुरुषस्यानौचित्यप्रसङ्गात्। अवधीरणाकारणाभावे तदुत्पत्तेर्विभावना। श्रुत्यनुप्रासवृत्त्यनुप्रासयोः संकर। वंशस्थं वृत्तम्। कथं बुभुक्षया खादितव्योऽस्मि। असावुन्मत्तः अत एव विषयान्तरसंचाराभावान्मया भोजनार्थं गन्तुमशक्यमिति भाव। अथ चाहं यथा बुभुक्षया भक्षितव्यस्तथाऽयमपि तया भक्षितव्य इत्ययमप्यर्थ। प्रकरणबलाद्बुभुक्षेति स्त्रीलिङ्गनिर्देशाच्च। 'कस्मादवधीरिता प्रिया' इत्यत्र प्रियास्मर-

**पाठा०-१** '(सस्मितम्) अहं पि एदं दंडअट्ठं उवालहिस्सं। कधं उज्जुअस्स मे कुडिलं तुमं सि त्ति।'. २ '(अनाकर्णितनाटितकेन)'. ३ 'कोमलबन्धुराङ्गुलिं'. ४ 'न वीक्षते'. ५ मिश्रकेशी–सव्वं जेव पडिवण्णो जं म्हि वत्तुकामा। विदू०–(आत्मगतम्)'.

**राजा**—अकारणपरित्यागानुशयतप्तहृदयस्तावदनुकम्प्यतामयं जनः पुनर्दर्शनेन।[1]

(प्रविश्यापटीक्षेपेण चित्रफलकहस्ता)

**चतुरिका**—इअं चित्तगदा भट्टिणी। [इयं चित्रगता भट्टिनी।] (इति चित्रफलकं दर्शयति)[2]

**विदूषकः**—साहु वअस्स!। महुरावत्थाणदंसणिज्जो[3] भावाणुप्पवेसो। क्खलदि विअ मे दिट्ठी णिण्णुण्णअप्पदेसेसु। [साधु वयस्य!। मधुरावस्थानदर्शनीयो भावानुप्रवेशः। स्खलतीव मे दृष्टिर्निम्नोन्नतप्रदेशेषु।]

**सानुमती**—[4]अम्मो, एसा राएसिणो णिउणदा। जाणे सही अग्गदो मे वट्टदि त्ति। [अहो, एषा राजर्षेर्निपुणता। जाने सख्यग्रतो मे वर्तत इति।]

---

णात्सकल्पोपनीता प्रत्याह—**अकारणेति**। अकारणं कारणराहित्येन यः परित्यागस्तेनानुशयः पश्चात्तापस्तेन तप्तं हृदयं यस्य स.। अत्र परित्यागश्चेत्कथं कारणाभावः, कारणाभावश्चेत्कथं परित्याग इति विरोधो नाशङ्कनीय। अत्र 'कारण'शब्देन प्रसिद्धं नायिकापराधरूपं गृहीतं, तदेव त्यागे कारणं दृष्टचरमिति। अनेन चित्रफलकहस्तायाश्चतुरिकायाः सूचनम्। सूचिताया एवापटीक्षेपेण प्रवेशोऽतित्वरासूचनाय। अपटी जवनिका। 'अपटी काण्डपटीका प्रतिसीरा जवनिका तिरस्करिणी' इति हलायुधः। 'इयं चित्रगता भट्टिनी' इत्यनेन यद्राज्ञा पुनर्दर्शनं याचितं तदनया भङ्ग्या कविना संपादितम्। अत एव पश्चात् 'चित्रफलकं दर्शयति' इत्युक्ति.। साधु वयस्येति भिन्नं वाक्यम्। मधुरं सुन्दरं यदवस्थानमाकृतिस्तया दर्शनीयो हृद्यो भावानुप्रवेशोऽभ्यन्तरीकरणम्। सुन्दराकारतया भावाविर्भावो रम्यतर इत्यर्थः। स्खलतीव दृष्टिर्निम्नोन्नतप्रदेशेषु। अनेन मधुराकृतित्वमेवोक्तम्। यथा प्रत्यक्षदृष्टायामाकृतौ निम्नोन्नतेषु दृष्टिः स्खलति तथा चित्रेऽपीति महदालेख्यकौशलमिति भाव। किं बहुना सत्यानुप्रवेशं कथालावण्यं कौतूहलं मे जनयति। एतदेवानुसंधायाह सानुमती—**अहो इति**। अहो आश्चर्ये। एषा राजर्षे-

---

**पाठा०**—१ "°दग्धहृदय°". २ 'राजा—अहो, रूपमालेख्यस्य; दीर्घापाङ्गविसारिनेत्रयुगलं लीलाञ्चितभ्रूलतं दन्तान्तःपरिकीर्णहासकिरणज्योत्स्नाभिषिक्ताधरम्। कर्कन्धूद्युतिपाटलोष्ठरुचिरं तस्यास्तदेतन्मुखं चित्रेऽप्यालपतीव विभ्रमलसत्प्रोद्भिन्नकान्तिद्रवम् ॥'. ३ 'भावमहुरा रेहा। खलदि...°प्पदेसेसुं। किं बहुणा, सत्ताणुप्पवेससंकाए आलवणकोदूहलं मे जणेदि।'. ४ 'अहो राएसिणो वत्तिआरेहाणिउणदा'.

---

**टिप्प०**—I कविकुलशेखरेण कालिदासेन स्वीयनायकस्य कलाचातुरी निदर्शयितुकामेन मालविकाग्निमित्रादावपि चित्रनिर्माण-सङ्गीतपटुत्वादि कल्पिता दृश्यन्ते।

**राजा**—[1]

यद्यत्साधु न चित्रे स्यात्क्रियते तत्तदन्यथा।
तथापि तस्या लावण्यं रेखया किंचिदन्वितम् ॥ १४ ॥

**सानुमती**—[2]सरिसं एदं पच्छादावगुरुणो सिणेहस्स अणवलेवस्स अ। [सदृशमेतत्पश्चात्तापगुरोः स्नेहस्यानवलेपस्य च।]

**विदूषकः**—भो! दाणिं[3] तिण्हिओ तत्तहोदीओ दीसंति। सव्वाओ अ दंसणीआओ। कदमा एत्थ तत्तहोदी सउंदला? [भोः! इदानीं तिस्रस्तत्रभवत्यो दृश्यन्ते। सर्वाश्च दर्शनीयाः। कतमात्र तत्रभवती शकुन्तला?।]

**सानुमती**—[4]अणभिण्णो खु ईदिसस्स रूवस्स मोहदिट्ठी अअं जणो। [अनभिज्ञः खल्वीदृशस्य रूपस्य मोहदृष्टिरयं जनः।]

**राजा**—त्वं तावत्कतमां तर्कयसि?।

**विदूषकः**—तक्केमि जा एसा सिढिलकेसबंधणुव्वंतकुसुमेण केसंतेण उब्भिण्णस्सेअबिंदुणा वअणेण विसेसदो ओसरिआहि बाहाहि [5]अवसेअ-

---

निपुणता। अहं जाने सखी शकुन्तलाऽग्रतो मे वर्तत इति। जाने इति सबन्धः। **यदिति**। चित्रे यद्यत्साधु न स्यात्तत्तदन्यथा क्रियते यद्यपि तथापि तस्या लावण्यं किंचिदनिर्वचनीयया च रेखया चित्रार्थं तूलिकाविहितया अन्यथा क्रियते। अथ च शोभाविशेषेणान्वितम्। संमार्ज्य समार्ज्य भूयो भूयो लिख्यमानमपि शोभां नातिक्रामतीति भावः। अथ च शोभया रेखयान्वितमिति विरोधाभासः। लावण्यलक्षणमुक्तं प्राक्। रेखालक्षणं **संगीतरत्नाकरे**—'शिरोनेत्रकरादीनामङ्गाना मेलने सति। कायस्थितिर्यतो नेत्रहरा रेखा प्रकीर्तिता ॥' इति। सदृशमेतत्पश्चात्तापेन गुरोरधिकस्य प्राप्तस्यैवाधिकत्वम्। स्नेहस्यानवलेपस्य निर्दोषस्य, स्वाभाविकस्येत्यर्थः। भो! इदानी तिस्रस्तत्रभवत्यो दृश्यन्ते। सर्वाश्च दर्शनीयाः। कतमा तासा मध्ये तत्रभवती शकुन्तला? अनभिज्ञः खल्वीदृशस्य रूपस्य मोहदृष्टिर्मुग्धदृष्टिरयं जनः। तर्कयामि यैषा शिथिलितकेशबन्धनोद्वान्त-

---

**पाठा०**—१ 'वयस्य'. २ 'सरिसं पच्छा. सिणेहस्स। राजा—( निःश्वस्य ) 'साक्षात्प्रिया...जातः सखे प्रणयवान्मृगतृष्णिकायाम् ।'. ३ 'तिण्णि आइदीओ दीसंति।'. ४ 'अणहिण्णो एस तवस्सी सहीए रूवस्स। मोहचक्खुणो इअं ण गदा से पच्चक्खदं।'. ५ 'अवसेअसिणिद्धपल्लवं असोअलदिअं संसिदा सिढि०'.

सिणिद्धतरुणपल्लवस्स चूअपाअवस्स पासे[1] इसिपरिस्संता विअ आलिहिदा सा सउंदला। इदराओ सहीओ त्ति। [ वर्कयामि यैषा शिथिलकेशबन्धनोद्वान्तकुसुमेन केशान्तेनोद्भिन्नस्वेदबिन्दुना वदनेन विशेषतोऽपसृताभ्यां बाहुभ्यामवसेकस्निग्धतरुणपल्लवस्य चूतपादपस्य पार्श्वे ईषत्परिश्रान्तेवालिखिता सा शकुन्तला। इतरे सख्याविति। ]

**राजा**—निपुणो भवान्। अस्त्यत्र [2]मे भावचिह्नम्।

**खिन्नाङ्गुलिविनिवेशो रेखाप्रान्तेषु दृश्यते मलिनः।**[3]
**अश्रु च कपोलपतितं दृश्यमिदं वर्तिकोच्छ्वासात्॥ १५॥**[4]

चतुरिके! अर्धलिखितमेतद्विनोदस्थानम्[5]। गच्छ, वर्तिकां तावदानय।

**चतुरिका**—अज्ज माढव्व! अवलंब चित्तफलअं जाव आअच्छामि। [ आर्य माढव्य! अवलम्बस्व चित्रफलकं यावदागच्छामि। ]

**राजा**—अहमेवैतदवलम्बे। ( इति यथोक्तं करोति )

( निष्क्रान्ता चेटी )

---

कुसुमेन केशान्तेनोद्भिन्नस्वेदबिन्दुना वदनेन विशेषतोऽधिकमपसृताभ्या नतासाभ्या वाहुभ्या भुजाभ्यामवसेकस्निग्धतरुणपल्लवस्य चूतपादपस्य पार्श्वे ईषत्परिश्रान्तेव। अत्र पूर्वं तृतीयान्तत्रयं हेतुत्वेन योज्यम्। आलिखिता सा शकुन्तला। इतरे सख्यौ। भावेन सात्त्विकभावेन कृतं चिह्नं भावचिह्नम्। मध्यमपदलोपी समासः। **'तावच्चिह्नम्'** इति पाठे सुबोधमेव। **स्विन्नेति**। खिन्ना या अङ्गुलय. सात्त्विकभावात्तासा विनिवेश. स्थिति.। रेखाप्रान्तेषु तत्रैकचित्रपटसंयोगान्मलिनो दृश्यते। मलिनत्वं स्वेदादेव चित्रपटोद्घर्षणात्। कपोलपतितं लिखिताकृतिकपोलप्राप्तमश्रु मम सात्त्विकभावेनोत्पन्नं चेदं वर्तिका चित्रपटे लेपविशेषस्तस्योच्छ्वास उच्छूनता तस्मात्। 'पटलेपे पक्षिभेदे तूलिकायां च वर्तिका' इत्यजय.। अनुमानानुप्रासौ। अनेन हेतुलक्षणं भूषणमुपक्षिप्तम्। तल्लक्षणं तु—'स हेतुरिति निर्दिष्टो यत्साध्यार्थं प्रसाधकम्' इति। वर्तिका तूलिकाम्। आर्य

---

पाठा०-१ 'बद्धसेदबिंदुणा वअणेण विसेसणमिदसाहाहिं वाहालदिआहिं उससीदणीविणा वसणेण ईसिप्परिस्संता विअ आलिहिदा सा तत्तभोदी सउंतला सेसाओ सहीओ त्ति'. २ 'ममापि' ३ '°ङ्गुलीनिवेशाद्रेखाप्रान्तेषु दृश्यते मलिना।'. ४ लक्ष्यमिदं वर्णकोच्छ्वासात्'. ५ '°स्थानमस्माभिः तद्गच्छ वर्तिकास्तावदानय। चेटी—अज्ज...जाव गच्छामि'.

**राजा**—( निःश्वस्य ) अहं हि,—

**साक्षात्प्रियामुपगतामपहाय पूर्वं**
**चित्रार्पितां पुनरिमां बहुमन्यमानः ।**
**स्रोतोवहां पथि निकामजलामतीत्य**
**जातः सखे! प्रणयवान् मृगतृष्णिकायाम् ॥ १६ ॥**

**विदूषकः**—( आत्मगतम् ) एसो अत्तभवं णदिं अदिक्कमिअ मिअतिण्हिआं संकंतो । ( प्रकाशम् ) भो ! अवरं किं एत्थ लिहिदव्वं ? । [ एषोऽत्रभवान्नदीमतिक्रम्य मृगतृष्णिकां संक्रान्तः । भोः! अपरं किमत्र लिखितव्यम् ? । ]

**सानुमती**—जो जो पदेसो सहीए मे अहिरूवो तं तं आलिहिदुकामो भवे । [ यो यः प्रदेशः सख्या मेऽभिरूपस्तं तमालिखितुकामो भवेत् । ]

---

माढव्येति विदूषकसञ्ज्ञा । अवलम्बस्व चित्रफलकं यावदागच्छामि । **साक्षादिति ।** पूर्वमव्यवहितसमये, न तु कालान्तरे । अन्यथोपगतामिति प्रकृतिप्रत्ययार्थेनार्थपौनरुक्त्यं स्यात् । केवलं नारीमात्रं न, अपि तु प्रियाम् । साक्षात् प्रत्यक्षेण । 'साक्षात् प्रत्यक्षतुल्ययो ' इत्यमर । उप समीपे गता प्राप्ताम् । न त्वाभासमात्रेण न चाश्रुतागमनाम् । अथ च प्रत्यक्षेण प्रियामिति ज्ञातामपहायावगणय्य, न तु त्यक्त्वा; त्यक्तस्य पुनरुपादाने महापुरुषस्यानौचित्यप्रसङ्गात् । पुनरनन्तर चित्रार्पिता लिखितामिमा पुरतो दृश्यमाना बहु मन्यमान आदरेणावलोकमान· । पथि मार्गे निकामजला सपूर्णोदका स्रोतोवहा नदीम् । अथ च यतो निकामजलामत स्रोतोवहा प्रवहद्रूपामिति वा योज्यम् । अतीत्यातिक्रम्य मृगतृष्णिकाया मरुमरीचिकाया प्रणयवान् प्रीतियुक्तो जात· । हेतुनिदर्शनाश्रुतिवृत्त्यनुप्रासा । सुपमपेति मन्यमान इति छेकानुप्रासोऽपि । अपहाय बहुमन्यमान इत्यनयोर्निर्हेतुकत्वं नाशङ्कनीयम्; शापस्य तन्मोक्षेण विरहस्य प्रकरणलभ्यत्वात् । वसन्ततिलका वृत्तम् । एषोऽत्रभवान्नदीमतिक्रम्य मृगतृष्णिका सक्रान्त । अयमेतस्या कथं निवर्तनीयो भविष्यतीत्याशय· । पूर्वं उन्मत्ताना पन्था अनेन गृहीत इत्युक्ते । भो ! अपरं किमत्र लिखितव्यम् ? । यो य प्रदेश· सख्याः संबन्धी मेऽभिरूप सुन्दरस्तं तमा-

---

पाठा०-१ 'विदू०-भो किं एत्थ अवरं आलिहिदव्वं । मिश्रकेशी-जो जो पिअसहीए अहिमदो पदेसो तं तं आलिहिदुकामो त्ति तक्केमि । राजा-सखे, श्रूयताम्-'.

**राजा**—श्रूयताम्,—

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
[1]पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम्॥ १७॥

**विदूषकः**—(आत्मगतम्) जह अहं देक्खामि पूरिदव्वं णेण चित्तफलअं लंबकुच्चाणं तावसाणं कदबेहिं। [यथाहं पश्यामि पूरितव्यमनेन चित्रफलकं लम्बकूर्चानां तापसानां कदम्बैः।]

**राजा**—वयस्य! अन्यच्च शकुन्तलायाः [3]प्रसाधनमभिप्रेतमस्माभिः।

---

लिखितुकामो भवेत्। **कार्येति**। अनेन पद्येनाश्रमस्थं पूर्वानुभूतं तदानींतनमुद्दीपनं विभावगणं स्मरति। ते च स्मृता. संभ्रमप्रवासहेतुकं विरहमेव पोषयन्ति। **सैकते लीनं हंसमिथुनं** यस्याः सा। अनेनोद्दीपकत्वातिशयो व्यज्यते। **मालिनी**-नाम्नी स्रोतोवहा नदी कार्या। स्रोतोवहेत्यनेन जलवाहित्वम्, तेन स्वभावापरित्यागः, तेन रमणीयत्वम्, तेन चोद्दीपकत्वं व्यज्यते। मालिनीमभित इत्यभितोयोगे द्वितीया। गौरीगुरोर्हिमवतः। अनेन कन्यापितृत्वेन तद्दुःखानुभवात्तत्प्रदेशेऽविघ्नितसंकेतत्वं द्योत्यते। 'निषण्णहरिणा' इत्यनेनात्यन्तविविक्तत्वम्। तेन भृशमुद्दीपकत्वम्, तेन च सुरतक्षमत्वं ध्वन्यते। 'पावना' इत्यनेन शुचित्वेन रम्यत्वेन पर्यवसानम्। पादाः प्रत्यन्तपर्वताः। 'कार्या' इत्यनुषज्यते। शाखास्वालम्बितानि बल्कलानि वृक्षत्वचो यस्य। अनेनाश्रमपथानतिदूरत्वेन तस्याः शालीनत्वं ध्वनितम्। तस्य तरोरधः कृष्णमृगस्य कृष्णसारस्य शृङ्गे। वामनयनमिति स्त्रीस्वभावत्वात्। **कण्डूय**-माना मृगी निर्मातुमिच्छामि। अत्र कण्डूयनं शृङ्गारानुभावसूचकं घर्षणमात्रम्। अनेनाप्युद्दीपकत्वं ध्वनितम्। पूर्वं 'कार्या' इत्युक्त्वा 'निर्मातुमिच्छामि' इत्युक्तिस्तु घर्षणस्य लेखनायोगात्; तेनैतदपीच्छामि, न वस्तुतः कर्तव्यमिति भाव। स्वभावोक्ति। लीनलिनीति गौरीगुरोरिति मृगमृगीमिति मनमानामिति छेकवृत्तिश्रुत्यनुप्रासाः। गौरीगुरोरिति प्रसङ्गोपादानादुदात्तालकारश्च। शार्दूलविक्रीडितं वृत्तम्। यथाहं पश्यामि। पूरितव्यमनेन चित्रफलकं लम्बकूर्चाना तापसाना कदम्बैः समूहैः

---

**पाठा०**—१ 'पादस्तामभितो निषण्णचमरो . पावनः'. २ 'जधा मंतेदि तधा तक्केमि पूरिदो अणेण चित्तफलओ आइदीहिं कुच्चाणदाणं तावसाणं ति।'. ३ 'प्रसाधनमभिप्रेतमत्रालिखितुं विस्मृतमस्माभिः।'.

**विदूषकः**—किं विअ । [ किमिव ? । ]

**सानुमती**—[1]वणवासस्स सोउमारस्स अविणअस्स अ जं सरिसं भविस्सदि । [ वनवासस्य सौकुमार्यस्याविनयस्य च यत्सदृशं भविष्यति । ]

**राजा**—

**कृतं न कर्णार्पितबन्धनं सखे !**
**शिरीषमागण्डविलम्बिकेसरम् ।**
**न वा शरच्चन्द्रमरीचिकोमलं**
**मृणालसूत्रं रचितं स्तनान्तरे ॥ १८ ॥**

**विदूषकः**—भो! किं णु तत्तहोदी [2]रत्तकुवलअपल्लवसोहिणा अग्गहत्थेण मुहं ओवारिअ चइदचइदा विअ ठिआ । आ, एसो

---

प्रसाधनमलंकरणम् । अभिप्रेतमभिमतम् । किमिव ? । 'वनवासस्य' इत्यनेन पुष्पादिकम्, 'सौकुमार्यस्य च' इत्यनेन कुसुमानामपि यत्कोमलतरं तदेकद्वित्रिधारणं च, 'अविनयस्य च' इत्यनेन शेखरादिव्यावर्तनं व्यज्यते । यत्सदृशं भविष्यति । **कृतमिति ।** अत्र 'कर्ण'शब्देन स्वस्य तेन भूषणत्वं बोधयता नैकट्यात् कर्णशिरोन्तरालदेशो लक्ष्यते । तेन परस्परोपकारकारणादन्योन्यालंकारो व्यङ्ग्यः । तत्रार्पितमारोपितं बन्धनं वृन्त यस्य तत् । गण्डं मर्यादीकृत्य विलम्बिता केसरा यस्य तत् । एतेन केवलं कर्ण न भूषयति, अपि तु गण्डमपीति व्यज्यते । शिरीषं शिरीषपुष्प न कृतम् । हे सखे ! 'शिरीष'पदेन कोमलत्वं ध्वनयताऽन्यत्तदयोग्यमिति तस्या सुकुमाराङ्गत्वं व्यज्यते । शिरीषकेसरमध्ये तत्र तस्यैव समावेशयोग्यत्वात् । एतेन तत्स्तनयोरतिपीवरतया परस्परोत्पीडनत्वम्, तेनालिङ्गनयोग्यत्वम्, तेन च तदप्राप्त्या स्वस्याधन्यत्वादि व्यज्यते । रचितं न वेति सबन्ध । अत्राप्यन्योन्यशोभाहेतुत्वेनान्योन्यालंकारो व्यङ्ग्य । क्रिययो समुच्चितत्वान् समुच्चयालंकार । एकाधिकरणत्वेनापि तस्येष्टत्वात् । उपमा च । श्रुतिवृत्त्यनुप्रासयोः सकर । शिरीशरेति रीच्चिरचीति त्रतरे इति छेकानुप्रासोऽपि । 'श्लेषानुप्रासयमकचित्रेषु शसयोर्न भित्' इत्याद्युक्तेः । वंशस्थं वृत्तम् । कि नु तत्रभवती रक्तकुवलयस्य पल्लव पत्रं तद्वच्छोभिना । यद्वा,-रक्तौ कुवलयपल्लवौ तद्वच्छोभिना अग्रहस्तेन मुखमपवार्य चकित-

---

पाठा०—१ 'कण्णआभावस्स च सरिसं'. २ 'रत्तकुवलअसोहिणा'.

दासीएपुत्तो कुसुमरसपाडच्चरो तत्तहोदीए वअणं अहिलंघेदि[1] महुअरो। (सावधानं निरूप्य दृष्ट्वा) [भोः! किं नु तत्र भवती रक्तकुवलयपल्लव-शोभिनाऽग्रहस्तेन मुखमपवार्य चकितचकितेव स्थिता। आः, एष दास्याः पुत्रः कुसुमरसपाटच्चरस्तत्रभवत्या वदनमभिलङ्घति मधुकरः।]

**राजा**—ननु वार्यतामेष धृष्टः।

**विदूषकः**—[2]भवं एव्व अविणीदाणं सासिदा इमस्स वारणे पहविस्सदि। [भवानेवाविनीतानां शासितास्य वारणे प्रभविष्यति।]

**राजा**—युज्यते। अयि भोः कुसुमलताप्रियातिथे! [3]किमत्र परिपतनखेदमनुभवसि?!

**एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता।**
**प्रतिपालयति [4]मधुकरी न खलु [5]मधु विना त्वया पिबति॥ १९॥**

---

चकितेव स्थिता कि न्विति सबन्ध.। एष दास्या.पुत्र कुसुमरसपाटच्चरः पुष्प-मधुचौर। अनेनैवापराधेन दण्ड्योऽपराधान्तरे च सुतरा दण्डनीय इति व्यज्यते। यस्याः कस्याश्चिन्न, अपि त्वत्रभवत्या· पूज्याया वदनमभिलङ्घति। 'मधुकर' इति साभिप्रायम्। राज्ञस्तु तद्देश एव तिष्ठामीति बुद्ध्या नन्वित्याद्युक्ति·। विदूष-कस्तु चित्रगतस्य वारयितुमशक्यत्वादिति सोल्लुण्ठं स्वभावोक्तिमाह—भवानेवा-विनीताना शासिताऽस्य वारणे प्रभविष्यति। राजा तु तादृक्त्वबुद्ध्यैव प्रत्युत्तर-यति—**युज्यत इति**। 'कुसुम'ग्रहणं लताया. सद्भावसूचनार्थम्। कुसुमयुक्ता लता कुसुमलतेति मध्यमपदलोपी समास। तस्या अपि प्रियोऽतिथिर्न तु य· कश्चि-दतिथिस्तस्य सबोधनम्। यत्र तु सा तादृशी लता तत्र परिपतनमुचितम्। अनु-भवसि नात्र नातिथित्वं सुतरां न प्रियातिथित्वम्; परिपतनरूप एव खेदस्तमनुभवसि न तु मधुलवलाभोऽपीति भाव·। चित्रलिखिताया तत्पुष्पे भ्रमर्यपि लिखिता तामु-द्दिश्यैषेत्युक्ति.। **एषेति**। 'कुसुमनिषण्ण' इत्यनेन तवायत्नसाध्यं स्थानमिति भाव। अनुरक्तेत्यनेन तव तत्रोचितं गमनमिति ध्वन्यते। तृषिताभिलापवत्यपि मधुकरी स्वाभाव्यात्सती विद्यमाना पतिव्रता च मधुकरी भवन्तं प्रतिपालयतीति प्रेमाति-शय· त्वया विना मधु न पिबति। अत्र चित्रन्यस्ताया स्वाभाविकस्य पाना-भावस्य 'त्वया विना' इति कृत्रिमस्य वाऽभेदाध्यवसायादतिशयोक्तिः। अथवा

---

**पाठा०—१ 'धिट्ठमहुअरो...वअणकमलं अहिलसदि।'. २ 'तुमं जेव अवि-णीदसासणे पहवसि।'. ३ 'किमितः'. ४ 'भ्रमरी'. ५ 'मधु त्वां विना पिबति।'.**

**सानुमती**—अज्ज [1]अभिजादं खु एसो वारिदो। [अद्याभिजातं खल्वेष वारितः।]

**विदूषकः**—पडिसिद्धा वि[2] वामा एसा जादी। [प्रतिषिद्धापि वामैषा जातिः।]

**राजा**[3]—एवं भोः, न मे शासने तिष्ठसि?। श्रूयतां तर्हि संप्रति,—

**अक्लिष्टबालतरुपल्लवलोभनीयं**
**पीतं मया सदयमेव रतोत्सवेषु।**
**बिम्बाधरं [4]स्पृशसि चेद्भ्रमर प्रियाया-**
**स्त्वां कारयामि कमलोदरबन्धनस्थम्॥ २०॥**

---

माधवीलतायां तादृशीं मधुकरीं दृष्ट्वेवेत्युक्तिः। अत्र तृषितत्वं कुसुमोपर्युपवेशनादेव। नायिकानायकव्यवहारसमारोपात्समासोक्ति । सती पतिव्रता। मधुकरीति भिन्नरूपेणैकदेशविवर्तिरूपकमपि । मधुमध्विति छेकवृत्त्यनुप्रासा । अद्याधुनाभिजातं न्याय्यं यथा स्यादेवं खल्वेष वारित। 'अभिजात. स्मृतो न्याय्ये' इति विश्व। 'प्रतिषिद्धापि वामैषा जातिः' इति विदूषकवचनं सोल्लुण्ठमेव। राज्ञोऽपि पूर्ववदेव। शासन आज्ञायाम्। **अक्लिष्टेति**। अक्लिष्ट. केनापि न मृदितो बालो नूतनस्तरोः पल्लवस्तद्वल्लोभनीयं सुन्दरम्। अत्र तात्स्थ्यं वक्तुं 'तरु'पदोपादानम्। यद्वा,—बालो यस्तरुस्तस्य पल्लव। अक्लिष्टश्चासौ बालतरुपल्लवश्चेति। एतेन कोमलत्वलौहित्यातिशयो व्यज्यते। प्रियाया बिम्बाधरं बिम्बसदृशमधरमिति मध्यमपदलोपी समासः। तथा च **वामनः** (का. सू. ५।२।१५) 'बिम्बाधर इति वृत्तौ मध्यमपदलोपिन्याम्' इति, रतोत्सवेषु तया सह रतमुत्सवरूपमित्यर्थः। तेषु मयोत्कण्ठातिशयवतापि सदयं स्वादं स्वादं च पीतं न तु निर्दयं तद्दष्टम्। तेनातिकोमलत्वं ध्वनितम्। अथ च पीतमप्यक्लिष्टबालतरुपल्लवलोभनीयमिति विधेयं विशेषणम्। तेन भ्रमरस्य स्पर्शेऽपि हेतुत्वं तेन भ्रान्तिमानलंकारो व्यज्यते। हे भ्रमर! त्वं चेत्तं स्पृशसि तदा कमलस्योदरे बन्धनस्थं त्वा कारयामि। अनेन सूर्यस्यापि निजाज्ञाकारित्वं ध्वन्यते। स्वाभाविकस्य तस्य स्वप्रयोजकत्वव्यापारेणोक्तेरतिशयोक्तिश्च । प्रतिनायकव्यवहारसमारोपात्समासोक्ति । उन्मत्तावस्थावर्णनादनौचित्यं न । कमलोदरे जलमध्ये बन्धनस्थमिति श्लेषोऽपि । हेतुरूपकोपमानुप्रासा । वसन्ततिलकं

---

**पाठा०**—१ 'अहिजादं खु वारिदो।'. २ '°सिद्धवामा खु एसा'. ३ '(सकोपम्) भोः'. ४ 'दशसि'.

**विदूषकः**—एव्वं तिक्खणदंडस्स किं ण भाइस्सदि [1] ? । (प्रहस्य आत्मगतम्) एसो दाव उम्मत्तो । अहं पि एदस्स संगेण [2] ईदिसवण्णो विअ संवुत्तो । (प्रकाशम्) भो ! चित्तं खु एदं । [एवं तीक्ष्णदण्डस्य किं न भेष्यति ? । एष तावदुन्मत्तः । अहमप्येतस्य सङ्गेनेदृशवर्ण इव संवृत्तः । भोः ! चित्रं खल्वेतत् ।]

**राजा**—कथं चित्रम् ? ।

**सानुमती**—अहं पि दाणिं अवगदत्था, किं उण [3] जहालिहिदाणुभावी एसो । [अहमपीदानीमवगतार्था, किं पुनर्यथालिखितानुभाव्येषः ।]

**राजा**—वयस्य ! किमिदमनुष्ठितं पौरोभाग्यम् ? ।

**दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन ।**
**स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता ॥ २१ ॥**

(इति बाष्पं विहरति [4])

---

वृत्तम् । एवं तीक्ष्णदण्डस्य कि न भेष्यति ? । एष तावदुन्मत्त । अहमप्येतस्य सङ्गेनेदृशा वर्णा अक्षराणि यस्य स इव सवृत्त । सोल्लुण्ठोत्तरदानेन सहजतयोन्मत्तावस्थाया पर्यवसानादिति भाव । भो ! चित्रं खल्वेतत् । 'राजा—युज्यते' इत्यादिनैतदन्तेन भ्रान्तिर्नाम सध्यन्तराङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'भ्रान्तिर्विपर्ययज्ञानं प्रसङ्गस्याविनिश्चयात्' इति । अहमपीदानीमवगतार्था, चित्रमिति ज्ञानं ममाप्यधुना जातमित्यर्थ । कि पुनर्यथालिखितानुभाव्येष विदूषकः । राजा—ननु वार्यतामेष धृष्ट' इत्यादिना 'बन्धनस्तम्' इत्यन्तेन तन्मयत्वप्रवासविप्रलम्भकामदशावस्था सूचिता । 'तन्मयं तत्प्रकाशो हि बाह्याभ्यन्तरतस्तथा' इति तल्लक्षणात् । पौरोभाग्यं दोषदर्शित्वम् । 'दोषैकदृक्पुरोभागी' इत्यमरः । **दर्शनेति** । तन्मयेन शकुन्तलामयेन साक्षादिव दर्शने सुखमनुभवतो मम स्मृतिकारिणा चित्रमिति स्मरणं कृतवता त्वया कान्ता चित्रीकृतालेख्यस्था कृता । अथवाश्चर्यरूपा कृता । 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः । स्मृतिकारिणा चित्रीकृतेति शब्दशक्तिमूलो विरोधाभासो व्यङ्ग्यः । उत्प्रेक्षा वतवतेति येनयेनेति कृताकान्तेति छेकश्रुतिवृत्त्यनुप्रासा । **भोजेन** तु (स. कं.) 'परप्रयत्नादपि स्मरणे स्मरणालंकार.' इत्युक्त्वा तदलंकारे इदमुदाहृतम् ।

---

**पाठा०**—१ भो एव्वं तिक्खदंडस्स दे कधं ण'. २ 'इदिसो जेव्व संवुत्तो । राजा–कथं निवार्यमाणोऽपि स्थित एव । मिश्र०–धीरं पि जणं रसो विआरेदि । विदू०–भो, चित्तं खु एदं । राजा–कथं चित्रम् ।'. ३ 'जधाचिंतिदाणुभावी'. ४ 'विसृजति ।'.

**सानुमती**—पुव्वावरविरोही अपुव्वो एसो विरहमग्गो[1] । [ पूर्वापरविरोध्यपूर्व एष विरहमार्गः । ]

**राजा**—वयस्य ! कथमेवमविश्रान्तदुःखमनुभवामि[2] ? ।

प्रजागरात्खिलीभूतस्तस्याः स्वप्ने समागमः[3] ।
बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥ २२ ॥

**सानुमती**—सव्वहा[4] पमज्जिदं तुए पच्चादेसदुक्खं सउंदलाए । [ सर्वथा प्रमार्जितं त्वया प्रत्यादेशदुःखं शकुन्तलायाः । ]

( प्रविश्य )

**चतुरिका**—जेदु जेदु भट्टा । वट्टिआकरंडअं गेण्हिअ इदो[5]-मुहं पत्थिद म्हि । [ जयतु जयतु भर्ता । वर्तिकाकरण्डकं गृहीत्वेतोमुखं प्रस्थितास्मि ।

**राजा**—किं[6] च ? ।

**चतुरिका**—सो मे हत्थादो अंतरा तरलिआदुदीआए देवीए[7] वसुमदीए अहं एव्व अज्जउत्तस्स उवणइस्स त्ति सबलक्कारं गहीदो । [ स मे हस्तादन्तरा तरलिकाद्वितीयया देव्या वसुमत्याऽहमेवार्यपुत्रस्योपनेष्यामीति सबलात्कारं गृहीतः । ]

---

राजा—'अकारणपरित्याग-' इत्यादिनैतदन्तेन चित्रं नाम संध्यन्तराङ्गमुपक्षिप्तम् । तल्लक्षणम्—'चित्रं त्वाकारस्य विलेखनम्' इति । पूर्वापरविरोध्यपूर्व एष विरहमार्गः । पूर्वं चित्रस्य चित्रत्वेन ज्ञानम्, पुनस्तस्योन्मादावस्थायां सत्यत्वेन ज्ञानम्, पुनरपि चित्रत्वेन ज्ञानमिति पूर्वापरविरोध । उन्मादावस्थानन्तरं मूर्च्छाद्यवस्थाया अभावादिति भावः । अत एवापूर्व आश्चर्यकारी। **प्रजागरादिति** । तस्याः स्वप्ने समागमः प्रजागरात्खिलीभूतो निरुद्धः । तु पुनर्बाष्पोऽश्रुप्रवाह । 'बाष्पो नेत्रजलोष्मणो' इति विश्व. । एना चित्रगतामपि । प्रत्यक्षदर्शनं पुनरनुपपन्नमिति 'अपि'शब्दार्थ । द्रष्टुं न ददाति । हेत्वनुप्रासौ । सर्वथा प्रमार्जितं त्वया प्रत्यादेशदु खं शकुन्तलाया. । जयतु जयतु भर्ता । वर्तिकाकरण्डकं तूलिकावर्णकादिभाण्डं गृहीत्वेतोमुखं प्रस्थितास्मि । स वर्तिकाकरण्डको

---

**पाठा०–१ 'विहिणो मग्गो'. २ 'कथमविश्रामं दुःख°'. ३ 'स्वप्नसमागमः'. ४ 'वअस्स संमज्जिदं तए. पिअसहीए सउंतलाए पच्चक्खं जेव सहीअणस्स ।'. ५ 'इदो अहं'. ६ 'किं ततः'. ७ 'पिंगलिआदुदिआए देवीए'.**

---

**टिप्प०**—1 अनेन भावसाम्य 'अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे क्रूरस्तस्मिन्नपि न सहते संगम नौ कृतान्त.' इति **मेघदूते** ( उत्त ४२ ) इत्यत्र लभ्यते ।

**विदूषकः**—दिट्ठिआ[1] तुमं मुक्का । [दिष्ट्या त्वं मुक्ता ।]

**चतुरिका**—जाव देवीए [2]विडवलग्गं उत्तरीअं तरलिआ मोचेदि ताव मए णिव्वाहिदो अत्ता । [यावद्देव्या विटपलग्नमुत्तरीयं तरलिका मोचयति तावन्मया निर्वाहित आत्मा ।]

**राजा**—वयस्य ! उपस्थिता देवी बहुमानगर्विता च । भवानिमां प्रतिकृतिं रक्षतु ।

**विदूषकः**—अत्ताणं[3] त्ति भणाहि । (चित्रफलकमादायोत्थाय च) जइ भवं [4]अंतेउरकालकूडादो मुंचीअदि तदो मं मेहप्पडिच्छंदे[5] प्पासादे सद्दावेहि । [आत्मानमिति भण । यदि भवानन्तःपुरकालकूटान्मोक्ष्यते तदा मां मेघप्रतिच्छन्दे प्रासादे शब्दापय ।] (इति द्रुतपदं निष्क्रान्तः)

**सानुमती**—अण्णसंकंतहिअओ वि पढमसंभावणं [6]अवेक्खदि सिढिलसोहदो दाणिं एसो । [अन्यसंक्रान्तहृदयोऽपि प्रथमसंभावनामपेक्षते शिथिलसौहार्द इदानीमेषः ।]

(प्रविश्य पत्रहस्ता)

**प्रतीहारी**—जेदु जेदु देवो । [जयतु जयतु देवः ।]

---

मे मम हस्तादन्तरा मध्ये तरलिकाद्वितीयया देव्या वसुमत्याहमेवार्यपुत्रस्योपनेष्यामीति सबलात्कारं गृहीत । दिष्ट्या त्वं मुक्ता । यावद्देव्या विटपलग्नमुत्तरीयं तरलिका मोचयति तावन्मया निर्वाहित आत्मा, पलायितास्मीत्यर्थः । इमा प्रतिकृतिं लिखिता शकुन्तलाप्रतिमाम् । आत्मानमिति भण । केवलं प्रतिकृतिरेव रक्षणीयेति न, अपि त्वात्मापि रक्षणीय इत्यर्थः । अत्र 'आत्म'शब्देन विदूषको राजा चेत्युभयमपि गृह्यते । तेन प्रतिकृतिरक्षणेनोभावपि रक्षिताविति भावः । यदि भवानन्तःपुरकालकूटान्मोक्ष्यते तदा मा मेघप्रतिच्छन्दनामनि प्रासादे शब्दापय, आकारयेत्यर्थः । अन्यसंक्रान्तहृदयोऽपि प्रथमसभावनामपेक्षते । शिथिलसौहार्द इदानी-

---

**पाठ०**—१ 'तुमं कधं विमुक्का ।'. २ 'लदाविडवलग्गं देवीए परिचारिआ अंचलं ताव णिण्हुविदो मए अप्पा । (नेपथ्ये) एदु एदु भट्टिणी । विदू०—(कर्ण दत्त्वा) भो, अहिधावंती एसा अंतेउरवग्घी मेधाविणिं मइं विअ कवलिदुं उवत्थिदा ।'. ३ '°णअं पि किं ति ण भणसि'. ४ 'अंतेउरवाउरादो मुच्चिस्सदि'. ५ 'मेहच्छण्णप्पासादे सद्दावेसि । एदं च तहिं गोवेमि जहिं पारावदं उज्झिअ ण को वि अण्णो पेक्खदि ।'. ६ 'रक्खदि थिरसोहिदो दाव एसो ।'.

राजा—वेत्रवति ! न खल्वन्तरा दृष्टा त्वया देवी[२] ।

प्रतीहारी—अह इं ? । पत्तहत्थं मं देक्खिअ पडिणिउत्ता । [ अथ किम् ? पत्रहस्तां मां प्रेक्ष्य प्रतिनिवृत्ता । ]

राजा—कार्यज्ञा कार्योपरोधं मे परिहरति ।

प्रतीहारी—देव ! अमच्चो विण्णवेदि—अत्थजादस्स गणणाबहुलदाए एक्कं एव्व पोरकज्जं अवेक्खिदं तं देवो पत्तारूढं पच्चक्खीकरेदु—त्ति । [ देव ! अमात्यो विज्ञापयति—अर्थजातस्य गणनाबहुलतयैकमेव पौरकार्यमवेक्षितं तद्देवः पत्रारूढ प्रत्यक्षीकरोतु—इति । ]

राजा—इतः पत्रिकां दर्शय ।

( प्रतीहार्युपनयति )

राजा—( अनुवाच्य ) कथम् ? । समुद्रव्यवहारी सार्थवाहो धनमित्रो नाम नौव्यसने विपन्नः । अनपत्यश्च किल तपस्वी । 'राजगामी तस्यार्थसंचयः' इत्येतदमात्येन लिखितम् । कष्टं खल्वनपत्यता । बहुधनत्वाद्बहुपत्नीकेन तत्रभवता भवितव्यम् । विचार्यतां यदि काचिदापन्नसत्त्वा तस्य भार्यासु स्यात् ।

प्रतीहारी—देव ! दाणिं एव्व साकेदअस्स सेट्ठिणो दुहिआ णिव्वुत्तपुंसवणा जाआ से सुणीअदि । [ देव ! इदानीमेव साकेतस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना जायाऽस्य श्रूयते । ]

राजा—ननु गर्भः पित्र्यं रिक्थमर्हति । गच्छ एवममात्यं ब्रूहि ।

---

मेष । जयतु जयतु देवः । अथ किम् ? । पत्रहस्ता मा प्रेक्ष्य प्रतिनिवृत्ता । देव ! अमात्यो विज्ञापयति—अर्थजातस्य द्रव्यसमूहस्य गणनाबहुलतयैकमेव पौरकार्यमवेक्षितं तद्देव· पत्रारूढं प्रत्यक्षीकरोत्विति । नौव्यसने पोतभ्रंशे । 'व्यसनं विपदि भ्रंशे' इत्यमर । विचार्यतामन्विष्यताम् । तस्य वणिजो भार्यासु मध्ये काचिद्भा-

---

पाठा०—१ 'खल्वन्तरे'. २ 'देवी वसुमती'. ३ 'देव, दिट्ठा । पत्तहत्थं'. ४ 'पच्चवेक्खिदं'. ५ 'पत्तारोविदं'. ६ 'पत्रं'. ७ '( वाचयति )' ८ 'विदितमस्तु देवपादानाम् । धनवृद्धिनामा वणिग्वारिपथोपजीवी नौव्यसनेन'. ९ '°स्तस्यानेककोटिसंख्यं वसु । तदिदानीं राजार्थतामापद्यते । इति श्रुत्वा देवः प्रमाणमिति । ( सविषादम् ) कष्टं खल्वनपत्यता'. १० 'ननु स गर्भः पित्र्यमृक्थमर्हति । गत्वैवममात्यं'.

**प्रतीहारी**—जं देवो आणवेदि । [यद्देव आज्ञापयति ।] (इति प्रस्थिता)

**राजा**—एहि तावत् ।

**प्रतीहारी**—इअम्हि । [इयमस्मि ।]

**राजा**—[1]किमनेन संततिरस्ति नास्तीति ।

**येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।**
**स स पापादृते तासां [2]दुष्यन्त इति घुष्यताम् ॥ २३ ॥**

**प्रतीहारी**—एव्वं णाम घोसइदव्वं । (निष्क्रम्य, पुनः प्रविश्य) काले पवुट्ठं [3]विअ अहिणंदिदं देवस्स सासणं । [एवं नाम घोषयितव्यम् । काले प्रवृष्टमिवाभिनन्दितं देवस्य शासनम् ।]

**राजा**—(दीर्घमुष्णं च निःश्वस्य) एवं भोः, संततिच्छेद[4]निरवलम्बानां कुलानां मूलपुरुषावसाने संपदः परमुपतिष्ठन्ति । ममाप्यन्ते पुरुवंशश्रीरकाल इवोप्तबीजा भूरेवंवृत्ता ।

**प्रतीहारी**—पडिहदं अमंगलं । [प्रतिहतममङ्गलम् ।]

**राजा**—धिङ्मा[5]मुपस्थितश्रेयोवमानिनम् ।

**सानुमती**—असंसअं सहि एव्व हिअए करिअ णिंदिदो णेण [6]अप्पा । [असंशयं सखीमेव हृदये कृत्वा निन्दितोऽनेनात्मा ।]

---

र्याऽऽपन्नसत्त्वा गुर्विणी स्यात् । देव ! इदानीमेव साकेतस्यायोध्याया । 'स्यात्साकेतोऽयोध्यायाम्' इति हैमः । श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना जाया भार्याऽस्य श्रूयते । पित्र्यं पितृसंबन्धि रिक्थं धनम् । 'रिक्थं धनं वसु' इत्यमरः । यद्देव आज्ञापयतीति । इयमस्मि । **येनेति** । पापादृते, स्त्रीणा भर्तृत्वेन विनेत्यर्थः । छेकवृत्त्यनुप्रासौ । एवं नाम घोषयितव्यम् । काले प्रवृष्टमिवापेक्षितसमये प्रवर्षणमिवाभिनन्दितं देवस्य शासनमिति । अकाल उप्तबीजा भूरिव ममाप्यन्ते पुरुवंशश्रीरेवंवृत्तेत्यन्वय । प्रतिहतममङ्गलम् । उपस्थितं प्राप्तं श्रेय सगर्भशकुन्तलारूपम् ।

---

**पाठा०**—१ 'अथवा किमनेन संततिरस्ति नास्ति वा'. २ 'दुःषन्त इति घुष्यताम् ॥'. ३ 'विअ सासण अहिणंदिदं महाजणेण देवस्स'. ४ '°निरवलंबना मूलपुरुषा ..परमुपतिष्ठन्ते । ममाप्यन्ते पुरुवंशश्रिय एष वृत्तान्तः ।'. ५ '°मुपनत°.'. ६ 'अप्पा भविस्सदि'.

**राजा—**

**संरोपितेऽप्यात्मनि धर्मपत्नी**
**त्यक्ता मया नाम कुलप्रतिष्ठा ।**
**कल्पिष्यमाणा महते फलाय**
**वसुंधरा काल इवोप्तबीजा ॥ २४ ॥**

**सानुमती**—[१]अपरिच्छिण्णा दाणिं दे संददी भविस्सदि । [ अपरिच्छिन्नेदानीं ते संततिर्भविष्यति । ]

**चतुरिका**—( जनान्तिकम् ) अए ! [२]इमिणा सत्थवाहवुत्तंतेण द्विउणुव्वेओ [३]भट्टा । णं अस्सासिदुं [४]मेहप्पडिच्छंदादो अज्जं माढव्वं गेण्हिअ आअच्छामि । [ अयि ! अनेन सार्थवाहवृत्तान्तेन द्विगुणोद्वेगो भर्ता । एनमाश्वासयितुं मेघप्रतिच्छन्दादार्यं माढव्यं गृहीत्वागच्छामि । ]

**प्रतीहारी**—सुट्ठु [५]भणासि । [ सुष्ठु भणसि ] ( इति निष्क्रान्ता )

**राजा**—अहो दुष्यन्तस्य संशयमारूढाः पिण्डभाजः । कुतः

**अस्मात्परं बत [६]यथाश्रुति संभृतानि**
**को नः कुले निवपनानि [७]नियच्छतीति ।**
**नूनं प्रसूतिविकलेन मया प्रसिक्तं**
**[८]धौताश्रुशेषमुदकं पितरः पिबन्ति ॥ २५ ॥**

( इति मोहमुपगत )

---

असंशयं सखीमेव हृदये कृत्वा निन्दितोऽनेनात्मा । **संरोपित इति** । नामेति संभावनायाम् । मया तादृशधार्मिकेण तादृशसावधानेन सरोपितेऽप्यात्मनि पुत्रगर्भे उत्पादितेऽपि। 'आत्मा वै पुत्रनामासि' (आ गृह्य १।१५) इति श्रुते । कुलप्रतिष्ठा पुत्रप्रसूतत्वाद्धर्मपत्नी त्यक्ताऽवधीरिता । काले स्वसमय उप्तबीजा न्यस्तबीजाऽत एव महते फलाय सस्याय कल्पिष्यमाणा वसुंधरा यथोपेक्ष्यत इत्युपमा । काव्यलिङ्गं च। श्रुत्यनुप्रास' । अष्टम्युपजातिरिन्द्रवज्रोपेन्द्रवज्रयो । अपरिच्छिन्नेदानीं ते संततिर्भविष्यति । अयि ! इमिणा अनेन सार्थवाहवृत्तान्तेन द्विगुणोद्वेगो भर्ता । एनमाश्वासयितुं मेघप्रतिच्छन्दनाम्न. सकाशादार्य माढव्यं विदूषकं गृहीत्वागच्छामि । सुष्ठु भणसि । सशयमारूढा· पिण्डदाभावात् । पिण्डभाजः पितरः । **अस्मादिति** । बतेति खेदे । अस्मात्परं दुष्यन्तात्परं यथाश्रुति वेदानतिक्रमेण नोऽस्माकं

---

**पाठा०**—१ 'अपरिचत्ता दाणिं दे भविस्सदि ।'. २ 'एदं पत्तं पेसअंतेण दिउणाणुदावो'. ३ 'भट्टा अमच्चेण'. ४ 'मेहच्छण्णावट्टिदं संतावणिव्वावइत्तअं'. ५ 'दे भणिदं'. ६ 'यथास्मृति'. ७ 'करिष्यतीति'. ८ 'धौताश्रुसेकमुदकं'.

**चतुरिका**—( ससंभ्रममवलोक्य ) समस्ससदु भट्टा । [ समाश्वसितु भर्ता । ]

**सानुमती**—हद्धी हद्धी । सदि खु दीवे ववधाणदोसेण एसो अंधआरदोसं [१]अणुहोदि । अहं दाणिं एव्व णिव्वुदं करेमि । अहवा सुदं मए सउंदलं [२]समस्ससअंतीए महेंदजणणीए मुहादो-[३]जण्णभाओस्सुआ देवा एव्व तह अणुचिट्ठिस्संति जहअइ-रेण धम्मपदिणिं भट्टा अहिणंदिस्सदि त्ति । ता ण [४]जुत्तं कालं पडि-पालिदुं । जाव इमिणा वुत्तंतेण पिअसहिं समस्सासेमि । [ हा धिक् हा धिक् । सति खलु दीपे व्यवधानदोषेणैषोऽन्धकारदोषमनु-भवति । अहमिदानीमेव निर्वृतं करोमि । अथवा श्रुतं मया शकुन्तलां समा-

---

कुले सभृतानि बहूपकरणयुक्तानि निवपनानि श्राद्धादीनि । 'पितृदानं निवाप स्यात्' इत्यमर । को नियच्छति ददाति ? दास्यतीत्यर्थ. । 'वर्तमानसामीप्ये वर्तमान-वद्वा' (पा. ३।३।१३१ ) इति लट् । इति कारणान्नूनमुत्प्रेक्षे । प्रसूतिविकलेन पुत्र-रहितेन मया प्रसिक्तं दत्तमुदकं धौतमश्रु येन तच्च तच्छेषं च तादृक्पितर· पिबन्ति । काव्यलिङ्गोत्प्रेक्षानुप्रासाः । वसन्ततिलकं वृत्तम् । 'राजा—दीर्घमुष्णं च नि.श्वस्य' इत्यादिनैतदन्तेन छलनं नामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'आत्मावसादनं यत्तु छलनं तदुदाहृतम्' इति । 'राजा—सरोपिते' इत्यादिना 'मोहमुपगतः' इत्य-न्तेन मूर्च्छना नाम कामदशोक्ता । समाश्वसितु भर्ता । सति खलु दीपे व्यवधानं देशान्तरेणापवरकादिना स च एव दोषस्तेनान्धकारदोषं मोहलक्षणम् । अथ च तिमिरकृतं दोषं वस्त्वदर्शनलक्षणमनुभवति । सत्यामपि शकुन्तलायां तदद-र्शने प्रस्तुते साम्याद्दीपकस्याप्रस्तुतस्य वचनादप्रस्तुतप्रशंसा । अहमिदानी-मेव निर्वृतं सुखितं करोमि । 'अथवा' इत्याक्षेपे । श्रुतं मया शकुन्तला समाश्वासयन्त्या महेन्द्रजनन्या अदितेर्मुखाद्यज्ञभागोत्सुका देवा एव तथानुष्ठास्यन्ति यथाऽचि-

---

**पाठा०-१ 'अणुभवदि राएसी । चेटी-भट्टा, अलं संदाविदेण । वअत्थो जेव पहू अवरासुं देवीसुं अणुरूवपुत्तजम्मेण पुव्वपुरिसाणं अरिणो भविस्सदि । ( आत्मगतम् । ) ण मे वअणं पडिच्छदि भट्टा । अध वा अणुरूवं जेव ओसधं आदंकं णिअत्तेदि । राजा-( शोकनाटितकेन ) सर्वथा,-आमूलसन्तति कुल-मेतत्पौरवं प्रजावन्ध्ये । मय्यस्तमितमनार्ये देश इव सरस्वतीस्रोतः । ( इति मोहमुपगतः ) चेटी-( ससम्भ्रमम् ) समस्ससदु समस्सदु भट्टा । मिश्र०-किं इदाणिं जेव'. २ 'संभावअंतीए'. ३ 'जण्णभाअसमूसुआओ देवदाओ'. ४ 'जुत्तं मम एत्थ विलंबिदुं ।'.**

श्वासयन्त्या महेन्द्रजनन्या मुखाध्वरभागोत्सुका देवा एव तथानुष्ठास्यन्ति यथाचिरेण धर्मपत्नीं भर्ताभिनन्दिष्यतीति। तन्न युक्तं कालं प्रतिपालयितुम्। यावदनेन वृत्तान्तेन प्रियसखीं समाश्वासयामि।] (इत्युद्भ्रान्तकेन निष्क्रान्ता)

(नेपथ्ये[१])

अब्बम्हण्णं। [अब्रह्मण्यम्।]

**राजा**—(प्रत्यागतचेतनः कर्णं दत्त्वा) अये, माढव्यस्येवार्तस्वरः[३]। कः कोऽत्र भोः?।[४]

(प्रविश्य)

**प्रतीहारी**—(ससंभ्रमम्) परित्ताअदु देवो संसअगदं वअस्सं। [परित्रायतां देवः संशयगतं वयस्यम्।]

**राजा**—केनात्तगन्धो माणवकः?।

---

रेण धर्मपत्नी शकुन्तला भर्ताभिनन्दिष्यतीति। तन्न युक्तं कालं प्रतिपालयितुम्, विलम्बं कर्तुमित्यर्थ। यावदनेन वृत्तान्तेन प्रियसखी शकुन्तला समाश्वासयामि। 'श्रुतम्' इत्यादिना वक्ष्यमाणमातलिप्रवेशः सूचित। अनेनादानं नामाङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'बीजकार्योपगमनमादानमिति सञ्ज्ञितम्' इति। भर्ता शकुन्तलामभिनन्दिष्यतीति बीजकार्योपगमनम्। 'उद्भ्रान्तकेन' इत्युद्भ्रान्तकनाम्नोत्प्लुतिकरणेन। तल्लक्षणं **संगीतसुधानिधौ**—'पूर्वं दक्षिणमङ्घ्रिमुत्थापयित्वात्र कुञ्चयेत्। वामं शीघ्रं भ्रमेद्वामावर्तमुद्भ्रान्तकं विदुः॥ देशीविदा तु केषाचिद्बाह्यभ्रमरिका मता॥' इति। अब्रह्मण्यमवध्यः। 'अब्रह्मण्यमवध्योक्तौ' इत्यमर। माढव्यस्येव विदूषकस्येव।

---

**पाठा०**—१ 'प्रत्यागतचेतनः'. २ 'चेटी–भट्टा, मा णाम सो माधव्वतवस्सी पिंगलिआमिस्सिआहिं चित्तफलअहत्थो पाविदो भविस्सदि। राजा–चतुरिके, गच्छ मद्वचनादनिषिद्धपरिजनां देवीमुपालभस्व। चेटी–जं देवो आणवेदि। (इति निष्क्रान्ता) (नेपथ्ये)'. ३ 'परमार्थतो भीतिभिन्नस्वरो ब्राह्मणः। कः कोऽत्र'. ४ 'कंचुकी–आज्ञापयतु देवः। राजा–निरूप्यतां किमेवं माधव्यमाणवकः क्रन्दतीति। कंचु०–यावदालोकयामि। (इति निष्क्रम्य ससंभ्रमः पुन प्रविष्ट) राजा–पार्वतायन, न खलु किंचिदत्याहितम्। कंचुकी–एवम्। राजा–तत्कुतोऽयं वेपथुः। तथा हि–प्रागेव जरसा कम्पः स विशेषेण संप्रति। आविष्करोति सर्वाङ्गमश्वत्थमिव मारुतः॥ कंचु०–परित्रायतां सुहृदं महाराजः। राजा–कस्मात् परित्रातव्यः। कंचु०–महतः कृच्छ्रात्। राजा–अयि, भिन्नार्थमभिधीयताम्। कंचु०–योऽसौ दिगवलोकनप्रासादो मेघच्छन्नो नाम। राजा–किं तत्र। कंचु०–तस्याग्रभागाद्गृहनीलकण्ठैरनेकविश्रामविलङ्घ्यशृंगात्। सखा प्रकाशेतरमूर्तिना ते केनापि सत्त्वेन निगृह्य नीतः॥ राजा...ममापि'.

**प्रतीहारी**—अदिट्ठरूवेण केण वि सत्तेण अदिक्कमिअ मेहप्पडिच्छंदस्स प्पासादस्स अग्गभूमिं आरोविदो। [अदृष्टरूपेण केनापि सत्त्वेनातिक्रम्य मेघप्रतिच्छन्दस्य प्रासादस्याग्रभूमिमारोपितः।]

**राजा**—(उत्थाय) मा तावत्। ममापि सत्त्वैरभिभूयन्ते गृहाः। अथवा,—

**अहन्यहन्यात्मन एव ताव-**
**ज्ज्ञातुं प्रमादस्खलितं न शक्यम्।**
**प्रजासु कः केन पथा प्रयाती-**
**[1]त्यशेषतो वेदितुमस्ति शक्तिः॥ २६॥**

(नेपथ्ये)

भो वअस्स! अविहा अविहा। [भो वयस्य! अविहा अविहा।]

**राजा**—(गतिभेदेन परिक्रामन्) सखे! न भेतव्यं न भेतव्यम्।

(नेपथ्ये)

(पुनस्तदेव पठित्वा) कहं ण भाइस्सं?। एस मं को वि [2]पच्चवणदसिरोहरं मिच्छुं विअ तिण्णभंगं करेदि। [कथं न भेष्यामि?। एष मां कोऽपि प्रत्यवनतशिरोधरमिक्षुमिव त्रिभङ्गं करोति।]

**राजा**—(सदृष्टिक्षेपम्) [3]धनुस्तावत्।

---

परित्रायता देवः। सशयगतं जीवनमरणसशयं प्राप्तं वयस्यं विदूषकम्। अनेन भयनामकं संध्यन्तराङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'भयं त्वाकस्मिकत्रासः' इति। आत्तगन्धोऽभिभूतः। 'आत्तगन्धोऽभिभूतः स्यात्' इत्यमरः। माणवको विदूषकः। अदृष्टरूपेण केनचित्सत्त्वेन जन्तुनाऽतिक्रम्य मेघप्रतिच्छन्दनाम्नः प्रासादस्याग्रभूमिमारोपितः। सत्त्वेनातिक्रम्येति यदुक्तं तन्निषेधे। मा तावदिति भिन्नं वाक्यम्। ममाप्यतिधार्मिकस्य यथाशास्त्रं प्रजापरिपालकस्य नानायज्ञादिकर्तुर्गृहाः सत्त्वैरभिभूयन्त इति प्रश्नकाकुः। 'अथवा' इत्याक्षेपे। **अहनीति**। अहन्यहनि प्रतिदिनमात्मनः प्रमादस्खलितमनवधानेन विपरीतकरणं ज्ञातुं तावदादौ न शक्यम्। एवकारव्यवच्छेद्यमाह—**प्रजास्विति**। प्रजासु मध्ये को जनः केन पथा प्रयातीत्यशेषतो वेदितुं ज्ञातुमात्मनः शक्तिर्नास्तीति सबन्धः। ज्ञातुं वेदितुमित्यर्थालंकारः। छेकवृत्त्यनुप्रासौ। त्रयोदश्युपजातिरिन्द्रवज्रोपेन्द्र-

---

**पाठा०**—१ '°त्यशेषतः कस्य पुनः प्रभुत्वम्।'. २ 'पच्छामोडिअ सिरोधरं इक्खुं विअ भग्गगंठिं करिदुं इच्छदि।'. ३ 'धनुधनु°'.

(प्रविश्य शार्ङ्गहस्ता)

**यवनी**—भट्टा! एदं हत्थावावसहिदं सरासणं। [भर्तः! एतद्धस्तावापसहितं शरासनम्।]

(राजा सशरं धनुरादत्ते)

(नेपथ्ये)

**एष त्वामभिनवकण्ठशोणितार्थी**
**शार्दूलः पशुमिव हन्मि चेष्टमानम्।**
**आर्तानां भयमपनेतुमात्तधन्वा**
**दुष्यन्तस्तव शरणं भवत्विदानीम्॥ २७॥**

**राजा**—(सरोषम्) कथं मामेवोद्दिशति[2]। तिष्ठ कुणपाशन! त्वमिदानीं नभविष्यसि। (शार्ङ्गमारोप्य) वेत्रवति! सोपानमार्गमादेशय।

**प्रतीहारी**—इदो इदो देवो। [इत इतो देवः।]

(सर्वे सत्वरमुपसर्पन्ति)

**राजा**—(समन्ताद्विलोक्य) शून्यं खल्विदम्।

---

वज्रयोः। भो वयस्य! अविहेति खेदे निपात। 'अविहाविहा निर्वेदे' इत्युक्तेः। गतिभेदेन, क्रोधोद्धतगत्येत्यर्थः। कथं न भेष्यामि?। एष मां कोऽपि प्रत्यवनतशिरोधरमिक्षुमिव त्रिभङ्गं त्रिखण्डं करोति। एतद्धस्तावापसहितं ज्याघातवारणसहितं शरासनं धनु। **एष इति।** अभिनवं नूतन यत्कण्ठशोणितं तदर्थी शार्दूलो व्याघ्रः। 'शार्दूलद्वीपिनौ व्याघ्रे' इत्यमर। चेष्टमानमितस्ततो वलमानं पशुमिवैष वा हन्मि। 'अभिनवे'त्यादिविशेषणमेतदोऽपि योज्यम्। चेष्टमानमिति युष्मदोऽपि। अनेन बीभत्सरसो ध्वनित.। तल्लक्षणं तु–'हृद्यानां तु पदार्थानां दर्शनश्रवणादयः। स्वभावाद्धातुदोषाद्वा वस्त्वत्यन्ताप्रियात्मकम्। स्याद्विभावोऽथानुभवाद्धृत्कम्पो गात्रधूननम्। अथ संचारिणो मोहावेगापस्मारमृत्यवः। व्याधिश्च यत्र बीभत्सः स स्थायिन्या जुगुप्सया। शुद्धोऽशुद्धोऽत्यन्तशुद्धो बीभत्सस्तु त्रिधा मतः। आद्यौ रुधिरविष्ठादिशुद्धाशुद्धविभावजौ॥' इति। **दशरूपके**ऽपि ('४।७३) —'रुधिरान्त्रकीकसवसामासादिभिः क्षोभण' इति द्वितीयो बीभत्समेदः। आर्तानां पीडितानां भयमपनेतुं दूरीकर्तुमात्तधन्वा गृहीतचाप इति स्वाभाविकं क्रोधावेगसूचनम्। उपमावृत्तिश्रुत्यनुप्रासाः। प्रहर्षिणी वृत्तम्। अनेनौजो नाम

---

**पाठा०–१ 'ससरं सरासणं हत्थावाओ अ।'. २ 'न भवसि'. ३ 'पार्वतायन सोपान०'. ४ 'अये, शून्यमिदम्।'.**

( नेपथ्ये )

[1]अविहा अविहा । अहं अत्तभवंतं पेक्खामि । तुमं मं ण पेक्खसि ? । [2]बिडालग्गहीदो मूसओ विअ णिरासो म्हि जीविदे संवुत्तो । [ अविहा अविहा । अहमत्रभवन्तं पश्यामि । त्वं मां न पश्यसि ? । बिडालगृहीतो मूषिक इव निराशोऽस्मि जीविते संवृत्तः । ]

**राजा**—भोस्तिरस्करिणीगर्वित ! मदीयं शस्त्रं त्वां [3]द्रक्ष्यति । एष तमिषुं संदधे,—

**यो हनिष्यति वध्यं त्वां रक्ष्यं [4]रक्षति च द्विजम् ।**
**हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः ॥ २८ ॥**

( इत्यस्त्रं संधत्ते )

( ततः प्रविशति विदूषकमुत्सृज्य मातलिः )

**मातलिः**—राजन् !

संध्यन्तराङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'ओजस्तु वागुपन्यासो निजशक्तिप्रकाशकः' इति । तदभिप्रायेण राजा सरोषमिति । कुणपाशन राक्षस । 'राजा—सरोषम्' इत्यादिनैतदन्तेन क्रोधो नाम संध्यन्तराङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'क्रोधस्तु चेतसो दीप्तिरपराधादिदर्शनात्' इति । इत इतो देवः । अविहा खेदे । अहमत्रभवन्तं पूज्यं राजानं पश्यामि । त्वं मा न पश्यसि ? । बिडालगृहीतो मार्जारगृहीतो मूषिक इव निराशोऽस्मि जीविते संवृत्तः । अनेनोपमानेन त्यागेऽपि जीविताभावः सूचितः । तिरस्करिणी विद्या तया गर्वित ! यद्यहं न पश्यामि तथापि मदीयं शस्त्रं त्वां द्रक्ष्यति । एष इत्यस्य श्लोकेनान्वयः । **य इति ।** यः शरो वध्यं त्वां हनिष्यति प्रहरिष्यति । द्विजं विदूषकं रक्ष्यं रक्षति रक्षिष्यति । तमिषुं संदध इति संबन्धः । एकस्योभयकारित्वे दृष्टान्तमाह— **हंस इति ।** अत्रोपमेय उभयस्यादृष्टत्वेन रूपेणैक्यं विवक्षितम् । 'राजा—भोः' इत्यादिनैतदन्तेन व्यवसायो नामाङ्गमुपक्षिप्तम् । तल्लक्षणं **दशरूपके ।** (१।४७)— 'व्यवसायः स्वशक्त्युक्तिः' । राज्ञा स्वशक्तेराविष्करणात् । 'नेपथ्ये' इत्यादिनैतदन्तेन रौद्रो रसो ध्वनितः । तल्लक्षणं तु—'हन्तृप्रकृतयो रक्षो दैत्याद्यन्यायकारिणः । जिघांसाद्याश्च यत्र स्युर्विभावाः परिकीर्तिताः ॥ भृकुटी रक्तनेत्रत्वं कपोलस्फुरणं तथा । दन्तौष्ठपीडनं हस्तनिष्पेषोऽथान्यविग्रहे । तलाद्यैस्ताडनं छेदो मर्दः पाटनमोटने । शस्त्राणां ग्रहणं घातः प्रहारो रुधिरस्रुतिः ॥ एतेऽनु-

**पाठा०**—१ 'परित्ताहि, परित्ताहि'. २ 'मज्जारगहिदो विअ उंदुरो णिरासो'. ३ 'न पश्यति'. ४ 'रक्षिष्यति'.

कृताः शरव्यं हरिणा तवासुराः
शरासनं तेषु विकृष्यतामिदम् ।
प्रसादसौम्यानि सतां सुहृज्जने
पतन्ति चक्षूंषि न दारुणाः शराः ॥ २९ ॥

**राजा**—(ससंभ्रममस्त्रमुपसंहरन्) अये, मातलिः । स्वागतं [1]महेन्द्रसारथे ! ।

(प्रविश्य)

**विदूषकः**—[2]अहं जेण इट्ठिपसुमारं मारिदो सो इमिणा साअदेण अहिणंदीअदि । [अहं येनेष्टिपशुमारं मारित. सोऽनेन स्वागतेनाभिनन्द्यते ।]

**मातलिः**—(सस्मितम्) आयुष्मन् ! श्रूयतां [3]यदस्मि हरिणा [4]भवत्सकाशं प्रेषितः ।

**राजा**—अवहितोऽस्मि ।

**मातलिः**—अस्ति । कालनेमिप्रसूतिर्दुर्जयो नाम दानवगणः ।

**राजा**—अस्ति । श्रुतपूर्व मया नारदात् ।

**मातलिः**—

---

भावा बोधावमर्शावेगौ च चापलम् । खेदवेपथुरोमाञ्चगद्गदस्वरतादयः ॥ भावाः संचारिणः स्थायी क्रोधो रौद्रोऽभ्यधायि सः ॥' इति । **कृता इति** । हरिणेन्द्रेणासुरा दैत्यास्तव शरव्यं लक्ष्यं कृता. । 'लक्षं लक्ष्यं शरव्यं च' इत्यमर. । अत इदं शरासनं तेषु विकृष्यताम् । तदर्थमहमागतोऽस्मीति सूचितम् । सूक्ष्मकाव्यलिङ्गं च । सुहृज्जने सता प्रसादेन सौम्यान्यनुग्राणि चक्षूंषि पतन्ति न दारुणा मर्मभेदिन. शराः । तेन तेषु धनुराकर्षणमात्रं न, अपि तु शरपातोऽपि कर्तव्य इति भाव. । अत्र 'तव मयी'ति विशेषे वक्तव्ये 'सता सुहृज्जन' इति सामान्योक्तेरप्रस्तुतप्रशंसा । सतां तादृशचक्षुषा सुहृज्जनसंबन्धप्रतीतेः समालंकारो व्यङ्ग्यः । न दारुणा इति व्यतिरेक· । वृत्त्यनुप्रासः । वंशस्थं वृत्तम् । अत्र बाणम् । 'अये' इत्याश्चर्ये । मातलेर्महत्त्वमिन्द्रसारथित्वेनैवेति 'महेन्द्रसारथे' इत्युक्तिः । अहं येनेष्टिपशुमारं मारितः सोऽनेन स्वागतेनाभिनन्द्यते । अस्मीत्यहमर्थे निपातः । हरिणेन्द्रेण । अवहितोऽस्मि सावधानोऽस्मि । 'राजा—अस्ति' इति पूर्वस्योत्तररूपं भिन्नं

---

**पाठा०–१ 'देवराजसारथे'. २ 'भो मणं म्हि इमिणा अहं पसुमारणेण मारिदुं ण पारिदो । भवं उण इमं साअदेण अहिणंददि ।'. ३ 'यदर्थमस्मि'. ४ 'त्वत्सकाशं'.**

सख्युस्ते स किल शतक्रतोरजय्य-[1]
स्तस्य त्वं रणशिरसि स्मृतो निहन्ता ।
उच्छेत्तुं प्रभवति यन्न सप्तसप्ति-
स्तन्नैशं तिमिरमपाकरोति चन्द्रः ॥ ३० ॥

स भवानात्तशस्त्र एव इदानीं तमैन्द्ररथमारुह्य[2] विजयाय प्रतिष्ठताम् ।

राजा—अनुगृहीतोऽहमनया[3] मघवतः संभावनया । अथ माढव्यं प्रति भवता किमेवं प्रयुक्तम् ? ।

मातलिः—तदपि कथ्यते । किंचिन्निमित्तादपि मनःसंतापादायुष्मान्मया विक्लवो दृष्टः । पश्चात्कोपयितुमायुष्मन्तं तथा कृतवानस्मि । कुतः

ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणां कुरुते ।
प्रायः[4] स्वं महिमानं क्षोभात् प्रतिपद्यते हि जनः ॥ ३१ ॥

राजा—(जनान्तिकम्) वयस्य ! अनतिक्रमणीया दिवस्पतेराज्ञा । तदत्र[5] परिगतार्थं कृत्वा मद्वचनादमात्यपिशुनं ब्रूहि,—

---

वाक्यम् । **सख्युरिति** । 'किल' इति प्रसिद्धौ । ते तव सख्युर्मित्रस्य । अनेन जन्मप्रभृति तेन सह मैत्र्यभिनियोगत्वेनेदं मन्तव्यमिति भाव । शतक्रतोरिन्द्रस्याजय्यः, प्रयत्नसहस्रैरपि जेतुमशक्य इत्यर्थः । 'क्षय्यजय्यौ शक्यार्थे' (पा ६।१।८१) इति निपातः । रणशिरसि सङ्ग्रामाग्रे तस्य दानवगणस्य त्वं निहन्ता स्मृतः । सप्तसप्तिः सूर्यो यन्नैशं निशासबन्धि तिमिरमुच्छेत्तुं नाशयितुं न प्रभवति समर्थो न भवति चन्द्रस्तदपाकरोति । दृष्टान्तः । स्तेसस्तस्येति सप्तसप्तीति छेकवृत्त्यनुप्रासाः । प्रहर्षिणी वृत्तम् । अत्रानेन स्वस्वामिनः सूर्योपमानत्वेन तेजस्वित्वं वदता तदशक्यकरत्वेनास्य चन्द्रोपमानत्वं वदतोभयत्रौचित्यं ध्वनितम् । **ज्वलतीति** । चलितं चालनं प्राप्तमिन्धनं यस्य सोऽग्निर्ज्वलति । विप्रकृत. कोपितः पन्नगः सर्प· फणां फटामूर्ध्वं कुरुत इत्यर्थः ।' फटाया तु फणा द्वयोः' इत्यमर । हि निश्चितं जनः सर्वो लोकः क्षोभाच्चित्तकौर्यात् स्वं महिमानमात्मप्रभावं प्रायो बाहुल्येन प्रतिपद्यते प्राप्नोति । मालादृष्टान्तालंकारः । भवानिति विशेषे प्रस्तुते जन इति सामान्योक्तेरप्रस्तुतप्रशंसा । लतिलिते इति छेकवृत्त्यनुप्रासौ । तत्तस्मादत्र विषये ममेन्द्राज्ञया तत्र गमनरूपेण परिगतार्थं ज्ञातार्थं कृत्वा । 'पिशुन' इति मन्त्रि-

---

पाठा०—१ '°रवध्यस्तस्य'. २ 'देवरथमारुह्य'. ३ 'गृहीतोऽस्म्यनया'. ४ 'तेजस्वी संक्षोभात्प्रायः प्रतिपद्यते तेजः ।'. ५ 'तद्गच्छ ।'.

त्वन्मतिः केवला तावत्परिपालयतु प्रजाः ।
अधिज्यमिदमन्यस्मिन्कर्मणि व्यापृतं धनुः ॥ ३२ ॥

इति ।

**विदूषकः**—जं भवं आणवेदि । [यद्भवानाज्ञापयति ।]

(इति निष्क्रान्त·)

**मातलिः**—[1]आयुष्मान् रथमारोहतु ।

(राजा रथाधिरोहणं नाटयति ।)

(इति निष्क्रान्ता· सर्वे)

**षष्ठोऽङ्कः ।**

---

नाम । **त्वन्मतिरिति** । इति ब्रूहीति संबन्धः । पूर्वं प्रजापरिपालन उभयमपि व्यापृतमासीत् । अधुना ते मतिरेवेति केवलेत्युक्तम् । अनेनोभयायत्तसिद्धित्वमात्मनः सूचितम् । द्वितीयस्यान्यत्र विनियोगमाह—**अधीति** । अन्यस्मिन्कर्मणि दानवमारणे । एतेन लोकद्वयरक्षकत्वमस्य ध्वनितम् । अधिज्यमित्यनेनैतत्समयमारभ्य दानवमारणपर्यन्तं ज्यानुत्तारणं ध्वनितम् । यद्भवानाज्ञापयति । रथाधिरोहणं नाटयतीत्यूर्ध्वजानुचर्या । तल्लक्षणं तु **संगीतरत्नाकरे**—'कुञ्चितोत्क्षिप्तपादः स्याजानुस्तनसमं यदा । न्यस्तस्याधःकृतोऽन्योऽङ्घ्रिरूर्ध्वजानुस्तदा भवेत् ॥' इति ॥

**इति श्रीमदभिज्ञानशाकुन्तलटीकायामर्थद्योतनिकायां षष्ठोऽङ्कः समाप्तः ॥**



---

पाठा०—१ 'रथमारोहत्वायुष्मान्'.

# सप्तमाङ्कस्य कथावस्तु



अस्मिन्नङ्के प्रथमतस्तावद्रथाधिरूढो राजाकाशयानेनावतरन्मातलिपरिचायितास्तपोभूमयोऽवलोकयन् प्रजापतेराश्रममवतरति। भगवान् मारीचो दाक्षायण्या पतिव्रताधर्ममधिकृत्य पृष्टः सहर्षिपत्न्यै तस्यै कथयतीति ज्ञात्वाशोकवृक्षमूले दुष्यन्तः समुपविशति। तत्र तपस्विनीभ्यामनुबध्यमानेनाबालसत्त्वेन बालेन संक्रीडितुं सिंहशिशुं प्रसभमाकृष्य 'दन्तांस्ते गणयिष्ये' इति शूरोचितकृत्यै श्चौरससुतानुरागेण राजाकृष्टो भवति। यदा च सिंहशावविमर्दान्मणिबन्धात्परिभ्रष्टं रक्षाकरण्डकं दुष्यन्तो यावद्गृह्णाति तावत्तापसीद्वयं निवेदयति—एषापराजिता नामौषधिरस्य शिशोर्जातकर्मसमये मारीचेन दत्ता। यदि जननी-जनकावात्मानं च वर्जयित्वा परो भूमिपतितां गृह्णाति चेत् सर्पो भूत्वा तं दशतीत्यनेकशो दृष्टचरमिति। तापसीसंभाषणतो ज्ञातं भवति—यदयं शिशुः पुरुवंश्यश्चास्य जनन्या नाम शकुन्तलेति। ततः संशितविरहव्रता शकुन्तला प्रविशति। तां दृष्ट्वा सर्वदमनः क एष पुरुषो मां पुत्रेत्यालिङ्गयतीति जननीं प्रति पृच्छति। सा चायमनुतापविवर्णो ह्यार्यपुत्र एवेति जानाति। ततश्च मया त्वं मुनिशापमोहादुपेक्षितासीरिति पश्चात्तापदूनहृदयो नृपोऽङ्गुलीयकोपलम्भात्स्मृतिरुपलब्धेत्युक्त्वा तदङ्गुलीयकं दर्शयति। मारीचश्च तान्द्रष्टुकामस्तत्रोपेत्य 'वत्से! चरितार्थासि, सहधर्मचारिणं न त्वया मन्युः कार्यः' इत्युपदिश्य तयोः पुनर्मिलने 'आखण्डलसमो भर्ता जयन्तप्रतिमः सुतः। आशीरन्या न ते योग्या पौलोमीसदृशी भव' इत्याशिषा संयोजयति। इति प्रस्तुतम्।

---

# सप्तमोऽङ्कः

( ततः प्रविशत्याकाशयानेन रथाधिरूढो राजा मातलिश्च )

**राजा**—मातले ! अनुष्ठितनिदेशोऽपि मघवतः सत्क्रियाविशेषादनुपयुक्तमिवात्मानं समर्थये ।

**मातलिः**—( सस्मितम् ) आयुष्मन् ! [1]उभयमप्यपरितोषं समर्थये ।

**प्रथमोपकृतं मरुत्वतः**
**प्रतिपत्त्या लघु मन्यते भवान् ।**

---

इतो निर्वहणसंधिः समाप्तिं यावत् । तल्लक्षणं यथा **सुधाकरे**—'मुखसंध्यादयो यत्र विकीर्णा बीजसंयुता । महा(यदा)प्रयोजनं यान्ति तन्निर्वहणमुच्यते ॥' इति । कार्यफलप्रयोगेणास्य संधित्वम् । तल्लक्षणं **मातृगुप्ताचार्यै**रुक्तम्—'यदाधिकारिकं वस्तु सम्यक्प्राज्ञैः प्रयुज्यते । तदर्थो य समारम्भस्तत्कार्यं कथ्यते इति ॥ अभिप्रेतं समर्थं च प्रतिरूपं क्रियाफलम् । इतिवृत्तं भवेद्यस्मिन्फलयोग. स उच्यते ॥' इति । अङ्गानि तु—'संधिर्निबोधो ग्रथनं निर्णयः परिभाषणम् । प्रसादानन्दसमया. कृतिर्भावोऽवगूहनम् ॥ पूर्वभावोपसहारौ प्रशस्तिश्च चतुर्दश ॥' इति । एतेषा लक्षणानि व्याख्यानावसरे तत्र तत्र वक्ष्यामः । अत्र दानवयुद्धं युद्धत्वेन साक्षान्निषिद्धमित्यङ्केनैव सूचितम् । प्रकृते प्रयोजनाभावादन्यद्वारा वाचिकाभिनयेनापि नोक्तम् । अनङ्गस्याभिधानमिति रसदोषापत्तेः । अतः कृतकार्ययोः सूतरथिनोरेव प्रवेशः । तत्संवादेनैव कार्यमुन्नेयम् । 'आकाशयानेने'त्यनेन मरीच्याश्रमगमनं ध्वनितम् । अनुष्ठितनिदेशः कृताज्ञः । 'मघवत इन्द्रस्ये'ति मध्यमस्थमुभयत्राप्यन्वेति । सत्क्रियाविशेषात्संमानाधिक्यात् । अनुपयुक्तमिवोपयोगरहितमिव, अर्थादिन्द्रं प्रति यन्मया कार्यं कृतं तदिन्द्रसंमाननाया सहस्रांशेनापि तुलयितुं न क्षममिति सूक्ष्मालंकार । एतेनेन्द्रस्य प्रत्युपकारशीलत्वं विनययुक्तत्वं गुणग्राहित्वं च । आत्मनस्तु परमशौर्यशालित्वमिन्द्रेण तथापूजितत्वादत्यन्तसौभाग्यास्पदत्वं च व्यज्यते । उभयं भवदुपकृतिमिन्द्रसत्कृतं च । त्वं त्वात्मोपकृतमेव तथा समर्थयसे । अहं पुनरुभयमपि । न विद्यते परितोषो यत्रार्थात्कर्त्रोस्तदपरितोषं समर्थये । इन्द्रस्तु त्वत्कर्माधिकं मन्यते, त्वं त्विन्द्रकृता पूजामधिका मन्यस इति भावः । तदेव दर्शयति—**प्रथमेति** । भवान्मरुत्वत इन्द्रस्य प्रतिपत्त्या गौरवेण पश्चात्कृतेन प्रथममुपकृतं लघु स्वल्पं मन्यते । भवतोऽवदानेन शुद्धकर्मणा विस्मित. । 'अवदानं शुद्धकर्म' इत्यमर. । सोऽपीन्द्रः सत्क्रिया स्वकृतसंमानना तस्या गुणानादरातिशयादीनथवा तया गुणांस्तस्मिन्विनयार्जवादीन्न गणयति, तव कर्म स्मृत्वा मया तस्य

---

**पाठा०-१ 'उभयत्राप्यसंतोषमवगच्छ । कुतः—उपकृत्य हरेस्तथा भवाँल्लघु सत्कारमवेक्ष्य मन्यते ।'.**

**गणयत्यवदानविस्मितो**
**भवतः सोऽपि न सत्क्रियागुणान् ॥ १ ॥**

**राजा**—मातले! मा मैवम्; स खलु मनोरथानामप्यभूमिर्विसर्जनावसरसत्कारः। मम हि दिवौकसां समक्षमर्धासनोपवेशितस्य

**अन्तर्गतप्रार्थनमन्तिकस्थं**
**जयन्तमुद्वीक्ष्य कृतस्मितेन।**
**आमृष्टवक्षोहरिचन्दनाङ्का**
**मन्दारमाला हरिणा पिनद्धा ॥ २ ॥**

---

समानना कृतेति चेतस्यपि तस्य नायातीत्यर्थः। बहुवचनेन समाननाधिक्यं ध्वन्यते। क्रिया चेत्कथं गुणा इति विरोधाभासो व्यङ्ग्यः शब्दशक्तिमूलः। त्वदवदानस्मरणेनाभिव्यक्तविस्मयस्ते विगलितवेद्यान्तरत्वेन किमपि न स्मरतीति भावः। तेन 'उदात्तवस्तुना संपत्' इत्युदात्तालंकारः। हेतुश्रुत्यनुप्रासौ। उपमेयोपमा व्यङ्ग्या। परस्पर क्रियाजननादन्योन्यमपि। अत्र सत्क्रियालक्षणे कारणे सत्यपि यद्गणनलक्षणकार्यानुत्पत्ति सा विशेषोक्तिः। अथ च गणनाभावलक्षणकार्योत्पत्तौ कारणाभावाद्विभावनापि। यद्यपि कारणाभावो नोक्तस्तथापि तद्विरुद्धमुखेनोक्त एवेति संदेहसकरः। अवदानविस्मितत्वेनोक्तनिमित्तत्वमुभयत्र। वैतालीयं वृत्तम्। अन्ये त्वर्धसमं प्रबोधितां मन्यन्ते। मनोरथातिभूमित्वमेव दर्शयति—**मम हीति**। मम मनुष्यमात्रस्य। दिवौकसो देवस्य न, अपि तु सकलदिवौकसां देवानाम्। श्रूयमाणतया न, अपि तु समक्षं प्रत्यक्षम्। आसनमात्रे न, अपि तु स्वार्धासने। निविष्टस्य न, अपि तूपवेशितस्येत्यस्य श्लोकेनान्वयः। **अन्तरिति**। अन्तर्गता हृद्गता प्रार्थना मन्दारमालाविषयिणी याञ्चा यस्य स तम्। न दूरस्थम्, अपि त्वन्तिकस्थं समीपस्थम्। 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा' इत्यमरः। जयन्तं पुत्रमुदधिकं वीक्ष्य दृष्ट्वा कृतस्मितेनेति तस्य मनोगता याञ्चा ज्ञात्वेति सूक्ष्मं जयन्तादप्यात्मनोऽधिकस्नेहपात्रता ध्वन्यते। हरिणेन्द्रेणामृष्टं स्पृष्टं यद्वक्षोहरिचन्दनं हृदयानुलेपः सोऽङ्कश्चिह्नमस्याः सा। अत्राङ्किपदोपादानेन मालायास्तत्कालधारणं तस्यास्तत्कालकृतं चन्दनानुलेपत्वं च व्यज्यते। तेन तत्कण्ठयोग्यत्वाम्लानत्वात्यन्तसुरभित्वमनोहरत्वादिकं ध्वन्यते। मन्दारपुष्पाणा माला मम पिनद्धामुक्ता स्वयं परिधापिता, न तु दत्ता। गौरवस्याधिक्यादुदात्तम्। न्तन्तीति न्दन्देति छेकवृत्त्यनुप्रासौ। द्वितीयोपजातिरिन्द्रवज्रोपेन्द्रवज्रयोः। मातलि—अत्यल्पमिदमुच्यते। भवानमरेश्वरादिति मनोरथातीतवस्तुदानेऽपि सामर्थ्यं ध्वनि-

---

**पाठा०-१ '°संमितां भवतः सोऽपि न सत्क्रियामिमाम्'. २ '°मप्यतिदूरवर्ती विसर्जनावसरे सत्कारः।'. ३ '°नोपविष्टस्य'. ४ 'प्रमृज्य वक्षो'.**

मातलिः—किमिव नामायुष्मानमरेश्वरान्नार्हति ? । पश्य,—

सुखपरस्य हरेरुभयैः कृतं
त्रिदिवमुद्धृतदानवकण्टकम् ।
तव शरैरधुना नतपर्वभिः
पुरुषकेसरिणश्च पुरा नखैः ॥ ३ ॥

राजा—अत्र खलु शतक्रतोरेव महिमा स्तुत्यः ।

सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
संभावनागुणमवेहि तमीश्वराणाम् ।

---

तम् । किमिव नार्हति ? यदतिप्रियमतिरम्यमत्युत्कृष्टं जीवितायमानमपि तदप्यर्हति, अन्यदर्हतीति कि वक्तव्यमिति भावः । **सुखेति** । सुखपरस्य सुखे परः सुखपरस्तस्य । यद्वा,—सुखमेव परं यस्यातिसुखिन इति विधेयम् । हरेरिन्द्रस्योभयैः । त्रिदिवं स्वर्गं । दानवाः कण्टका इव दानवकण्टकाः । उद्धृता दानवकण्टका यत्र तत्कृतम् । अत्र 'उद्धृत'पदेन तेषां समूलनाशादत्यन्ताभावो ध्वन्यते । दुःखप्रदत्वं साधर्म्यं गम्यम् । अनया वाऽनयोः पुरस्तेषां जडतरत्वं ध्वन्यते । उद्धृतदानवकण्टकत्वात्सुखपरत्वस्य विधेयत्वे वक्तव्ये यत्तस्यार्थं विधेयत्वमुक्तं तदस्य प्राधान्यं द्योतयितुम् । काव्यलिङ्गं व्यङ्ग्यम् । यथा कश्चिन्मार्गमुद्धृतकण्टकं करोतीत्युक्तिलेशः । एतेन क्लेशाभावो ध्वनितः । अथ च सुखपरस्य सिंहीविलासलालसस्य हरेः सिंहस्य त्रिदिवमिव त्रिदिवं स्थानम् । यद्वा,—त्रिदिवं सुखं विद्यते यत्र तत् । अर्शआदित्वादच् । 'त्रिदिवं सुखे । स्वर्गे च त्रिदिवा नद्याम्' इति हैमः । एतादृशं दानं मदोदकं वान्ति प्राप्नुवन्ती(ति) दोषोपन्यासः । कैरुभयैरित्यत आह—**तवेति** । अधुना नतानि पर्वाणि येषां ते नतपर्वाणस्तैः । पर्वणां नतत्वं ग्रन्थिस्थले तक्षणात् । एतेन सरलत्वं शीघ्रगत्वं मनोहरत्व च ध्वनितम् । तव परमशूरस्य विख्यातपौरुषस्य शरैर्नान्यस्येति संबन्धस्य व्यञ्जकत्वं बोद्धव्यम् । पुरा पूर्वं च पुरुषकेसरिणो नृसिंहस्य पर्वणः सकाशात् । नतमिति भावे क्तः । नतं पर्वणो येषां तैर्नखैश्च । इन्द्रं प्रत्युभयस्याप्राकरणिकत्वे नतपर्वत्वसाम्यात्तुल्ययोगिता । तेन नखैः शराणां नृसिंहपदेन चापस्य राज्ञ औपम्यं ध्वनितम् । उपमानुप्रासौ । ननु दानवा एव कण्टका इति रूपकं संदेहसंकरो वाऽस्तु कथमुपमेति चेत्,—उच्यते; 'उद्धृत'-पदस्य दानवकण्टकयोः साधारण्यान्न रूपकसाधकत्वम् । किंच रूपके कण्टकानां प्राधान्यान्नृहरिदुष्यन्तयोरनुत्कर्षापातात् । उपमाया तु दानवानामेव प्राधान्यात्तदुत्कर्षसिद्धेः । अत एव न संकरोऽपि । उपमाकरणप्रयोजनं पूर्वमेवोक्तमिति हीनोपमापि नाशङ्कनीया । द्रुतविलम्बितं वृत्तम् । **सिध्यन्तीति** । महत्स्वपि कर्मसु कार्येषु

---

पाठा०—१ 'सुरेशादायुष्मान्नार्हति ।'. २ 'महिमा । पश्य'.

किं वाऽभविष्यदरुणस्तमसां विभेत्ता
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥ ४ ॥

**मातलिः**—सदृशमेवैतत् । (स्तोकमन्तरमतीत्य) आयुष्मन् ! इतः पश्य नाकपृष्ठप्रतिष्ठितस्य सौभाग्यमात्मयशसः ।

विच्छित्तिशेषैः सुरसुन्दरीणां
वर्णैरमी कल्पलतांशुकेषु ।
विचिन्त्य गीतक्षममर्थजातं
दिवौकसस्त्वच्चरितं लिखन्ति ॥ ५ ॥

---

नियोज्याः सेवका यत्सिध्यन्ति कार्यनिष्पादका भवन्ति । ईश्वराणा प्रभूणा यत्सभावना गौरवं तस्य गुणं तमवेहि जानीहि । प्रभुमहत्त्वेनैव तत्कार्यसिद्धिः, सेवकगुणः कोऽपि नास्तीति भाव । 'संभावना वासनाया गौरवे ध्यानकर्मणि' इत्यजय' । अत्रेन्द्रे आत्मनि च विशेषे प्रस्तुतेऽप्रस्तुतप्रभुभृत्यवचनादप्रस्तुतप्रशंसा । अनया च स्वस्य भृत्यत्वं तस्य प्रभुत्वं च सूचयन्त्या विनयातिशयद्योतनादुदात्तालंकारो व्यज्यते । अरुणस्तमसां भेत्ताऽन्धकारनाशकः कि वा कथमभविष्यत् ? । चेद्यदि सहस्रकिरणो रविर्धुर्यग्रे नाकरिष्यदिति क्रियातिपातः । दृष्टान्तालंकारः, अनुप्रासश्च । किवेति निपातसमुदायः कथमर्थे । वसन्ततिलकं वृत्तम् । सदृशमेवैतत्तवेत्यर्थः । तेनैतादृशमेव वक्तुमुचितमिति भाव । स्तोकमल्पमन्तरमवकाशमतीत्यातिक्रम्येति कविवचनम् । मातलि पुनस्तस्यैव स्तुतिं विवक्षन्नाह—**आयुष्मन्निति** । नाकपृष्ठे स्वर्गतले प्रतिष्ठितस्य सर्वदा स्थिरत्वेन प्रतिष्ठा प्राप्तस्य । **विच्छित्तीति** । सुरसुन्दरीणा न तु सुरयोषिता, विच्छित्तिशेषैरङ्गरागावशेषैर्यक्षकर्दमादिभि' । 'विच्छित्तिरङ्गरागेऽपि हारविच्छेदयोरपि' इति विश्वः । तैः स्वहस्तेन तासामङ्गरागं कृत्वावशेषितैरित्यनेन त्वच्चरितानामतिप्रियत्वमासूचितम् । वर्णैर्वर्णकै. सितपीतादिभिरमी दिवौकसः कल्पलतांशुकेषु कल्पवल्लीवस्त्रेषु । एतेनैतदेवाधिकरणं तल्लिखनयोग्यमिति ध्वन्यते । त्वच्चरितं त्वदवदानं लिखन्ति, चरितस्यालेखनासंभवादाह । गीतक्षमं गातुं योग्यमर्थजातमर्थसमूहं विचिन्त्य विचार्य त्वदीयचरितं गीतनिबद्धं कृत्वा लिखन्तीत्यर्थः । क्वचित् **'अर्थतत्त्वम्'** इति पाठ । एवं विशिष्टकर्तृविशिष्टकरणविशिष्टाधिकरणनिर्देशेन चरितलेखनस्य वर्णितत्वादुदात्तालंकारः । तेन तेषामेवंविधसदाशृङ्गाररसोपभोगयोग्यस्थितिस्त्वत्प्रसादादिति वस्तु ध्वनितम् । अत्र विच्छित्तिविशेषस्य यक्षकर्दमादेर्वर्णकत्वेन निरूपणात्तस्य च प्रकृतोपयोगित्वाच्च परिणामालंकारश्च । श्रुतिवृत्त्यनुप्रासौ च ।

---

**पाठा०—१ 'किं प्राभविष्यदरुणस्तमसां वधाय'. २ 'सदृश तवैतत्'. ३ 'कल्पलतान्तरेषु । संचिन्त्यं गीतिक्षम°'.**

**राजा**—मातले! असुरसंप्रहारोत्सुकेन पूर्वेद्युर्दिवमधिरोहता मया न लक्षितः स्वर्गमार्गः । कतरस्मिन्मरुतां पथि वर्तामहे ? ।

**मातलिः**—

**त्रिस्रोतसं वहति यो गगनप्रतिष्ठां**
**ज्योतींषि वर्तयति च प्रविभक्तरश्मिः ।**
**तस्य द्वितीयहरिविक्रमनिस्तमस्कं**
**वायोरिमं परिवहस्य वदन्ति मार्गम् ॥ ६ ॥**

---

अष्टम्युपजातिरिन्द्रवज्रोपेन्द्रवज्रयो । महापुरुषत्वादस्य स्वस्तुतिश्रवणं लज्जाकरमसावपि तत्स्तुतेर्न विरमतीति राजा तस्य विषयान्तरसंचारं करोति । असुराणां दैत्यानां संप्रहार उत्सुकेन पूर्वेद्युर्दिवं स्वर्ग प्रत्यधिरोहता मया स्वर्गमार्गो न लक्षितः; किं नु कुत्र वर्तेत इति न ज्ञातमिति भाव. । मरुता पथि वायुस्कन्धे । तत्र सप्त वायुस्कन्धा आवहादयः । तन्मध्ये कतरस्मिन्मरुतां स्कन्धे वर्तामहे ? । तदुक्तं **सिद्धान्तशिरोमणौ**—'भूवायुरावह इह प्रवहस्तदूर्ध्वं स्यादुद्वहस्तदनु संवहसंज्ञकश्च । अन्यस्ततोऽपि सुवह. प्रतिपूर्वकोऽस्माद्बाह्यापरावह इमे पवनाः प्रसिद्धाः ॥' इति । **त्रिस्रोतसमिति** । यो गगने प्रतिष्ठा स्थितिर्यस्या एवंभूता त्रिस्रोतसं गङ्गा वहति । तथा च **विष्णुपुराणे**—'विष्णोर्बिभर्ति या भक्त्या शिरसाहर्निशं ध्रुवः । ततः सप्तर्षयो यस्या प्राणायामपरायणाः ॥ तिष्ठन्ति वीचिमालाभिः सिच्यमानजटाजले । वायोर्वै संततैर्यस्याः प्लावितं शशिमण्डलम् ॥ भूयोऽधिकतमा कान्ति वहत्येतदह.क्षये । मेरुपृष्ठे वहत्युच्चैर्निष्क्रान्ता शशिमण्डलात् ॥' इति । यो मार्गः प्रविभक्ता रश्मयोऽर्थाद्वायुरूपा एव यत्र कर्मणि । ज्योतींषि ध्रुवादिनक्षत्रान्तानि वर्तयति परिभ्रमयति । तथा च **विष्णुपुराणे**—'सूर्याचन्द्रमसौ तारा नक्षत्राणि ग्रहै. सह । वातानीकमयैर्बन्धैर्ध्रुवैर्बद्धानि तानि वै ॥' इति । तथा 'ग्रहर्क्षताराधिष्ण्यानि ध्रुवे बद्धान्यशेषत । भ्रमन्त्युचितचारेण मैत्रेयानिलरश्मिभिः ॥' इति । तस्य परिवहस्य परिवहनाम्नो वायोरिमं मार्ग वदन्ति । द्वितीयो हरेर्वामनावतारे विक्रम. पादनिक्षेपस्तेन निस्तमस्कं पापरहितं शोकरहितं च । 'तमोऽन्धकारे स्वर्भानौ पापे शोके गुणान्तरे' इति हैमः । तदुक्तं **वामनपुराणे**—'क्रमत्रये तोयमवेक्ष्य दत्तं महासुरेन्द्रेण विभुर्यशस्वी । चक्रे ततो लङ्घयितुं त्रिलोकं त्रिविक्रमं रूपमनन्तशक्तिः ॥ कृत्वानुरूपं दितिजाश्च हत्वा प्रणम्य चर्षीन् प्रथमक्रमेण । महीं महीध्रै. सहिता महार्णवाज्जहार रत्नाकरपत्तनै-

---

**पाठा०-१ '°रधिरोहता न लक्षितोऽयं प्रदेशो मया । तत्कथमस्मिन्पथि वर्तामहे मरुताम् ।'. २ 'चक्रविभक्तरश्मिः'. ३ 'तस्य व्यपेतरजसः प्रवहस्य वायोर्मार्गो द्वितीयहरिविक्रमपूत एषः ।'.**

**राजा**—मातले ! अतः खलु सबाह्यकरणो[1] ममान्तरात्मा प्रसीदति (रथाङ्गमवलोक्य) मेघपदवीमवतीर्णौ[2] स्वः ।

**मातलिः**—कथमवगम्यते[3] ? ।

**राजा**—

**अयमरविवरेभ्यश्चातकैर्निष्पतद्भि-**
**र्हरिभिरचिरभासां तेजसा चानुलिप्तैः ।**
**गतमुपरि घनानां वारिगर्भोदराणां**
**पिशुनयति रथस्ते सीकरक्लिन्ननेमिः ॥ ७ ॥**

---

र्युताम् ॥ भुवं सनाकं त्रिदशाधिवास सोमार्कऋक्षैरभिनन्दितं नभः । देवो द्वितीयेन जहार वेगात्क्रमेण देवप्रियमीप्सुरीश्वर. ॥' इति । अन्यत्रापि—'क्रमेणैकेन जगती स जहार चराचराम् । नभश्चाक्रमतस्तस्य सूर्येन्दू सव्यदक्षिणौ । द्वितीयेन क्रमेणाथ स्वर्महर्जनतापसाः ॥' इति । **विष्णुपुराणे**ऽस्यान्वर्थताप्युक्ता—'यावन्त्यश्चैव तास्तारास्तावन्तो वातरश्मयः । सर्वे ध्रुवनिबद्धास्ते भ्रमन्तो भ्रामयन्ति तम् ॥ तैलपीडा यथा चक्रं भ्रमन्तो भ्रामयन्ति वै । तथा भ्रमन्ति ज्योतींषि वातविद्धानि सर्वशः ॥ अलातचक्रवद्यान्ति वातचक्रेरितानि तु । यस्माज्ज्योतींषि वहति' इति । तदुक्तं **सिद्धान्तशिरोमणौ**—'भूमेर्बहिर्द्वादशयोजनानि भूवायुपुत्राम्बुदविद्युताद्यम् । तदूर्ध्वगो यः स चिरंगतस्य प्रत्यागतिस्तस्य तु मध्यसंस्था ॥ नक्षत्रकक्षाः खचरै. समेता यस्मादतस्तेन समागतोऽयम् । यथाजर. खेचरचक्रयुक्तो भ्रमत्यजस्रं प्रवहानिलेन ॥' इति । अङ्गभूतमहापुरुषचरितवर्णनादुदात्तालंकारः । अनुप्रासश्च । वसन्ततिलकं वृत्तम् । अतः पूर्वोक्तप्रवहवायुस्कन्धसंचारतः सबाह्यकरणो बाह्येन्द्रियसहित । **अयमिति** । सीकरैरम्बुकणैः क्लिन्ना आर्द्रा नेमयश्चक्रप्रान्ता यस्य स तेऽय रथः । अराणि चक्राङ्गानि तेषा विवरेभ्यश्छिद्रेभ्यः । 'अरं शीघ्रे च चक्राङ्गे' इति विश्वः । निष्पतद्भिर्निर्गच्छद्भिश्चातकैः पक्षिविशेषैः कृत्वा अचिरभासा विद्युता तेजसानुलिप्तै. परीतैर्हरिभी रथाश्वैश्च कृत्वा वारिगर्भाण्युदराणि येषा ते तादृशाम् । अनेन संपूर्णजलभरितत्वं ध्वनितम् । गर्भोदरयोरन्यतरोपादाने तु सबन्धमात्रप्रतीते. । घनानामुपरि गतं गमनं पिशुनयति सूचयति । 'पिशुनौ खलसूचकौ' इत्यमरः । अत्र 'वारिगर्भोदराणाम्' इत्यस्य हेतुद्वयं प्रत्यार्थं हेतुत्वं बोद्धव्यम् । तेन हेतुकाव्यलिङ्गयोरङ्गाङ्गिभावलक्षण सकर । वारिगर्भोदरत्वं प्रति रथविशेषणस्यार्थ हेतुत्वं बोध्यम् ।

---

**पाठा०**—१ '°करणान्तरात्मा'. २ '°मवतीर्णाः स्मः'. ३ 'आयुष्मन्, कथ°'. ४ 'अयमगविवरेभ्य°' ।. ५ 'शीकर°'.

मातलिः—[1]क्षणादायुष्मान् स्वाधिकारभूमौ वर्तिष्यते ।

राजा—( अधोऽवलोक्य ) वेगावतरणादाश्चर्यदर्शनः [2]संलक्ष्यते मनुष्यलोकः । तथा हि,—

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी
[3]पर्णस्वान्तरलीनतां विजहति स्कन्धोदयात्पादपाः ।
[4]संतानैस्तनुभावनष्टसलिला व्यक्तिं भजन्त्यापगाः
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते ॥ ८ ॥

रेभ्यरिभिरमेतिच्छेकवृत्त्यनुप्रासौ । मालिनी वृत्तम् । क्षणादिति रथवेगसूचनम् । स्वस्याधिकारो यस्या सा स्वाधिकारा । सा चासौ भूमिश्च तस्याम् । **शैलानामिति** । उन्मज्जता प्रकटीभवताम् । अत्रोन्मज्जनेन कारणेन प्राकट्यं कार्यं लक्षयता तद्गतमल्पत्वं ध्वनितम् । यत्र धर्मी लक्ष्यते तत्र तद्गता धर्मा व्यङ्ग्याः । यथा तीरे लक्षिते तद्गतपावनत्वादय । यत्र धर्मो लक्ष्यते तत्र धर्मान्तराभावात्तद्गतो विशेष एव व्यङ्ग्य । यथा विकासेन प्रसृतत्वे लक्षिते तद्गतातिशयित्वादीति आकार एव स्थितम् । शैलाना पर्वतानां शिखरादग्रभागात् । जात्येकवचनम् । मेदिन्यवरोहतीवाधो यातीवेत्युत्प्रेक्षा । पादपा वृक्षाः । स्कन्धाना प्रकाण्डानामुदयात्प्राकट्यात् । 'अस्त्री प्रकाण्ड. स्कन्ध स्यात्' इत्यमरः । अत्रोदयशब्दः प्राकट्यं लक्षयंस्तदतिशयं ध्वनयति । पर्णाना स्वतिशयेन यदन्तरं मध्यं तत्र विलीनता तदाकारता जहति, प्रकटीभवन्तीत्यर्थ. । तनोर्भावस्तनुत्वं तेन नष्टमदृश्यं सलिलं यासा ता आपगा नद्यः संतानैर्विस्तारैः, अर्थाद्दृष्टैरित्यर्थः । 'संतानो विस्तृतौ देववृक्षे चापत्यगोत्रयोः' इति धरणिः । व्यक्तिं प्रकटता भजन्ति यान्ति । पश्येति वाक्यार्थस्य कर्मत्वम् । उत्क्षिपतोर्ध्वीकुर्वतेत्युत्प्रेक्षा । केनापि भुवनं मत्पार्श्वं मन्निकटमानीयत इवेति गम्योत्प्रेक्षा । 'पार्श्वं कक्षाधरे चक्रोपान्ते पर्शुगणेऽपि च' इति विश्व. । स्वभावोक्तिकाव्यलिङ्गोत्प्रेक्षयो. संसृष्टि. । तानैस्तन्विति छेकवृत्तिश्रुत्यनुप्रासा. । शार्दूलविक्रीडितं वृत्तम् । अत्र 'कार्श्यानाकलिताम्भसः पृथुतया व्यक्तिम्' इति पठित्वाऽस्थानस्थपदलक्षणो दोष. परिहरणीय. । एतेन 'सन्तान'शब्देऽप्रयुक्तं निहतार्थत्वं वा । 'नष्ट'शब्दो नाम प्रकटलक्षणार्थानभिधानात्तत्रावाचकत्वं च परिहृतं भवति । हेतूनामार्थत्वशाब्दत्वे भिन्नवाक्यत्वेन परिहरणीये । महावाक्यत्वेनैकवाक्यत्वेऽपि 'उन्मज्जनात्' इति पठित्वा परिहर्तव्ये । **'स्कन्धोदयाः'** इति पाठे तु 'पृथुतरा.' इति पठित्वा परिहरणीये । पश्येत्यस्योत्तरं

**पाठा०**–१ 'अथ किम् । अन्यच्च, क्षणादूर्ध्वमायुष्मानात्माधिकार°'. २ 'संपद्यते'. ३ 'पर्णाभ्यन्तरलीनतां. ४ 'सधानं तनुभागनष्टसलिलव्यक्त्या

**मातलिः**—साधु दृष्टम् । (सबहुमानमवलोक्य) अहो ! [1]उदाररमणीया पृथिवी ।

**राजा**—मातले ! कतमोऽयं पूर्वापरसमुद्रावगाढः कनक[2]रसनिस्यन्दः सांध्य इव [3]मेघपरिघः सानुमानालोक्यते ? ।

**मातलिः**—आयुष्मन् ! एष खलु हेमकूटो नाम [4]किंपुरुषपर्वतस्तपःसंसिद्धिक्षेत्रम् । पश्य,—

**स्वायंभुवान्मरीचेर्यः प्रबभूव प्रजापतिः ।**
**सुरासुरगुरुः सोऽत्र सपत्नीकस्तपस्यति ॥ ९ ॥**

**राजा**—तेन ह्यनतिक्रमणीयानि श्रेयांसि । प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामि ।

**मातलिः**—[5]प्रथमः कल्पः ।[6]

(नाट्येनावतीर्णौ)

**राजा**—(सविस्मयम्)

**उपोढशब्दा न रथाङ्गनेमयः**
**प्रवर्तमानं न च दृश्यते रजः ।**

---

साधु दृष्टमिति । सबहुमानमवलोक्येति तत्क्रियानुवादकं कविवाक्यम् । अहो आश्चर्ये । उदारा महती रमणीया च । तत्स्थानस्थित्यैकदैव सर्वस्या दृग्गोचरत्वादेवमुक्तिः । पूर्वापरसमुद्रयोरवगाढ संबद्ध । साध्य· सायंकालीनो मेघोऽर्गल इव सानुमान् पर्वत. । अर्गलेनौपम्यं दैर्घ्यज्ञापनार्थम् । तच्च **विष्णुपुराणे**—'हिमवान्हेमकूटश्च निषधस्तस्य दक्षिणे । नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वता. ॥ लक्ष्यमाणौ द्वौ मध्यौ' इति । जम्बुद्वीपस्यापि लक्षयोजनत्वात्पूर्वापरसमुद्रावगाढत्वं संभवत्येव । **किंपुरुषेति** । तदुक्तं **विष्णुपुराणे**—'भारतं प्रथमं वर्षं ततः किंपुरुषं स्मृतम् । हरिवर्षं तथैवान्यन्मेरोर्दक्षिणतो द्विज ॥' इति । 'तपःसंसिद्धिक्षेत्र'मित्यनेन मारीचस्य सूचनम् । **स्वायंभुवादिति** । स्वायंभुवाद्ब्रह्मसबन्धिनो मरीचेर्यः प्रजापति कश्यपो बभूव । 'सुरासुरगुरु'रित्यनेनावश्यं नमस्करणीयत्वं सूचयति । 'सपत्नीक' इत्यनेन तवापि पत्नीयोगोऽत्र भावीति ध्वनितम् । छेकवृत्त्यनुप्रासौ । प्रथम कल्प उत्तमः पक्षः । नाट्येनावतीर्णाविति रथावतरणमेवैतयोरारोपितं कविना । कविवाक्यं चेदम् । रथावतरणे यानि चिह्नानि तेषामजातत्वात्तदेवाह—**उपोढेति** । अभूतलस्पर्शतया भूमिस्पर्शाभावेन रथाङ्गनेमय-

---

**पाठा०**—१ 'उदग्ररमणीया पृथ्वी'. २ '°रसनिष्यन्दी'. ३ 'मेघः सानुमानवलोक्यते ।'. ४ 'परं तपस्विनां सिद्धिक्षेत्रम्'. ५ 'आयुष्मन्, प्रथमः'. ६ '(रथावतरणं नाटयित्वा) एतावत्तीर्णौ स्वः । राजा—मातले, उपोढ°'.

अभूतलस्पर्शतयानिरुद्धत-
स्तवावतीर्णोऽपि रथो न लक्ष्यते ॥ १० ॥

**मातलिः**—[1]एतावानेव शतक्रतोरायुष्मतश्च विशेषः ।

**राजा**—मातले ! कतमस्मिन्प्रदेशे मारीचाश्रमः ।

**मातलिः**—( हस्तेन दर्शयन् )[2]

वल्मीकाग्रनिमग्नमूर्तिरु[3]रसा संदष्टसर्पत्वचा
कण्ठे जीर्णलताप्रतानवलयेना[4]त्यर्थसंपीडितः ।
अंसव्यापि शकुन्तनीडनिचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥ ११ ॥

---

श्चक्रप्रधय उपोढशब्दाः कृतस्वना न, रजश्च नेम्युद्धतं प्रवर्तमानं न दृश्यते । अनिरुद्धतोऽनिरोधात् यतो भूतलस्पर्शे सत्यवतरणे रश्मिनिरोधो भवति । अत्र तदभावात् । अत एवाभूतलेति त्रिष्वपि हेतुत्वेन योज्यम् । तव रथोऽवतीर्णोऽपि न लक्ष्यत इति न, अपि तु लक्ष्यत एव । **'तथावतीर्णोऽपि'** इति क्वचित्पाठः । तत्र काक्वा व्याख्येयम् । अत्र रथावतरणे कारणे सति तत्कार्याणा नेमिशब्दादीनामभावादुक्तनिमित्तकापि विशेषोक्तिः श्रुत्यनुप्रासश्च । अवतीर्णोऽपि न लक्ष्यत इति विरोधाभासोऽपि । वंशस्थं वृत्तम् । एतावानेवेति व्यतिरेकालंकारः हस्तेनेत्युत्तानितेन पताकेन । **वल्मीकेति** । वल्मीकस्य पिपीलिकाकृतमृत्पुञ्जस्याग्रं प्रान्तस्तत्र निमग्ना मूर्तिः शरीरं यस्य सः । 'अग्रमालम्बने व्राते' इति विश्वः । 'मूर्तिः काठिन्यकाययोः' इत्यमरः । अनेनानेककालतपश्चरणमुक्तम् । संदष्टाः सर्पत्वचो यत्र तेनोरसोपलक्षितः । अनेन सर्वजन्तुसाधारणत्वमुक्तम् । 'कण्ठे जीर्णे'त्यनेन स्थूलत्वं बहुशाखत्वं ध्वनितम् । लताप्रतानं वल्लीसमूहः, स वलय इव कण्ठरोमाणीवेत्युपमितसमासः । सपीडनस्य साधकत्वात् । 'वलयः कण्ठरोम्णि स्याद्वलयं कङ्कणेऽपि च' इति विश्वः । तेनात्यर्थसंपीडितः । अनेनापकारिण्यप्युपकारकत्वमुक्तम् । अंसयोर्व्याप्नोति तदंसव्यापि । अनेन महत्त्वमुक्तम् । शकुन्ताना पक्षिणा नीडं स्थानं तेन निचितं व्याप्तम् । 'स्थाने कुले चयः' इति विश्वः । जटाना मण्डलं समूहं बिभ्रत् । अनेन परनिमित्तसंपत्त्वं द्योत्यते । स्थाणुरिवाचलो निश्चलः । स्थाणुपक्षेऽपि विशेषणानि योज्यानि । उरसा मध्येन । कण्ठ उपकण्ठे, समीप इति यावत् । असः स्कन्धः । जटा प्ररोहरूपा । असौ मुनिरर्कबिम्बमभि लक्ष्यीकृत्य । कर्मप्रवचनीयत्वेन तद्योगे

---

**पाठा०**—१ 'एतावानेवायुष्मतः शतक्रतोश्च रथस्य विशेषः'. २ 'पश्य,—वल्मीकार्धनिमग्न०'. ३ '०रुरगत्वग्ब्रह्मसूत्रान्तरः'. ४ '०नात्यन्तसंपीडितः'.

राजा—नमस्ये कष्टतपसे।

मातलिः—(संयतप्रग्रहं रथं कृत्वा) महाराज! एतावदितिपरिवर्धितमन्दारवृक्षं प्रजापतेराश्रमं प्रविष्टौ स्वः।

राजा—स्वर्गादधिकतरं निर्वृतिस्थानम्। अमृतह्रदमिवावगाढोऽस्मि।

मातलिः—(रथं स्थापयित्वा) अवतरत्वायुष्मान्।

राजा—(अवतीर्य) मातले! भवान्कथमिदानीम्?।

मातलिः—संयन्त्रितो मया रथः वयमप्यवतरामः। (तथा कृत्वा) इत आयुष्मन्! (परिक्रम्य) दृश्यन्तामत्रभवतामृषीणां तपोवनभूमयः।

राजा—ननु विस्मयादवलोकयामि।

**प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने**
**तोये काञ्चनपद्मरेणुकपिशे धर्माभिषेकक्रिया।**
**ध्यानं रत्नशिलातलेषु विबुधस्त्रीसंनिधौ संयमो**
**यत्काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी॥१२॥**

---

द्वितीया। यत्र स्थितः, स मारीचाश्रम इत्यन्वयः। परिकरश्लेषोपमानुप्रासाः। शार्दूलविक्रीडितं वृत्तम्। सयता नियमिताः प्रग्रहा रश्मिरज्जवो यत्र तत्। रथमित्यार्थम्। कृत्वेति कविवचनम्। रथस्य भूमिस्पृष्टत्वादिति कृत्वा मातलिर्वदतीत्यन्वय। किमुक्तं तत्राह—**एतावाश्रमं प्रविष्टौ स्व इति**। अदितिस्तत्पत्नी तया परिवर्धिता मन्दारवृक्षा यत्र। स्वर्गादधिकतरं निर्वृतिस्थानं सुखस्थानमिति भिन्नं वाक्यम्। **अमृतेति**। ज्ञानामृतह्रदावगाहन इवेत्युत्प्रेक्षा। अत्र पूर्ववाक्यं हेतुत्वेन ज्ञेयम्। कथमिति प्रश्ने। किं करिष्यसीत्यर्थः। **प्राणानामिति**। सत्कल्पवृक्षेऽपि वन उचितावश्यकर्तव्या प्राणानां वृत्तिः प्राणधारणक्रियाऽनिलेन वायुना, न तु कल्पवृक्षदत्तवस्तुना। काञ्चनपद्मरेणुभिः कपिशे पिङ्गटवर्णे तोये जले धर्मार्थम्, न तु भोगार्थम्; अभिषेकक्रिया स्नानविधिः। रत्नशिलातलेषु ध्यानम्। आधारमात्रपर्यवसितत्वात्, न तु रत्नशिलातलत्वेन तत्र क्रीडादि। विबुधस्त्रीसंनिधौ देवयोषिदभ्याशे संयमः। अन्यसंनिधावेव सयमो न सिध्यति, विशेषतः स्त्रीसंनिधौ, ततोऽपि देवस्त्रीसंनिधावित्यर्थः। अत्र कल्प-

---

**पाठा०—१ 'नमोऽस्मै कष्ट°'. २ 'अहो, स्वर्गा°'. ३ 'समययन्त्रित एवायमास्ते रथः।'. ४ 'इतो दृश्यन्तां सिद्धमुनीनां तपो°'. ५ 'विस्मयादुभयमप्य°'. ६ 'पुण्याभिषेक°'. ७ '°गृहेषु'. ८ 'यद्वाञ्छन्ति'.**

**मातलिः**—उत्सर्पिणी खलु महतां प्रार्थना। (परिक्रम्य आकाशे) अये वृद्धशाकल्य! किमनुतिष्ठति भगवान्मारीचः?। किं ब्रवीषि?। दाक्षायण्या पतिव्रताधर्ममधिकृत्य पृष्टस्तस्यै महर्षिपत्नीसहितायै कथयतीति।

**राजा**—(कर्णं दत्त्वा) अये! प्रतिपाल्यावसरः खलु प्रस्तावः।

**मातलिः**—(राजानमवलोक्य) अस्मिन्नशोकवृक्षमूले तावदास्तामायुष्मान्, यावत्त्वामिन्द्रगुरवे निवेदयितुमन्तरान्वेषी भवामि।

**राजा**—यथा भवान्मन्यते। (इति स्थितः)

**मातलिः**—आयुष्मन्! साधयाम्यहम्। (इति निष्क्रान्तः)

**राजा**—(निमित्तं सूचयित्वा)

**मनोरथाय नाशंसे किं बाहो! स्पन्दसे वृथा?।**
**पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते॥ १३॥**

---

वृक्षादीना कारणाना सद्भावे सति तत्कार्याभावे वक्तव्ये तद्विरुद्धानिलप्राणवृत्तित्वाद्युक्तेरुक्तनिमित्ता मालाविशेषोक्ति। एतया चैतन्निवासिनां तपस्विना धैर्यातिशयो व्यज्यते। अन्यमुनयो भूयिष्ठास्तपस्विनो यत्स्थानं तपोभिः काङ्क्षन्ति तपःफलेनेच्छन्ति तस्मिन्स्थानेऽमी तपस्यन्ति तपश्चरन्ति। 'कर्मणो रोमन्थतपोभ्या वर्तिचरोः'(पा ३।१।१५) इति क्यङ्। 'तपस· परस्मैपदं च' इति परस्मैपदम्। तपोतप इति न्यनयेति स्तस्तेति छेकश्रुतिवृत्त्यनुप्रासा। हेत्वलंकारो व्यङ्ग्यः। वृत्तमनन्तरोक्तम्। खलु यस्मादुत्सर्पिण्युपर्युपरि धावन्ती महता प्रार्थनेति पूर्वार्धस्य समर्थकत्वादर्थान्तरन्यासः। अयं प्रस्तावः पतिव्रताधर्मकथनलक्षण· । खलु निश्चितम्। प्रतिपाल्योऽवसरः समयो यस्य स·। पुनरुक्तवदाभासोऽलंकारः। अशोकवृक्षेत्यनेनात्रोपविष्टस्य शोकराहित्यं भविष्यतीति ध्वनितम्। अन्तरं मध्यमन्वेष्टुं शीलं यस्य सः। निमित्तं दक्षिणबाहुस्फुरणम्,। **मन इति**। हे बाहो! वृथा किं स्पन्दसे स्फुरसि?। वृथात्वं कुत इत्याह—मनोरथाय शकुन्तलारूपाय नाशंसे। मम तु मनोरथाशंसापि नास्ति, प्राप्तिस्तु दूरतो निरस्तेति भाव। मनोरथायेति विषयस्य निगरणादतिशयोक्तिः। पूर्वमवधीरितं तिरस्कृतम्, न तु त्यक्तं, श्रेयः कल्याणं दु·खं यथा स्यात्तथा परिवर्तते व्यावर्तते। अर्थान्तर-

---

**पाठा०—१ 'किंव्यापारो भगवान् मारीचः (आकर्ण्य) किं'. २ 'एष दाक्षायण्या पतिव्रतापुण्य°'. ३ '°स्तदस्यै कथयतीति। प्रतिपाल्यावसरः खलु प्रस्तावः। (राजानमवलोक्य) अस्यामशोकच्छायायां'. ४ '°महर्मिद्रगुरवे निवेदयामि। राजा—यथा'. ५ 'मुधा'. ६ 'परिवर्धते'.**

(नेपथ्ये)

मा खु [1]चावलं करेहि। [2]कहं गदो जेव अत्तणो पकिदिं?। [मा खलु चापलं कुरु। कथं गत एवात्मनः प्रकृतिम्?।]

**राजा**—(कर्णं दत्त्वा) अभूमिरियमविनयस्य। को नु [3]खल्वेष निषिध्यते। (शब्दानुसारेणावलोक्य, सविस्मयम्) अये,! को नु खल्व[4]यमनुबध्यमानस्तपस्विनीभ्यामबालसत्त्वो बालः?।

**अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम्।**
**प्र[5]क्रीडितुं सिंहशिशुं बलात्कारेण कर्षति॥ १४॥**

(ततः प्रविशति यथानिर्दिष्टकर्मा तपस्विनीभ्यां सह बालः)

**बालः**—[6]जिंभ सिंघ! दंताइं दे गणइस्सं। [जृम्भस्व सिंह! दन्तांस्ते गणयिष्ये।]

**प्रथमा**—अविणीद! किं णो अपच्चणिविसेसाणि सत्ताणि विप्पअरेसि?। हंत, [7]वड्ढइ दे संरंभो। ठाणे खु [8]ईसिजणेण सव्वदमणो त्ति किदणामहेओ सि। [अविनीत! किं नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि?। हन्त, वर्धते तव संरम्भः। स्थाने खलु ऋषिजनेन सर्वदमन इति कृतनामधेयोऽसि।]

---

न्यासः। वृत्त्यनुप्रासोऽपि। मा खलु चापलं कुरु। कथं गत एवात्मनः प्रकृतिम्?। स्वभावचापलं कृतवानेवेत्यर्थः। अभूमिरस्थानम्। अबालस्येव सत्त्वं बलं यस्य सः। **अर्धेति**। को नु खलु बालः केवलं कर्षणेनानायान्तं सिंहशिशुं बलात्कारेण कर्षतीति चूर्णिकया सहान्वयः। कि कर्तुम्? प्रक्रीडितुं क्रीडा कर्तुम्। मनोविनोदनार्थमिति भाव.। एतेनावश्यकार्यार्थं साहसमपि क्रियेत। क्रीडार्थं तत्कारित्वे मानातिशयबलदर्पतया जगत्तृणवन्मन्यत इति ध्वन्यते। कीदृशम्? मातुरर्धपीतस्तनम्। शिशुनान्यत्कर्षणमेव दुष्करम्, तत्रापि सिंहशिशुकर्षणम्, तत्राप्यन्यस्मात्, तत्रापि मातुः क्रोडात्, तत्रापि स्तनं धयन्तमिति सर्वोत्कर्षो व्यज्यते। पुनः कीदृशम्? आमर्देनाकर्षणेनावेगेन क्लिष्टा विसस्थुलाः केसराः स्कन्धबाला यस्य तम्। स्वभावोक्तिः, उदात्तमनुप्रासश्च। यथानिर्दिष्टं सिंहबालकाकर्षणरूपं कर्म यस्य सः। तपस्विनीभ्या-

---

पाठा०—१ 'चवलत्तणं'. २ 'जहि जहिं जेव अत्तणो पइदिं दंसेसि।'. ३ 'खल्वेवं'. ४ 'अयमनुरुध्यमानस्तापसीभ्यामबाल°'. ५ 'विलम्बिनं सिंहशिशुं करेणाहत्य कर्षति।'. ६ 'यिंभ ले शिंहशावआ यिंभ'. ७ 'संपहरदि विअ दे संरंभो।'. ८ 'मुणिअणेण'.

**राजा**—किं न खलु बालेऽस्मिन्नौरस इव पुत्रे स्निह्यति मे[1] मनः ? । नूनमनपत्यता मां वत्सलयति ।

**द्वितीया**—एसा खु केसरिणी तुमं लंघेदि जइ से पुत्तअं ण मुंचेसि । [एषा खलु केसरिणी त्वां लङ्घयिष्यति यदि तस्याः पुत्रकं न मुञ्चसि ।]

**बालः**—(सस्मितम्) अम्हहे, बलिअं खु [2]भीदो म्हि । [अहो, बलीयः खलु भीतोऽस्मि ।] (इत्यधरं दर्शयति)

**राजा**[3]—

> महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे ।
> स्फुलिङ्गावस्थया[4] वह्निरेधापेक्ष इव स्थितः ॥ १५ ॥

**प्रथमा**—वच्छ ! एदं[5] बालमिइंदअं मुंच । अवरं दे [6]कीलणअं दाइस्सं । [वत्स ! एनं बालमृगेन्द्रं मुञ्च । अपरं ते क्रीडनकं दास्यामि ।]

**बालः**—कहिं[7] ? । देहि णं । [कुत्र ? । देहि तत् ।] (इति हस्तं प्रसारयति)

**राजा**—(बालस्य हस्तमवलोक्य) कथं चक्रवर्तिलक्षणमप्यनेन[8] धार्यते ? तथा[9] ह्यस्य,—

---

मिति सहार्थे तृतीया । जृम्भस्व सिंह ! दन्तास्ते गणयिष्ये । अविनीत ! किं नोऽस्माकमपत्यनिर्विशेषाणि सत्त्वानि प्राणिनो विप्रकरोषि ? । हन्तेति खेदे । वर्धते तव संरम्भ । स्थाने युक्तं खलु ऋषिजनेन सर्वदमन इति कृतनामधेयोऽसि । एषा खलु केसरिणी सिंही त्वा लङ्घयिष्यति तवोपद्रवं किंचित्करिष्यति । 'वर्तमानसामीप्ये वर्तमानवद्वा' (पा. ३।३।१३१) इति वर्तमानप्रयोगः । यदि तस्याः पुत्रकं न मुञ्चसि । 'अम्हहे' आश्चर्ये । त्वद्वचनात् बलिअं अधिकं भीतोऽस्मीति सोल्लुण्ठम् । अधरं विसृष्टं तस्यैव तत्र विनियोगात् । तदुक्तं **संगीतसुधानिधौ**—'विनिष्क्रान्तो विसृष्टः स्यादधरोऽलक्तकादिना । रञ्जने बालकाना च चेष्टाभेदे नियुज्यते । स्त्रीणा विलासबिब्बोकहर्षादिषु च कीर्तित ॥' इति । **महत इति** । अयं बालो महतस्तेजसो बीजं मूलम् । बाल्यान्महन्निगूढ तेजोऽस्मिन्वर्तत इत्यर्थः । स्फुलिङ्गावस्थया स्थितो वह्निरिव । 'महतस्तेजसो बीज'मित्यस्य प्रतिबिम्बं–एधापेक्ष इति ।

---

**पाठा०**—१ 'हृदयम्'. २ 'भीदे स्मि'. ३ '(सविस्मयम्)'. ४ 'वह्निरेधःक्षय इव स्थितः ।'. ५ 'इमं'. ६ 'कीळणअं'. ७ 'कहिं शे, देहि मे'. ८ '°मनेन'. ९ 'तथा हि–'.

प्रलोभ्यवस्तुप्रणयप्रसारितो
विभाति जालग्रथिताङ्गुलिः करः।
अलक्ष्यपत्रान्तरमिद्धरागया
नवोषसा भिन्नमिवैकपङ्कजम् ॥ १६ ॥

द्वितीया—सुव्वदे! ण सक्को एसो वाआमेत्तेण [1]विरमयिदुं। गच्छ तुमं। ममकेरए उडए मक्कंडेअस्स इसिकुमारअस्स वण्णचित्तिदो मित्तिआमोरओ चिट्ठदि। तं से उवहर। [सुव्रते! न शक्य एषो वाचामात्रेण विरमयितुम्। गच्छ त्वम्। मदीये उटजे मार्कण्डेयस्यर्षिकुमारस्य वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति। तमस्योपहर।]

प्रथमा—तह। [तथा।] (इति निष्क्रान्ता)

बालः—इमिणा [3]एव्व दाव कीलिस्सं [अनेनैव तावत्क्रीडिष्यामि।] (इति तापसी विलोक्य हसति)

---

उपमानुप्रासौ। वत्स! एनं बालमृगेन्द्रं मुञ्च। अपरं ते क्रीडनकं दास्यामि। कहिं कुत्र?। देहि णं। 'तदो णः स्यादौ क्वचित्' इति णादेशः। प्रलोभ्येति। प्रलोभ्यं प्रलोभकारकं यद्वस्तु तत्र यः प्रणयो याञ्चा प्रीतिर्वा तेन प्रसारित इति स्वभावाख्यानम्। तेन विना दर्शनासंभवात्। करो विभाति। जालवद्ग्रथिता अङ्गुलयो यस्य सः। उक्तं च पुरुषलक्षणे सामुद्रे—'अतिरिक्तः करो यस्य ग्रथिताङ्गुलिको मृदुः। चापाङ्कुशाङ्कितः सोऽपि चक्रवर्ती भवेद्ध्रुवम् ॥' इति। एकं मुख्यं पङ्कजमिव। तत्प्रथमविकासित्वान्मुख्यत्वम्। कीदृक्? इद्धः समृद्धो रागो लौहित्यं यस्यास्तया। अनेनैतस्य विकाससामर्थ्यं ध्वनितम्। नवोषसा नूतनप्रातःकालेन। नूतनत्वमजरठीभावः। 'उषा रात्रौ तदन्ते स्यादत्रानव्ययमप्युषा' इति विश्वः। तेन भिन्नं भेदं प्राप्तम्। न तु सम्यग्विकसितम्। अत एवालक्ष्याणि पत्राणामन्तराणि सधिविभागा यस्य तत्। काव्यलिङ्गोपमे। प्रेति त्रान्तरेति छेकश्रुतिवृत्त्यनुप्रासाः। अत्र बिम्बप्रतिबिम्बभावेनौपम्यादुपमाया भिन्नलिङ्गत्वं न सहृदयोद्वेगकरम्। प्रसारितमित्यस्य प्रतिबिम्बत्वेन भिन्नमित्युपात्तम्। तत्र बालककरत्वात्सम्यग्विकासो नोक्तः। जालेत्यादेरलक्ष्येत्यादिरुपमा। वंशस्थं वृत्तम्। 'सुव्रते' इति तापस्याः संबुद्धिः। न शक्य एषो वाचामात्रेण विरमयितुम्। त्वं गच्छ। ममकेरए मदीये। 'इदमर्थे केरः' इति इदमर्थप्रत्ययस्य केरादेशे 'स्वार्थे कश्च' इति के रूपम्। उटजे मार्कण्डेयस्यर्षिकुमारस्य वर्णैः रक्तपीतादिभिश्चित्रितो मृत्तिकामयूरस्तिष्ठति तमस्योपहर। तह इति तथेति। अनेनैव तावत्क्रीडिष्यामि। अस्मै इति

---

पाठा०—१ 'समइदुं'. २ 'ता गच्छ'. ३ 'येव कीळिश्श'.

---

टिप्प०—1 ज्योतिःशास्त्रनिपुणस्य कविप्रवरस्य कालिदासस्य सामुद्रिकशास्त्रेऽपि पारङ्गतत्वमनेन स्फुटं भवति।

**राजा**[१]—स्पृहयामि खलु दुर्ललितायास्मै ।

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान्वहन्तो
धन्यास्तदङ्गरजसा [२]मलिनीभवन्ति ॥ १७ ॥

**तापसी**—होदु; [३]ण मं अअं गणेदि । (पार्श्वमवलोकयति) को एत्थ इसि[४]कुमाराणं ? । (राजानमवलोक्य) भद्दमुह ! एहि दाव । [५]मोएहि इमिणा दुम्मोअहत्थग्गहेण डिंभलीलाए बाहीअमाणं [६]बालमिइंदअं । [भवतु; न मामयं गणयति । कोऽत्र ऋषिकुमाराणाम् ? भद्रमुख ! एहि तावत् । मोचयानेन दुर्मोकहस्तग्रहेण डिम्भलीलया बाध्यमानं बालमृगेन्द्रम् ।]

**राजा**—(उपगम्य सस्मितम्) अयि भो महर्षिपुत्र !

एवमाश्रमविरुद्धवृत्तिना
[७]संयमः किमिति [८]जन्मतस्त्वया ।
सत्त्वसंश्रयसुखोऽपि दूष्यते
कृष्णसर्पशिशुनेव [९]चन्दनम् ? ॥ १८ ॥

---

'स्पृहेरीप्सितः' (पा. १।४।३६) इति सम्प्रदानत्वे चतुर्थी । **आलक्ष्येति** । अनिमित्तहासैरकारणहासैर्दन्ता मुकुला इवेत्युपमितसमासः । हासाना साधकत्वात् । आ ईषल्लक्ष्या दृश्या दन्तमुकुला येषा ते तान् । अव्यक्ता वर्णा यासु ता अत एव रमणीया वचःप्रवृत्तयो वाग्व्यापारा येषा तानिति बहुव्रीहिगर्भो बहुव्रीहिः । अङ्के क्रोडे य आश्रय स्थितिस्तत्र प्रणयो याञ्चा प्रीतिर्वा । तेषां बालानामङ्गरजसा मलिनीभवन्ति । अत एतद्बालेत्यादिविशेषे प्रस्तुते सामान्यवचनादप्रस्तुतप्रशंसा । तया चाहमधन्य इति व्यज्यते । णीयणयीति स्तस्तेति नयान्येति छेकवृत्तिश्रुत्यनुप्रासाः । वसन्ततिलका वृत्तम् । भवतु; न मामयं गणयति । कोऽत्र ऋषिकुमाराणाम् ? । भद्रमुख ! एहि तावत् । मोचयानेन दुर्मोकहस्तग्रहेण । दुर्मोको मोचयितुमशक्यो हस्तेन ग्रहो यस्यार्थादस्माभिस्तेन । डिम्भलीलया बालक्रीडया बाध्यमानं बालमृगेन्द्रं मोचयेति संबन्धः । **एवमिति** । आश्रमस्य विरुद्धा वृत्तिर्यस्य तेन त्वया । सत्त्वानां जन्तूनां संश्रयः । सुखयतीति सुखः । सत्त्वसंश्रयश्चासौ सुखश्च । सोऽपि संयमः सम्यग्यमोऽहिंसादिः । जन्मतो जन्मारभ्य । एवं सत्त्वोपद्रवादिना किमिति दूष्यत इति संबन्धः । कृष्णसर्पशिशुना यथा चन्दनं दूष्यते । उपमा-

---

**पाठा०**—१ 'तापसी—(विलोक्य हसन्ती) मुंच णं । राजा—(निःश्वस्य)'. २ 'परुषीभवन्ति'. ३ 'भो ण मं गणेसि ।'. ४ '°कुमारआणं मज्झे'. ५ 'मो आवेहि दाव इमिणा'. ६ 'बालमइंदं'. ७ 'संयमी'. ८ 'जन्मद'. ९ 'चन्दनः'.

**तापसी**—भद्दमुह ! ण खु अअं इसिकुमारओ । [भद्रमुख ! न खल्वयं ऋषिकुमारः ।

**राजा**—आकारसदृशं चेष्टितमेवास्य कथयति । स्थानप्रत्ययात्तु [1]वयमेवंतर्किणः । (यथाभ्यर्थितमनुतिष्ठन्बालस्पर्शमुपलभ्य, आत्मगतम्)

**अनेन कस्यापि कुलाङ्कुरेण**
**स्पृ[2]ष्टस्य गोत्रेषु सुखं ममैवम् ।**
**कां निर्वृतिं चेतसि तस्य कुर्या-**
**द्यस्यायमङ्कात्कृतिनः प्र[3]रूढः ॥ १९ ॥**

**तापसी**—(उभौ निर्वर्ण्य) अच्छरिअं अच्छरिअं । [आश्चर्य-माश्चर्यम् ।]

**राजा**—आर्ये ! किमिव ? ।

**तापसी**—इमस्स बाल[4]अस्स दे वि संवादिणी आकिदी त्ति [5]विम्हाविदम्हि । अपरिइदस्स वि दे अप्पडिलोमो संवुत्तो त्ति । [अस्य बालकस्य तेऽपि संवादिन्याकृतिरिति विस्मापितास्मि । अपरिचितस्यापि तेऽप्रति-लोमः संवृत्त इति ।]

---

नुप्रासौ । अत्रापि सामान्यधर्मस्योभयत्र यथास्थिततत्वेनान्वयान्न विलिङ्गत्वं दोषः । अथवा 'चन्दनोऽस्त्रियाम्' इति कोशाच्चन्दन इति पठनीयम् । तदा सत्त्व-संश्रयसुख इति विशेषमत्रापि योज्यम् । पूर्वत्रपक्षेऽपि विभक्तिविपरिणामेन योज्यम् । आश्रमेत्यादिविशिष्टस्यैवोपमेयत्वान्न न्यूनोपमात्वम् । स्वागता वृत्तम् । भद्रमुख ! न खल्वयमृषिकुमारः । **आकारेति** । आकारश्चेष्टितम् । ऋषिकुमारोऽयं न भवतीति कथयतीत्यर्थः । स्थानप्रत्ययात् स्थानविश्वासात् । यथाभ्यर्थितं बाल-मृगेन्द्रमोचनमनुतिष्ठन्कुर्वन् । **अनेनेति** । कस्याप्यज्ञायमानस्याथवा वाचा वर्ण-यितुमशक्यस्य कुलेऽङ्कुरेणाल्पदिनजातत्वकोमलत्वमनोहरत्वादिनाङ्कुररूपेणानेन गात्रेषु द्वित्रेष्ववयवेषु स्पृष्टस्य न तु सर्वाङ्गस्पृष्टस्य ममैवं वक्तुमशक्यमनुभवैकगम्यं विगलितवेद्यान्तरं सुखं यदि तदा कृतिनः, अयमेव कृतीत्यर्थः । यस्याङ्कादुत्स-ङ्गादयं प्ररूढो वृद्धिं प्राप्तस्तस्य चेतसि का निर्वृतिं किं सुखं कुर्यादिति न ज्ञायत इति भावः । तस्य सुखानुभवेन प्राकरणिकेनार्थेन तत्पित्रादेः सुखातिशयस्यार्थो-द्यापतनादर्थापत्तिरलंकारः । रूपकम् । तसितस्येति कात्कृतीति हेकवृत्तिश्रुत्यनु-

---

पाठा०–१ 'वयमतर्किणः'. २ 'स्पृष्टेषु'. ३ 'प्रसूतः'. ४ 'असंबद्धे वि भद्दमुहे संवादिणी'. ५ 'विम्हिद म्हि । अवि अ वामसीलो वि भविअ अव-रिचिदस्स ण दे पडिलोमो संवुत्तो'.

**राजा**—( बालकमुपलालयन् ) न चेन्मुनिकुमारोऽयम्, अथ [1]कोऽस्य व्यपदेशः ? ।

**तापसी**—पुरुवंसो । [ पुरुवंशः । ]

**राजा**—( आत्मगतम् ) कथमेकान्वयो[3] मम ? । अतः खलु मदनुकारिणमेनमत्रभवती मन्यते । अस्त्येतत्पौरवाणामन्त्यं कुलव्रतम् ।

भवनेषु [4]रसाधिकेषु पूर्वं
क्षितिरक्षार्थमुशन्ति ये निवासम् ।
नियतै[5]कपतिव्रतानि पश्चा-
त्तरुमूलानि गृहीभवन्ति तेषाम् ॥ २० ॥

( प्रकाशम् ) न पुनरात्मगत्या मानुषाणामेष विषयः ।

**तापसी**—जह भद्दमुहो भणादि अच्छरासंबंधेण [6]इमस्स जणणी एत्थ देवगुरुणो तवोवणे प्पसूदा । [ यथा भद्रमुखो भणत्यप्सरःसंबन्धेनास्य जनन्यत्र देवगुरोस्तपोवने प्रसूता । ]

---

प्रासा. । इन्द्रवज्रोपेन्द्रवज्रयोः प्रथमोपजातिः । उभौ बालदुष्यन्तौ । निर्वर्ण्य दृष्ट्वा । आश्चर्यमाश्चर्यम् । इमस्स अस्य बालस्य तव च संबन्धेन सवादिनी सदृश्याकृतिरिति विस्मापितास्मि । अपरिचितस्यापि तेऽप्रतिलोमोऽनुकूलः संवृत्त इति विस्मापितास्मीत्यनुषज्यते । कोऽस्य व्यपदेशः किं कुलम् ? । पुरुवंशः । अन्त्यं वानप्रस्थाश्रमविषयम् । **भवनेष्विति** । पूर्वं यौवने ये राजानः । रसो रागः शृङ्गारादिश्च मधुरादिश्चास्वादश्च एते अधिका येषु । एतैर्वाधिकान्युत्तमानि तेषु । 'रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः । शृङ्गारादौ द्रवे वीर्ये देहधात्वम्बुपारदे' इति विश्वः । भवनेषु गृहेषु । क्षितिरक्षार्थं पृथ्वीरक्षणाय । निवास स्थितिमुशन्ति वाञ्छन्ति । 'वश कान्तौ' इति धातुः । कान्तिरिच्छेति **क्षीरतरङ्गिणीकारः** । तत्र केवलं महीरक्षायै स्थितिवाञ्छैव, न तत्त्वतः स्थितिरिति भाव. । पश्चाद्वार्धके । तेषा राज्ञा तरुमूलानि गृहीभवन्ति । वानप्रस्थाश्रमं बिधाय तत्राश्रमे निवसन्तीत्यर्थः । कीदृशानि तरुमूलानि ? नियता नियमयुक्ता तपःसंतोषादियुतैका केवला पतिव्रता धर्मपत्नी येषु तानि । एतेन तत्पुत्रजन्मादिसंभावनापाकृता । रूपकानुप्रासौ । मालभारिणी वृत्तम् । आत्म-

---

**पाठा०**—१ 'तत्कोऽस्य'. २ 'पोरवोत्ति'. ३ '°न्वयोऽयमस्माकम् । अतः खलु संभाव्यते । ( प्रकाशम् ) अस्त्येतत्'. ४ 'सुधासितेषु पूर्वं'. ५ 'विहितैकयतिव्रतानि'. ६ 'इमस्स बालअस्स'.

**राजा**—( अपवार्य ) हन्त, द्वितीयमिदमाशाजननम्[1] । ( प्रकाशम् ) अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी ? ।

**तापसी**—को तस्स धम्मदारपरिच्चाइणो णाम संकीतिदुं[2] चिंतिस्सदि ? [ कस्तस्य धर्मदारपरित्यागिनो नाम संकीर्तयितुं चिन्तयिष्यति ? ]

**राजा**—( स्वगतम् ) इयं[3] खलु कथा मामेव लक्ष्यीकरोति । यदि तावदस्य [4]शिशोर्मातरं नामतः पृच्छामि । अथवाऽनार्यः परदारव्यवहारः ।

( प्रविश्य मृण्मयूरहस्ता )

**तापसी**—सव्वदमण ! सउंदलावण्णं पेक्ख । [ सर्वदमन ! शकुन्तलावण्यं प्रेक्षस्व । ]

**बालः**—( सदृष्टिक्षेपम् ) [5]कहिं वा मे अज्जू ? । [ कुत्र वा मम माता ? ]

**उभे**—णामसारिस्सेण वंचिदो माउवच्छलो । [ नामसादृश्येन वञ्चितो मातृवत्सलः । ]

**द्वितीया**—वच्छ ! इमस्स [6]मित्तिआमोरअस्स रम्मत्तणं देक्ख त्ति भणिदो सि । [ वत्स ! अस्य मृत्तिकामयूरस्य रम्यत्वं पश्येति भणितोऽसि । ]

---

गत्या स्वभावगत्या, मानुषस्वरूपेणेति यावत् । एष देशो मानुषाणां विषयो न पुनरिति संबन्धः । एवमुभयथात्मस्पर्शित्वमेवाभिव्यक्तम् । यथा भद्रमुखो भणति । तत्तथैवेत्यार्थम् । अप्सरःसंबन्धेनास्य बालस्य जनन्यत्र देवगुरोः कश्यपस्य तपोवने प्रसूता । हन्तेति हर्षे । एको वंश । एकमिदमिति द्वितीयम् । कस्तस्य धर्मदारपरित्यागिनो नाम संकीर्तयितुं चिन्तयिष्यति ? संकीर्तनार्थं हृदि चिन्तनेऽपि दोषः, सकीर्तने पुनः किं वक्तव्यमिति भावः । 'अस्त्येतत्पौरवाणाम्' इत्यादिना 'परदारव्यवहारः' इत्यन्तेन विबोधनामकमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'कार्यस्यान्वेषणं युक्त्या विबोधः परिकीर्तितः' इति । सर्वदमन ! शकुन्तस्य पक्षिणो लावण्यम् । अथ शकुन्तलाया वर्ण पश्येति श्लेषवक्रोक्त्यलंकारः । कुत्र वा मे मम अज्जू माता ? । 'अज्ज अज्जू च मातरि' इति देशीकोशः । आर्यभविष्णु

---

पाठा०-१ '°माश्वासजननम्'. २ 'णामं कित्तइस्सदि'. ३ 'कथमियं कथा मामेव लक्ष्यीकरोति'. ४ 'शिशोर्नामतो मातरं पृच्छेयम् ।'. ५ 'कहिं वा मे अय्युआ ( उभे प्रहसिते )'. ६ 'मोरस्स रमणीअत्तणं पेक्ख'.

**राजा**—( आत्मगतम् ) किं वा शकुन्तलेत्यस्य मातुराख्या । [1]सन्ति पुनर्नामधेयसादृश्यानि । अपि नाम मृगतृष्णिकेव [2]नाममात्रप्रस्तावो मे विषादाय कल्पते ।

**बालः**—[3]अज्जुए ! रोअदि मे एसो भद्दमोरओ । [ मातः ! रोचते म एष भद्रमयूरः । ] ( इति क्रीडनकमादत्ते )

**प्रथमा**—( विलोक्य सोद्वेगम् ) अम्हहे, [4]रक्खाकरंडअं से मणिबंधे ण दीसदि [ अहो, रक्षाकरण्डकमस्य मणिबन्धे न दृश्यते । ]

**राजा**—अलमलमावेगेन । [5]नन्विदमस्य सिंहशावविमर्दात्[6]परिभ्रष्टम् । ( इत्यादातुमिच्छति )

**उभे**—मा खु [7]एदं अवलंबिअ । कहं गहीदं णेण ? । [ मा खल्विदमवलम्ब्य । कथं गृहीतमनेन ? । ] ( इति विस्मयादुरोनिहितहस्ते परस्परमवलोकयतः )

**राजा**—किमर्थं [8]प्रतिषिद्धाः स्मः ? ।

---

श्वश्वामेव (?) । तथा च सूत्रम्—'आर्यायां वा श्वश्वाम्' इति । नामसादृश्येन वञ्चितो मातृवत्सलः । वत्स ! अस्य मृत्तिकामयूरस्य रम्यत्वं पश्येति मया भणितोऽसि । राजा—'यदि तावदस्य' इत्यादिना 'मातुराख्या' इत्यन्तेनाक्षरसंघातकं नाम भूषणमुपक्षिप्तम् । तल्लक्षणं तु—'वाक्यमक्षरसंघातो भिन्नार्थः श्लिष्टवर्णकम्' इति । अपि नामेति । यथा मृगतृष्णिका विषादाय कल्पते तद्वन्नाममात्रप्रस्ताव इत्यर्थः । अत्र सन्ति पुनर्नामधेयसादृश्यानीति हेतुत्वेन योज्यम् । अज्जुए मातः । रोचते म एष भद्रमयूरः । 'अम्हहे' इति खेदे । रक्षाकरण्डकं मणिबन्धेऽस्य न दृश्यते । रक्षाकरण्डकं रक्षावीटिका । 'करण्डो मधुकोशे स्याद्वीटिकाखड्गकोशयोः' इत्यमरः । मा खल्विदमवलम्ब्य । कथं गृहीतमनेन ? । उरोनिहितहस्ते इति विस्मयाभिनयः । एतदुक्तमादिभरते चित्राभिनयाध्याये—'शिरोधुतं पताकश्च वक्षःस्थो विस्मये भवेत्' इति । अनेनैतत्स्थायी अद्भुतरसो व्यज्यते । तल्लक्षणं प्रागुक्तमेव । उक्तं च **धनिकेन**—'कुर्यान्निर्वहणे-

---

**पाठा०**—१ 'अथ वा सन्ति पुनर्नामसादृश्यानि ।'. २ 'नायमन्ते प्रस्तावो विषादाय कल्पेत ।'. ३ 'अंतिके, लोअदि मे चडुलके एशे मऊलके'. ४ '°गंडओ'. ५ 'नन्वयमस्य'. ६ 'परिभ्रष्टः'. ७ 'मा खु ( विलोक्य ) कधं गहीदं जेव'. ८ 'भवतीभ्यां प्रतिषिद्धोऽस्मि'.

**प्रथमा**—सुणादु महाराओ[1]। एसा अवराजिदा णाम ओसही[2] इमस्स जातकम्मसमए भअवदा मारीएण दिण्णा। एदं किल मादापिदरो[3] अप्पाणं च वज्जिअ अवरो भूमिपडिदं ण गेण्हादि। [ शृणोतु महाराजः। एषाऽपराजिता नामौषधिरस्य जातकर्मसमये भगवता मारीचेन दत्ता। एतां किल मातापितरावात्मानं च वर्जयित्वाऽपरो भूमिपतितां न गृह्णाति। ]

**राजा**—अथ गृह्णाति ?।

**प्रथमा**—तदो[4] तं सप्पो भविअ दंसइ। [ ततस्तं सर्पो भूत्वा दशति ]

**राजा**—भवतीभ्यां[5] कदाचिदस्याः प्रत्यक्षीकृता विक्रिया ?।

**उभे**—अणेअसो। [ अनेकशः। ]

**राजा**—( सहर्षम्, आत्मगतम् ) कथमिव[6] संपूर्णमपि मे मनोरथं नाभिनन्दामि ?। ( इति बालं परिष्वजते )

**द्वितीया**—सुबदे ! एहि। इमं वुत्तंतं णिअमवावुडाए सउंदलाए[7] णिवेदेम्ह। [ सुव्रते ! एहि। इमं वृत्तान्तं नियमव्यापृतायै शकुन्तलायै निवेदयावः। ]

( इति निष्क्रान्ते )

**बालः**—मुंच मं। जाव अज्जुए[8] सआसं गमिस्सं। [ मुञ्च माम्। यावन्मातुः सकाशं गमिष्यामि। ]

**राजा**—पुत्रक ! मया[9] सहैव मातरमभिनन्दिष्यसि।

---

ऽद्भुतम्' इति। आदिभरतेनापि—'निर्वहणे कर्तव्यो नित्यं हि रसोऽद्भुतः कविभिः' इति। अनेनोपगूहनलक्षणमङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'अद्भुतस्य तु या प्राप्तिर्भवेत्तदुपगूहनम्' इति। श्रृणोतु महाराजः। एषाऽपराजिता नामौषधिरस्य जातकर्मसमये भगवता मारीचेन काश्यपेन दत्ता। एतां किल मातापितरावात्मानं च वर्जयित्वाऽपरो भूमिपतिता न गृह्णाति। ततस्तं सर्पो भूत्वा दशति। अनेकश.। 'प्रथमा—सुणादु महाराओ' इत्यादिना 'अणेअसो' इत्य-

---

**पाठा०**—१ 'महाभाओ. २ 'सुरमहोसही'. ३ 'मादापिदरे अत्ताणअं च'. ४ 'तदा सप्पो भविअ तं दंसदि।'. ५ 'अथात्रभवतीभ्यां कदाचिदन्यत्र प्रत्यक्षीकृतमिदम्।'. ६ 'तत्किं खल्विदानीं पूर्णमात्मनो मनोरथं'. ७ 'सउंतलाए गदुअ णिवे°'. ८ 'अय्युआशआशं'. ९ 'मयैव सह... °नन्दयिष्यसि।'.

**बालः**—[१]मम खु तादो दुस्संदो । ण तुमं । [मम खलु तातो दुष्यन्तः । न त्वम् ।]

**राजा**—(सस्मितम्) [२]एष विवाद एव प्रत्याययति ।

(ततः प्रविशत्येकवेणीधरा शकुन्तला)

**शकुन्तला**—विआरकाले वि पकिदित्थं[३] सव्वदमणस्स ओसहिं सुणिअ ण मे आसा आसि अत्तणो भाअहेएसु । अहवा जह [३]साणुमदीए आचक्खिदं तह संभावीअदि एदं ।[४] [विकारकालेऽपि प्रकृतिस्थां सर्वदमनस्यौषधिं श्रुत्वा न म आशासीदात्मनो भागधेयेषु । अथवा यथा सानुमत्याख्यातं तथा संभाव्यत एतत् ।]

**राजा**—(शकुन्तला[५] विलोक्य) अये ! [६]सेयमत्रभवती शकुन्तला । यैषा,—

> **वसने परिधूसरे वसाना**
> **नियमक्षाममुखी धृतैकवेणिः ।**
> **अतिनिष्करुणस्य शुद्धशीला**
> **मम दीर्घं विरहव्रतं बिभर्ति ॥ २१ ॥**

---

न्तेन पूर्वभावनामकमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'पूर्वभावस्तु विज्ञेयो यथार्थोक्तोपदेशक.' इति । सुव्रते ! एहि । इमं वृत्तान्त नियमव्यापृतायै । अनेनाद्यापि तत्प्राप्त्यर्थं नियमकारित्वमुक्तम् । शकुन्तलायै निवेदयाव' । मुञ्च माम् । यावन्मातुः सकाशं गमिष्यामि । मम खलु तातो दुष्यन्त., न त्वम् । प्रत्याययतीत्येतावत्पर्यन्तं प्रत्ययो नोत्पन्न एवेति भाव. । विकारकालेऽपि प्रकृतिस्था सर्वदमनस्यौषधिं श्रुत्वा न म आशासीदात्मनो भागधेयेषु । अथवा यथा सानुमत्याख्यातं तथा संभाव्यत एतत् । अनेन समयाख्यमङ्गमुपक्षिप्तम् । तल्लक्षणम्—'दुःखस्यापगमो यस्तु समयः स निगद्यते' इति । **वसन इति** । परित. सर्वतो धूसरे नोज्वले । इदमेव विधेयम् । वसने अन्तरीयोपसव्याने वसाना । नियमेन तपआदिना क्षामं कृशं मुखं यस्याः सा । अत्रापावृतमुख्या मुखस्यैव दर्शनात्क्षाममुखीत्युक्तिः । अनेन नाभिगृहस्थितावप्यतिशयलज्जालुत्वं व्यज्यते । मुखापवरणं तु चिरतरकालतद्दर्शनोत्कण्ठया तदर्थमेव च प्रवृत्तेरिति नानौचित्यम् । धृतैका वेणिर्यस्याः सा । यत एतादृश्यत एव शुद्धशीला शुद्धस्वभावा । अति-

---

**पाठा०**–१ **'दुश्शंते मम तादे ण क्खु तुमं'.** २ **'एष विवाद एव मां'.** ३ **'मिस्सकेसीए मे'.** ४ **'(इति परिक्रामति)'.** ५ **'सहर्षखेदम्'.** ६ **'इयमत्र°'.**

**शकुन्तला**—(पश्चात्तापविवर्णं राजानं दृष्ट्वा) ण खु अज्जउत्तो विअ। तदो को एसो दाणिं किदरक्खामंगलं दारअं मे गत्तसंसग्गेण दूसेदि। [न खल्वार्यपुत्र इव। ततः क एष इदानीं कृतरक्षामङ्गलं दारकं मे गात्रसंसर्गेण दूषयति?।]

**बालः**—(मातरमुपेत्य) अज्जुए[2]! एसो कोवि पुरिसो मं पुत्त[4] त्ति आलिंगदि। [मातः! एष कोऽपि पुरुषो मां पुत्र इत्यालिङ्गति।]

**राजा**—प्रिये! क्रौर्यमपि मे त्वयि प्रयुक्तमनुकूलपरिणामं संवृत्तम्, येदहमिदानीं त्वया प्रत्यभिज्ञातमात्मानं पश्यामि।

**शकुन्तला**—(आत्मगतम्) हिअअ! अस्सस[6] अस्सस। परिच्चत्तमच्छरेण अणुअप्पिअ म्हि देव्वेण। अज्जउत्तो खुं[7] एसो। [हृदय! आश्वसिहि आश्वसिहि। परित्यक्तमत्सरेणानुकम्पितास्मि दैवेन। आर्यपुत्रः खल्वेषः।]

**राजा**—प्रिये!

**स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि मे सुमुखि!।**
**उपरागान्ते शशिनः समुपगता रोहिणी योगम्॥ २२॥**

---

निष्करुणस्यातिशयकृपाहीनस्य मम मत्संबन्धिनं दीर्घं बहुकालीनं विरहव्रतं बिभर्ति। काव्यलिङ्गस्वभावोक्ती। वसवसेति सनेसानेति छेकानुप्रासवृत्त्यनुप्रासौ। वृत्तमनन्तरोक्तम्। 'राजा—' इत्यादिनैतदन्तेन संधिर्नामाङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'मुखबीजोपगमनं संधिरित्यभिधीयते' इति। न खल्वार्यपुत्र इव। पश्चात्तापविवर्णत्वं हेतुत्वेन योज्यम्। ततः क एष इदानी कृतरक्षामङ्गलं दारकं मे गात्रसंसर्गेण दूषयति। मात! एष कोऽपि पुरुषः पुत्र इति मामालिङ्गति। अनुकूलः परिणामः परिपाको यस्य तत्। त्वं यदा गतासि तदा मया न प्रत्यभिज्ञातासि। मयि पुनरागते त्वया प्रत्यभिज्ञात इत्यनुकूलपरिणामता। हृदय! आश्वसिहि आश्वसिहि। परित्यक्तमत्सरेणानुकम्पितास्मि दैवेन। आर्यपुत्रः खल्वेषः। अनेनानन्दनामकमङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'समागमस्तु योऽर्थानामानन्दः स तु कीर्त्यते' इति। **स्मृतीति**। मोहस्तमो राहुरिव मोहतमः। अनेनोपमा-

---

**पाठा०**–१ 'सवितर्कम्'. २ 'अय्युए'. ३ 'पलकेलए'. ४ 'पुत्तकेत्ति आलवेदि।'. ५ 'तदह°'. ६ 'समस्सस समस्सस। पहरिअ णिव्वुत्तमच्छरेण'. ७ 'जेव एसो'.

**शकुन्तला**—जेदु जेदु अज्जउत्तो....। [जयतु जयत्वार्यपुत्रः....। (इत्यर्धोक्ते बाष्पकण्ठी विरमति)

**राजा**—सुन्दरि !

**बाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया।**
**यत्ते दृष्टमसंस्कारपाटलोष्ठपुटं मुखम्॥ २३॥**

**बालः**—[1]आज्जुए ! को एसो ? । [मातः ! क एषः ? ।]

**शकुन्तला**—वच्छ ! दे [2]भाअहेआइं पुच्छेहि । [वत्स ! ते भागधेयानि पृच्छ ।]

**राजा**—(शकुन्तलायाः पादयोः प्रणिपत्य)

**सुतनु ! हृदयात्प्रत्यादेशव्यलीकमपैतु ते**
**किमपिमनसः संमोहो मे तदा बलवानभूत्।**

---

नेन राज्ञा तस्य गाढत्वमुक्तम्। 'तमस्तु राहुः स्वर्भानुः' इत्यमरः। उपमासाधकमनन्तरमेव वक्ष्यामः। स्मृत्या भिन्नं दूरीकृतं मोहतमो यस्य तस्य मे मम प्रमुखे संमुखे दिष्ट्या दैवेन हे सुमुखि ! स्थितासि। सुमुखीति साभिप्रायम्। सुमुखस्यैव संमुखे स्थातुं योग्यत्वात्कुमुखगोपनमेव करोतीति यावत्। उपरागान्ते ग्रहान्ते। 'उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च' इत्यमरः। शशिनश्चन्द्रस्य रोहिणी नक्षत्रविशेषो योगं संबन्धं समुपगता। अत्र मुखेमुखीति सिमेसम्विति छेकानुप्रासः। संदेहसंकरः। सकारादीनां दन्त्याक्षराणां मकारादीनामोष्ठ्याक्षराणां बहूनां सत्त्वाच्छ्रुत्यनुप्रासः। अनेन सहपूर्वस्यैकवाचकानुप्रवेशलक्षणः संकरः। अर्थाभ्यां यत्तद्भ्यामेकवाक्यत्वात्संभवद्वस्तुसंबन्धान्निदर्शनम्। मोहतम इत्येकदेशविवर्तिन्युपमाने तत्स्मृतेर्नियतत्वमप्युपमितम्। ततश्च विशेषणत्वेनापि योज्यम्। नियत्या भिन्नं मोहवत्तमो राहुर्यस्येत्युपमासाधिका चात्र निदर्शनैव। अन्ये तु दृष्टान्तमेवाहुः। अन्ये साधकबाधकप्रमाणाभावादुभयोः संदेहसंकरमाहुः। जयतु जयत्वार्यपुत्रः। **बाष्पेणेति**। बाष्पेणाश्रुप्रारम्भेण। एतेन चातिविरहक्लान्तत्वं व्यज्यते। एतादृशं ते मुखं दृष्टमिति विशिष्टं विधेयम्। विशिष्टमुखदर्शनेन च विरहनाशः। अत एव जय इत्यवधातव्यम्। जयशब्दे प्रतिषिद्धेऽपि जितमिति विरोधाभासः। जितं प्रत्युत्तरार्धस्य हेतुत्वेनोपादानात्काव्यलिङ्गमपि। श्रुतिवृत्त्यनुप्रासौ। मातः ! एष कः ? । वत्स ! ते भागधेयानि पृच्छ। क्वचित्पुस्तके **'पुच्छेहि'** इति नास्ति। तस्मिन्पाठे रूपकम्। **सुतन्विति**। कृतनावप्रीतिर्न सुतना-

---

**पाठा०—१ 'अय्युए, के एशे'. २ 'भाअधेआइं पुच्छ। (इति रोदिति) राजा-सुतनु°'.**

प्रबलतमसामेवंप्रायाः शुभेषु प्रवृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥ २४ ॥

शकुन्तला—उट्ठेदु अज्जउत्तो । णूणं मे सुअरिअप्पडिबंधअं पुराकिदं तेसु दिअहेसु परिणाममुहं आसि जेग साणुक्कोसो वि अज्जवुत्तो मइ विरसो संवुत्तो । [ उत्तिष्ठत्वार्यपुत्रः । नूनं मे सुचरितप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणाममुखमासीद्येन सानुक्रोशोऽप्यार्यपुत्रो मयि विरसः संवृत्तः । ]

( राजोत्तिष्ठति )

शकुन्तला—अह कहं अज्जउत्तेण सुमरिदो दुक्खभाई अअं जणो ? । [ अथ कथमार्यपुत्रेण स्मृतो दुःखभागयं जनः ? ]

---

विति संबोधनं हे सुतन्विति । तव हृदयात्प्रत्यादेशव्यलीक निराकरणाप्रियमपैतु दूरीभवतु । 'व्यलीकं त्वप्रियेऽनृते' इत्यमर । अप्रियस्य हृदयात्त्यागेऽर्थतः सिद्धेऽपि पुनस्तद्ग्रहणं विप्रियं मया त्यक्तमिति वाङ्मात्रेण न त्यागः । अपि तु तत्संस्कारोन्मूलनपूर्वकं त्याग इति ध्वनयति । किमर्थमप्रियं कृतं तत्राह—किमपीषन्मनो यस्यासौ किमपिमनास्तस्य किमपिमनसो मे मम तदा त्वद्दर्शनसमये बलवानधिकः समोहोऽज्ञानमभूदिति विशिष्टं विधेयम्; तेन संमोहेन मन्मनः समुन्मूलनं जातमित्यर्थ । तेन चित्ताभावात्कृतमिदं क्षन्तव्यमिति भावः । समोहान्मन समुन्मूलनं जातमित्यस्य शब्दे विधेयत्वे वक्तव्ये पदार्थविधेयत्वं तत्संमोहस्य प्राधान्यद्योतनाय । तेन समोहस्य मनोधर्मत्वान्मनसः संमोहो जात इत्यर्थपौनरुक्त्यं निरस्तम् । **प्रबलेति** । प्रबलतमसामधिकसंमोहानाम् । अत्र 'प्रबलतम'शब्देनाधिकशोक उच्यते, तेन तज्जन्यः संमोहो लक्ष्यते तदतिशयो व्यज्यते । अत एवोद्देश्यप्रतिनिर्देश्यप्रक्रमभङ्गो नाशङ्कनीयः । 'तम· शोके गुणान्तरे' इति विश्वः । शुभेषु कार्येषु एवंप्राया शुभत्यागरूपाः प्रवृत्तयो भवन्ति इत्यर्थान्तरन्यास· । दृष्टान्तमप्याह—**स्रजमिति** । अन्ध· क्षिप्ता शिर·स्थापितां परिधापिता स्रजं मालामप्यहिशङ्कया सर्पशङ्कया धुनोति तिरस्करोति । अहिशङ्कयेति भ्रान्तिमान् । काव्यलिङ्गश्रुत्यनुप्रासौ । कमकिमेति मपैमपीति बलबलेति छेकानुप्रास· । हरिणी वृत्तम् । 'राजा—शकुन्तलाया पादयो प्रणिपत्य' इत्यादिनानुनयो नाम भूषणमुपक्षिप्तम् । तल्लक्षण तु—'अभ्यर्थनापरं वाक्यं विज्ञेयोऽनुनयो बुधैः' इति । उत्तिष्ठत्वार्यपुत्र· । नूनं निश्चितं मे सुचरितप्रति-

---

पाठा०—१ 'शुभेष्वपि वृत्तयः', 'शुभेषु हि वृत्तयः'. २ 'सुहप्पडिबंधअं'. ३ 'तधा संवुत्तो'. ४ 'अअं दुक्ख°',

**राजा**—उद्धृतविषादशल्यः कथयिष्यामि ।

**मोहान्मया सुतनु! पूर्वमुपेक्षितस्ते**
**यो बाष्पबिन्दुरधरं परिबाधमानः ।**
**तं तावदाकुटिलपक्ष्मविलग्नमद्य**
**[1]बाष्पं प्रमृज्य विगतानुशयो [2]भवेयम् ॥ २५ ॥**

(इति यथोक्तमनुतिष्ठति)

**शकुन्तला**—(नाममुद्रां दृष्ट्वा) अज्जउत्त! [3]ऍदं ते अंगुलीअअं। [आर्यपुत्र! इदं तेऽङ्गुलीयकम्।]

---

बन्धकं पुराकृतम्, कर्मेत्यर्थः । तेषु दिवसेषु परिणाममुखं परिपाकोन्मुखमासीद्येन सानुक्रोशोऽपि सकृपोऽप्यार्यपुत्रो मयि विरसो विरागः संवृत्तः । अथ कथमार्यपुत्रेण स्मृतो दुःखभाग्ययं जनः । उद्धृतविषादशल्य इत्युपमा । इह श्लोके शोकस्य वक्ष्यमाणत्वादतिखेदवत्त्वं व्यङ्ग्यम् । **मोहादिति** । हे सुतनु! मया परमविवेकिना धर्मभीरुणा परमविदग्धेन दुष्यन्तेनेत्यर्थान्तरसंक्रान्तम् । मोहादज्ञानात्ते तव बाष्पबिन्दुः । जात्येकवचनम् । उपेक्षितो न मार्जितः, अत एवाधरं परितः सर्वतो बाधमानः स्थित इति शेषः । अनेन बिन्दूनामनवरतपातिता स्थूलतोष्णताद्ययावत्स्थितिश्च ध्वनिता । तेन मार्जनकारणसामग्र्यां सत्यामपि यत्तदनुत्पत्तिः सा विशेषोक्तिः । मोहादिति निमित्तस्योक्तत्वादुक्तनिमित्तता । तावदादावादित्वकथनापेक्षया तं बाष्पं प्रमृज्य प्राप्य विगतानुशयो गतपश्चात्तापो भवेयम् । आशंसायां लिङ् । कीदृशम्? आ ईषत्कुटिलं यत्पक्ष्म तत्र विलग्नं सबद्धम् । अनेनास्य बाष्पस्य बिन्दुत्वाभावस्तदभावेनाधरपीडनाभावश्च ध्वनितः । ननु तस्य बाष्पस्यातीतत्वात्तमिति तच्छेषनिर्देशः कथमिति चेत्—उच्यते—यतश्चिरानुभूतान्यपि बन्धुदर्शनाज्जनस्य दुःखानि नवीभवन्तीत्युक्तदिशा एनं दृष्ट्वा तस्याः पूर्वदुःखस्मरणेन यो बाष्प उत्पन्नः स तच्छब्देन राज्ञा परामृष्टः । दुःखहेतुत्वादुभयोः आकुटिलेति व्यतिरेकः । यस्तदा शोकावेगवशाद्बिन्दुरूप एवोत्पन्नः । अधुना क्रमिकत्वात्तदवस्थाभाव इति बोद्धव्यम् । अत एतत्प्रमार्जनेन विगतानुशयत्वम् । इदमेवोद्धृतविषादशल्यत्वम् । यतोऽपराधादिनानुशयो हि विषादः । तदुक्तं **सुधाकरे**—'अपराधपरिज्ञानादनुतापस्तु यो भवेत् । स विषादः' इति । श्रुतिवृत्त्यनुप्रासौ । वसन्ततिलका वृत्तम् । यथोक्तमनुतिष्ठति । बाष्पमार्जनं करोतीत्यर्थः । तच्च त्रिपताकवक्रानामिकयेति ज्ञेयम् । तदुक्तं **संगीतरत्नाकरे**—'तन्मार्जने च स्यादधो यान्तीमनामिकाम् । नेत्रक्षेत्रगतां बिभ्रत्' इति । अनेन कथयिष्यामीति यदुक्तं तत्प्रसङ्गोऽप्युपदर्शितः । आर्यपुत्र! इदं तेऽङ्गुलीयकम् ।

---

**पाठा०**—१ 'कान्ते! प्रमृज्य'. २ 'भवामि'. ३ 'तं इदं'.

**राजा**—[1]अस्मादङ्गुलीयोपलम्भात्खलु स्मृतिरुपलब्धा ।

**शकुन्तला**—विसमं किदं णेण जं तदा अज्जउत्तस्स [2]पच्चअकाले दुल्लहं आसि । [ विषमं कृतमनेन यत्तदार्यपुत्रस्य प्रत्ययकाले दुर्लभमासीत् । ]

**राजा**—तेन ह्यृतुसमवायचिह्नं प्रतिपद्यतां लता कुसुमम् ।

**शकुन्तला**—ण से विस्ससामि । अज्जउत्तो [3]एव्व णं धारेदि । [ नास्य विश्वसिमि । आर्यपुत्र एवैतद्धारयतु । ]

( ततः प्रविशति मातलिः )

**मातलिः**—दिष्ट्या धर्मपत्नीसमागमेन पुत्रमुख[4]दर्शनेन चायुष्मान्वर्धते ।

**राजा**—[5]अभूत्संपादितस्वादुफलो मे मनोरथः । मातले! न खलु विदितोऽय[6]माखण्डलेन वृत्तान्तः स्यात्? ।

**मातलिः**—( सस्मितम् ) किमीश्वराणां परोक्षम् । एत्वायुष्मान्; भगवान्मारीचस्ते [7]दर्शनं वितरति ।

**राजा**—शकुन्तले! अवलम्ब्यतां पुत्रः । त्वां पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि ।

**शकुन्तला**—हिरिआमि अज्जउत्तेण सह गुरुसमीवं गंतुं । [ जिह्रेम्यार्यपुत्रेण सह गुरुसमीपे गन्तुम् । ]

---

अङ्गुलीयस्योपलम्भः प्राप्तिस्तस्मात् । विषमं कृतमनेन यत्तदार्यपुत्रस्य प्रत्ययकाले दुर्लभमासीत् । तेन कारणेन हि निश्चितं लता कर्त्री ऋतोः समवायः संबन्धस्तस्य चिह्नं कुसुमं प्रतिपद्यताम् । अत्र त्वयाङ्गुलीयकं धारणीयमिति प्रस्तुते यल्लताकुसुमवृत्तान्तोऽन्योऽप्रस्तुत उक्तः । सादृश्येन साऽप्रस्तुतप्रशंसा । नास्य विश्वसिमि । आर्यपुत्र एवैतद्धारयतु । 'राजा—प्रिये! स्मृतिभिन्न—' इत्यादिनैतदन्तेन परिभाषणं नामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'मिथ' संजल्पनं यत्स्या-

---

**पाठा०**—१ 'अस्मादङ्गुतोप°'. २ 'संवादिदं खु अणेण जं तधा...पच्चअकारणं दुल्लहं मे'. ३ 'जेव णं धरेदु'. ४ संदर्शनेन'. ५ 'सुहृत्संपादिताद् साधुतरफलो'. ६ '°माखण्डलस्यार्थः ।'. ७ 'दर्शनमिच्छति'.

---

**टिप्प०**—1 अनेनाङ्गुलीयकसंविधानकेन कविकण्ठीरवेण कलिदासेन दुष्यन्ते निरागसधर्मपत्नीत्यागरूपाद्दोषात्परिरक्ष्यते । महाभारते त्वस्याभावात् तत्र सर्वथा नायकदोषावहत्वं प्रथमतः स्त्रीलम्पटत्वमथ च निर्घृणत्वं दृश्यते ।

**राजा**—[1]अप्याचरितव्यमभ्युदयकालेषु । [2]एह्येहि ।

( सर्वे परिक्रामन्ति )

( ततः प्रविशत्यदित्या सार्धमासनस्थो मारीचः )

**मारीचः**—( राजानमवलोक्य ) दाक्षायणि !

**पुत्रस्य ते रणशिरस्ययमग्रयायी**
**[3]दुष्यन्त इत्यभिहितो भुवनस्य भर्ता ।**
**चापेन यस्य विनिवर्तितकर्म जातं**
**तत्कोटिमत्कुलिशमाभरणं मघोनः ॥ २६ ॥**

**अदितिः**—संभावणी[4]आणुभावा से आकिदी । [संभावनीयानुभावाऽस्याकृतिः ।]

**मातलिः**—[5]आयुष्मन् ! एतौ पुत्रप्रीतिपिशुनेन चक्षुषा दिवौकसां पितरावायुष्मन्तमवलोकयतः । तावुपसर्प ।

**राजा**—[6]मातले ! एतौ,—

---

त्तदाहुः परिभाषणम्' इति । 'ततः प्रविशति मातलिः' इत्यादिना ग्रथनं नामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'उपक्षेपस्तु कार्याणा ग्रथनं परिकीर्तितम्' इति । 'राजा—अभूत्संपादितस्वादुफलो मे मनोरथः' इत्यनेन प्रहर्षनामा नाट्यालंकार उपक्षिप्तः । तल्लक्षणं तु—'प्रहर्षः प्रमदाद्वाक्यम्' इति । लज्जाम्यार्यपुत्रेण सह गुरुसमीपं गन्तुम् । अभ्युदयकालेषु मङ्गलोत्सवादिसमयेष्विदमाचरितव्यमेव । दाक्षायणि दक्षपुत्रि । **पुत्रस्येति** । अयं दुष्यन्त इत्यभिहितः । इतिना परामर्शाच्छब्दपरो निर्देशः । तेन दुष्यन्तनामधेयक इत्यर्थः । भुवनस्य भर्ता भूमण्डलस्य पालक । ते तव पुत्रस्येन्द्रस्य रणशिरस्यग्रयाय्यग्रेसरः । इदमेव विधेयम् । यस्य चापेन धनुषा विनिवर्तितकर्म समापितकार्यं कोटिमदिति कुण्ठकोटिमदित्यर्थः । तेन युद्धक्षमत्वं ध्वन्यते । एतादृगपि मघोनः कुलिशं वज्रमाभरणं जातम् । वीर्यलक्षणस्य वस्तुनोऽतिशयितत्वेन वर्णनादुदात्तं रूपकं च । स्यस्येति ययायीति छेकवृत्त्यनुप्रासौ च । वसन्ततिलका वृत्तम् । संभावनीयानुभावाऽस्याकृति । सभावनीयोऽनुभावः प्रभावो यस्याः सा । पुत्रप्रीतिपिशुनेन पुत्रस्नेहसूचकेन । 'पिशुनौ खलसूचकौ' इत्यमरः । इन्द्रोऽनयोः पुत्रस्तस्य त्वं मित्रम् । अतस्त्वमपि पुत्रप्रायः । पुत्रस्नेह इत्यर्थः । दिवौकसां देवाना पितराव-

---

पाठा०—१ 'आचरितमेतदभ्युदय°'. २ 'तदेहि तावत्'. ३ 'दुःषन्त'. ४ '°अप्पहावा खु से'. ५ 'भूपते !...°वायुष्मन्तमेवावलोकयतः । तावुपसर्प'. ६ 'मातले,–प्रादुर्द्वादशधा'.

प्राहुर्द्वादशधा स्थितस्य मुनयो यत्तेजसः कारणं
भर्तारं भुवनत्रयस्य सुषुवे यद्यज्ञभागेश्वरम्।
यस्मिन्नात्मभवः परोऽपि पुरुषश्चक्रे भवायास्पदं
द्वन्द्वं दक्षमरीचिसंभवमिदं तत्स्रष्टुरेकान्तरम्॥ २७॥

दितिकश्यपौ। **प्राहुरिति**। मुनयो व्यासादयः। इत्यनेनैषा विप्रलम्भकरणापाटवादिराहित्यं ध्वन्यते। तेन च तदुक्तेर्वेदानुमानेन प्रामाण्यम्। द्वादशधा स्थितस्य द्वादशसु मासेषु द्वादशमूर्तिधरस्य तेजस सूर्यस्य यत्कारणं निदानमामनन्ति। जगत्प्रदीपस्य विश्वाशेषक्रियाकलापकारणभूतस्योत्पादकत्वेन तेजोराशित्वं ध्वनितम्। तथा च **विष्णुपुराणे**—'तत्र विष्णुश्च शक्रश्च जज्ञाते पुनरेव हि। अर्यमा चैव धाता च त्वष्टा पूषा तथैव च॥ विवस्वान्सविता चैव मित्रो वरुण एव च। अंशुर्भगश्चादितिज आदित्या द्वादश स्मृता.॥ चाक्षुषस्यान्तरे पूर्वमासे ये तुषिताः सुरा·। वैवस्वतेऽन्तरे ते वै आदित्या द्वादश स्मृता·॥' इति। अथवा द्वादशधा स्थितस्य द्वादशकलात्मकस्य। तदुक्त**माचार्यैः**—'तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचि·। सुषुम्णा भोगदा विश्वा बोधिनी धारिणी क्षमा॥ कभाद्या वसुधा सौर्या ठण्डान्ता द्वादशेरिताः' इति। यद्भुवनत्रयस्य भूर्भुव·स्वर्लक्षणस्य भर्तारं पोषकत्वेन धारणसमर्थम्, स्वामिनमिति यावत्। यज्ञस्य भागो विद्यते येषा ते यज्ञभागा देवास्तेषामीश्वरम्, इन्द्रमित्यर्थ। सुषुवे जनयामास। यज्ञभागेश्वरम्, न सुरेश्वरम्, न भुवनस्य भर्तारम्; अपि तु त्रयस्येति। तस्योत्कर्ष वदता पदसमुदायेन तदुत्पादकत्वात्तस्य कोऽप्यतिशयो ध्वनित.। यस्मिन्द्वन्द्वे आत्मना भवतीत्यात्मभव· स्वयंभू पर पुरुषो विष्णुर्भवाय जन्मन आस्पद स्थानं चक्रे। **विष्णुपुराणे**—'मन्वन्तरे च संप्राप्ते तथा वैवस्वते द्विज। वामन कश्यपाद्विष्णुरदित्या संबभूव ह॥' इति। इदं च द्वन्द्वं मिथुनम्। दक्ष प्रजापतिस्तत्संभवादितिः। मरीचिसंभवः कश्यपः। अत एव स्रष्टुर्ब्रह्मण एको मरीच्यादिरन्तरं यस्य स.। अनेन ब्रह्मतुल्यत्वं ध्वनितम्। 'अङ्गभूतमहापुरुषचरितवर्णनमुदात्तम्' इति तल्लक्षणादत्र पादत्रये मालोदात्तालंकारः। आत्मभवो भवायेति विरोधाभासोऽपि भवोभवेति द्वन्द्वेति छेकानुप्रासवृत्त्यनुप्रासौ। यज्ञभागेश्वरमिति विशेष्यम्। परः पुरुष इति विशेषणप्रक्रमभङ्गो न शङ्कनीय·। समुदायेन संज्ञिप्रतिपादकत्वमवयवार्थेन च व्यञ्जकत्वं कपालिपदवन्न विरुद्धम्। कारणं सुषुवे भवायास्पदं चक्र इति पर्यायैरेकस्यैवार्थस्य ग्रहणादर्थावृत्तिरलंकार·। शार्दूलविक्रीडितं वृत्तम्। तदुक्तं **विष्णुपुराणे**—'अथान्यान्मासान्पुत्रान्सदृशानात्मनोऽसृजत्। भृगुं पुलस्त्यं पुलहं क्रतुमङ्गिरसं तथा। मरीचिं दक्षमत्रिं च मानसान्' इति। तथा 'भृगोः ख्यातिर्भवेत्सत्यं सस्मृतिश्च मरीचय.' इति। तथा 'षष्टिं दक्षोऽसृज-

पाठा०—१ 'यस्मिन्नात्मभुवः'.

**मातलिः**—अथ किम् ? ।

**राजा**—( उपगम्य ) उभाभ्यामपि [1]वासवानुयोज्यो दुष्यन्तः प्रणमति ।

**मारीचः**—वत्स ! [2]चिरं जीव; पृथिवीं पालय ।

**अदितिः**—वच्छ ! अप्पडिरहो होहि । [ वत्स ! अप्रतिरथो भव । ]

**शकुन्तला**—दारअसहिदा वो पादवंदणं करेमि ।[3] [ दारकसहित वां पादवन्दनं करोमि । ]

**मारीचः**—वत्से !

**आखण्डलसमो भर्ता जयन्तप्रतिमः सुतः ।**
**आशीरन्या न ते [4]योग्या [5]पौलोमीसदृशी भव ॥ २८ ॥**

**अदितिः**—जादे ! भत्तुणो [6]अभिमदा होहि । [7]अवस्सं दीहाऊ वच्छओ उहअकुलणंदणो होदु । उवविसह । [ जाते ! भर्तुरभिमता भव । अवश्यं दीर्घायुर्वत्सक उभयकुलनन्दनो भवतु । उपविशत । ]

( सर्वे प्रजापतिमभित उपविशन्ति )

**मारीचः**—( एकैकं निर्दिशन् )

**दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान् ।**
**श्रद्धा वित्तं विधिश्चेति त्रितयं तत्समागतम् ॥ २९ ॥**

---

त्कन्या दारिण्यामिति नः श्रुतम् । ददौ स दश धर्माय कश्यपाय त्रयोदश ॥' इति । तथा 'मारीचात् कश्यपाज्जातास्ते दैत्या दक्षकन्ययोः' इति । इयं च सृष्टिर्वैवस्वतमन्वन्तरे । नन्वयं प्राचेतसः पृथुवंशसमुद्भवो दक्षस्तस्य स्रष्टुरेकान्तरत्वं कथमिति चेत्,–उच्यते—'स एव दक्षस्तत्रत्य' इत्यदोष । तथा च **विष्णुपुराणम्**—'दशभ्यस्तु प्रचेतोभ्यो मारिषायां प्रजापतिः । जज्ञे दक्षो महाभागो यः पूर्वं ब्रह्मणोऽभवत् ॥' इति । अप्रतिरथो भव । दारकसहिता बालकयुता वा युष्माकं पादवन्दनं करोमि । **आखण्डलेति** । ते तव भर्ताखण्डलस्य सम इन्द्रतुल्यः । सुतो जयन्तप्रतिम इन्द्रपुत्रतुल्य । अत कारणात्ते तवान्याशीर्योग्या न । तृतीयचरणार्थे पूर्वार्धं हेतुत्वेन योज्यम् । पौलोम्याः शच्याः सदृशी भवेती-

---

**पाठा०**–१ 'वासवनियोज्यो दुःषन्त'. २ 'चिरं पृथिवीं'. ३ '( शकुन्तला पुत्रसहिता पादयोः पतति )'. ४ 'योज्या'. ५ 'पौलोमीमङ्गला भव'. ६ 'बहुमदा होहि'. ७ 'अअं च दीहाऊ उहअपक्खं अलंकरेदु । ता एध उवविसध ।'.

**राजा**—भगवन्! प्रागभिप्रेतसिद्धिः। पश्चाद्दर्शनम्। अतोऽपूर्वः खलु वोऽनुग्रहः। कुतः

> उदेति पूर्वं कुसुमं ततः फलं
> घनोदयः प्राक्तदनन्तरं पयः।
> निमित्तनैमित्तिकयोरयं क्रम-
> स्तव प्रसादस्य पुरस्तु संपदः॥ ३०॥

**मातलिः**—एवं विधातारः प्रसीदन्ति।

**राजा**—भगवन्! इमामाज्ञाकरीं वो गान्धर्वेण विवाहविधिनोपयम्य कस्यचित्कालस्य बन्धुभिरानीतां स्मृतिशैथिल्यात्प्रत्यादिशन्नपराद्धोऽस्मि तत्रभवतो युष्मत्सगोत्रस्य कण्वस्य। पश्चादङ्गुलीयकदर्शनादूढपूर्वां तद्दुहितरमवगतोऽहम्। तच्चित्रमिव मे प्रतिभाति।

---

यमेव युक्ताशीरित्यर्थः। काव्यलिङ्गोपमे अनुप्रासश्च। जाते! भर्तुरभिमता भव। अवश्यं दीर्घायुर्वत्स उभयकुलनन्दनो भवतु। उपविशत। **दिष्ट्येति**। साध्वी शकुन्तला। इदं सदपत्यम्। भवानित्यर्थान्तरसंक्रमितवाच्यम्। तेन तत्तद्गुणगरिष्ठो भवानित्यनेन विशेषणप्रक्रमभङ्गः परिहृत। श्रद्धा वित्तं विधिश्चेति त्रितयं समागतं तद्दिष्ट्येति सवन्ध। निदर्शना। श्रद्धादिभिरौपम्यस्य कल्पितत्वात्। **'त्रितयं वः समागतम्'** इति पाठ· एकैकं निर्दिशन्निति योजना। तेनाभिरूपसमागमात्समालंकार·। 'त्रितय'पदेन समागमं प्रति प्रत्येकं कर्तृत्वं बोधयता स्त्रीबालाविरत्यनयोरवज्ञा न कार्येति भावः। 'देवानामपि ये देवा महात्मानो महर्षय·। भगवन्निति ते वाच्या यास्तेषा योषितस्तथा॥' इति **भरतोक्ते**र्भगवन्निति संबुद्धि·। **उदेतीति**। कुसुमं पूर्वमुदेति तत· फलमुदेतीत्येव। घनोदयो मेघोद्गमः प्रागुदेतीत्येव। तदनन्तरं पयो जलमुदेतीत्येव आदिक्रियादीपकम्। निमित्तनैमित्तिकयोः कार्यकारणयोरयं पूर्वोक्त· क्रमः प्राकरणिकत्वेन प्राकरणिकार्थापातान्मालार्थापत्तिः। व्यतिरेकमाह—तव प्रसादस्य पुर· पूर्व सपद इति कार्यकारणविपर्ययादतिशयोक्तिः। मम शकुन्तलापुत्रलाभ इति प्रस्तुतस्य विशेषस्य गम्यत्वे संपद इत्यप्रस्तुतप्रशंसा। निमिनैमीति निमित्तनैमित्तीति छेकवृत्त्यनुप्रासौ। वंशस्थं वृत्तम्। अनेन मधुरं नाम भूषणमुपक्षिप्तम्। तल्लक्षणं तु—'यत्प्रत्ययेन मनसा

---

पाठा०—१ '°दर्शनमित्यपूर्वः'. २ 'पश्यतु भगवान्'. ३ 'विधिस्तव'. ४ 'आयुष्मन्, एवं विश्वगुरवः प्रसी°'. ५ 'गान्धर्वेण विधि°'. ६ 'युष्मद्गोत्रस्य'. ७ 'पश्चादेनामंगुरीयक°'. ८ '°दूढपूर्वामवगतोऽस्मि।'.

**यथा गजो 'नेति समक्षरूपे**
**तस्मिन्नपक्रामति संशयः स्यात्।**
**पदानि दृष्ट्वा तु भवेत्प्रतीति-**
**स्तथाविधो मे मनसो विकारः ॥ ३१ ॥**

**मारीचः**—वत्स! अलमात्मापराधशङ्कया। संमोहोऽपि त्वय्य-नुपपन्नः। श्रूयताम्।

**राजा**—अवहितोऽस्मि।

**मारीचः**—यदैवाप्सरस्तीर्थावतरणात्प्रत्यक्षवैक्लव्यां शकुन्तलामा-दाय मेनका दाक्षायणीमुपगता तदैव ध्यानादवगतोऽस्मि दुर्वाससः शापादियं तपस्विनी सहधर्मचारिणी त्वया प्रत्यादिष्टा नान्यथेति। स चायमङ्गुलीयकदर्शनावसानः।

**राजा**—(सोच्छ्वासम्) एष वचनीयान्मुक्तोऽस्मि।

**शकुन्तला**—(स्वगतम्) दिट्ठिआ अकारणपच्चादेसी ण अज्ज-उत्तो। ण हु सत्तं अत्ताणं सुमरेमि। अहवा पत्तो मए सं हि सावो विरहसुण्णहिअआए ण विदिदो। अदो सहीहिं संदिट्ठम्हि भत्तुणो अंगुलीअअं दंसइदव्वं त्ति। [दिष्ट्याऽकारणप्रत्यादेशी नार्यपुत्रः। न खलु शप्तमात्मानं स्मरामि। अथवा प्राप्तो मया स हि शापो विरहशून्यहृदयया न विदितः। अतः सखीभ्यां संदिष्टास्मि भर्तुरङ्गुलीयकं दर्शयितव्यमिति।]

---

पूज्यपूजयितुर्वचः। स्मृतिप्रकाशनं यत्तत्स्मृतं मधुरभाषणम् ॥' इति। विधातारः स्रष्टारः। 'व आज्ञाकरी'मित्यनेन विनयोक्तिः। उपयम्य विवाह्य। स्मृतिशैथिल्यान्न तत्त्वतः स्मृतेरभावः। स्थायिन्या रतेरविच्छेदात्प्रत्यादिशन्निराकुर्वन्। तत्र भवतः पूज्यस्य। **यथेति**। समक्षरूपे गजेऽयं गजो न वेति संशयः स्यात् तस्मिन्नपक्रामति गच्छति सति पदानि भूमौ चरणचिह्नानि दृष्ट्वा यथा प्रतीति-र्निश्चयबुद्धिर्भवति गज एवायमिति तथाविधस्तादृशो मे मनसो विकार आसीत्। निदर्शनानुप्रासश्च। द्वादश्युपजातिरिन्द्रवज्रोपेन्द्रवज्रयोः। अलमिति निषेधे।

---

**पाठा०**—१ 'गजः साधुसमक्षरूपे कस्मिन्नपि'. २ 'दृष्ट्वाथ'. ३ 'त्वय्युपपन्न एव।'. ४ '°प्रत्याख्यानविक्लवां'. ५ '°गता मेनका तदैव'. ६ '°दवगत-वृत्तान्तोऽस्मि'. ७ '°दिष्टा नान्यथेति।'. ८ '°शापः'. ९ 'सच्चं मं सुमरेदि'. १० 'ण सुदो भवे अअं सुण्णहिअआए'. ११ 'सावो जदो'.

**मारीचः**—वत्से ! [1]चरितार्थासि । [2]सहधर्मचारिणं प्रति न त्वया मन्युः [3]कार्यः । पश्य,—

> **शापादसि प्रतिहता [4]स्मृतिरोधरूक्षे**
> **भर्तर्यपेततमसि प्रभुता तवैव ।**
> **छाया न मूर्च्छति मलोपहतप्रसादे**
> **शुद्धे तु दर्पणतले सुलभावकाशा ॥ ३२ ॥**

**राजा**—यथाह भगवान् ।

**मारीचः**—वत्स ! कच्चिदभिनन्दितस्त्वया विधिवदस्माभिरनुष्ठित[5]जातकर्मा पुत्र एष शाकुन्तलेयः ? ।

**राजा**—भगवन् ! [6]अत्र खलु मे वंशप्रतिष्ठा ।

**मारीचः**—तथा [7]भाविनमेनं चक्रवर्तिनमवगच्छतु भवान् । पश्य,—

> **रथेनानुद्धातस्तिमितग[8]तिना तीर्णजलधिः**
> **पुरा सप्त[9]द्वीपां जयति वसुधामप्रतिरथः ।**

---

आत्मनोऽपराधस्तच्छङ्कयालमिति समन्वय. । दाक्षायणीमदितिम् । ध्यानादवगतं ज्ञानं विद्यते यस्मिन्नित्यवगतोऽस्मि ज्ञ.नवानस्मि । 'मारीच —वत्स ! अलमात्मा-' इत्यादिना 'दर्शनावसान' इत्यन्तेन निर्णयनामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'अनुभूतार्थकथनं निर्णयः समुदाहृत.' इति । वचनीयाल्लोकापवादात् । दिष्ट्या दैवेन । अकारणप्रत्यादेशी नार्यपुत्र. । न खलु शप्तमात्मानं स्मरामि । अहवा अथवा । प्राप्तो मया स हि शापो विरहशून्यहृदयया न विदितः । अतः सखीभ्यां संदिष्टास्मि भर्तुरङ्गुलीयकं दर्शयितव्यमिति । चरितार्था कृतार्थाऽसि । सहधर्मचारिणं प्रति । पश्येति वाक्यार्थस्य कर्मत्वम् । **शापादिति** । शापात्त्वं प्रतिहतासि तिरस्कृताऽसि, अर्थाद्भर्त्रेत्यर्थ । शापादित्यनेन तस्य दोषाभाव उक्तः । पूर्वं स्मृतेः स्मरणस्य रोधेन रूक्षे नि स्नेह इव । अत्रापि शापादित्यनुषज्यते । अधुनापेतं दूरीभूतं तम शापलक्षणं यस्मादेवंभूते भर्तरि तवैव प्रभुता । असंबन्धे सबन्धातिशयोक्तिरियं भर्तृसंबद्धाया प्रभुताया. प्रसिद्धत्वात् । अथ च यो भर्ता स प्रभु', या वनिता सा गुणभूता इति शास्त्रस्थितौ भर्तृत्व तस्मिन्प्रभुता चास्यामित्यसगतिश्च । अतिशयोक्त्या सहाङ्गाङ्गिभाव. । मलेनागन्तुकेन दोषेणोपहतो

---

**पाठा०**—१ 'विदितार्थासि'. २ 'तदिदानीं सह°'. ३ 'करणीय.'. ४ 'स्मृतिलोपरूक्षे'. ५ 'जातकर्मादिक्रियः'. ६ 'अत्र खलु मे'. ७ 'शौर्यस्वभावेन चक्रवर्तिनमेन°'. ८ '°गतिनोत्तीर्ण°'. ९ '°द्वीपामवति'.

इहायं सत्त्वानां प्रसभदमनात्सर्वदमनः
पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात् ॥ ३३॥

**राजा**—[1]भगवता कृतसंस्कारे सर्वमस्मिन्वयमाशास्महे ।

**अदितिः**—भअवं ! इमाए [2]दुहिदुमणोरहसंपत्तीए कण्णो वि दाव् सुदवि[3]त्थारो [4]करीअदु । दुहिदुवच्छला मेणआ इह एव्व उपचरंती चिट्ठदि । [ भगवन् ! अनया दुहितृमनोरथसंपत्त्या कण्वोऽपि तावच्छ्रुतविस्तारः क्रियताम् । दुहितृवत्सला मेनकेहैवोपचरन्ती तिष्ठति । ]

**शकुन्तला**—( आत्मगतम् ) मणोरहो खु मे भणिदो भअवदीए । [ मनोरथः खलु मे भणितो भगवत्या । ]

**मारीचः**—तपःप्रभावात्[5]प्रत्यक्षं सर्वमेव तत्रभवतः ।

**राजा**—अतः खलु मम नातिक्रुद्धो मुनिः ।

**मारीचः**—तथाप्यसौ प्रियमस्माभिः श्रावयितव्यः । कः कोऽत्र भोः ? ।

( प्रविश्य )

**शिष्यः**—भगवन् ! अयमस्मि ।

---

दूरीकृतः प्रसादो यस्य तस्मिन्दर्पणतल आदर्शे छाया प्रतिबिम्बं न मूर्च्छति न प्रसरति । 'छाया सूर्यप्रिया कान्ति प्रतिम्बिमनातप' इत्यमरः । सा छाया शुद्धे निर्मले दर्पणतले सुलभावकाशा, अत्यन्तं व्यक्ता दृश्यत इत्यर्थ । हेतुदृष्टान्तौ । तततातेति तमतिमेति छेकवृत्त्यनुप्रासौ । वसन्ततिलका वृत्तम् । **रथेनेति** । न विद्यते प्रतिद्वन्द्वी रथो यस्य सोऽप्रतिरथोऽयम् । अनुद्धाताऽस्खलितात एव स्तिमिता निश्चला गतिर्यस्य तेनेति स्वभावोक्ति । जले स्खलनासंभवात् । एवंभूतेन तीर्णजलधिरुत्तीर्णसमुद्रः सप्त कुशक्रौञ्चादीनि द्वीपानि यस्या सा सप्तद्वीपा तां वसुधां पुरा जयति जेष्यति । 'यावत्पुरानिपातयोर्लट्' (पा ३।३।४) । अत्र भाविकालंकारः । 'प्रत्यक्षा इव यत्रार्था क्रियन्ते भूतभाविन । तद्भाविकम्' इति तल्लक्षणात् । अत एव जेष्यतीति वक्तव्ये पुरायोगे लडित्यवधेयम् । इहाश्रमे सत्त्वाना प्राणिना

---

**पाठा०-१ 'भगवत्कृत°...°सर्वमाशंसे'. २ 'दुहिदिआए मणो°'. ३ 'विण्णादत्थो'. ४ 'करीअदु । मेणआ उण इध मं परिअरंती संणिहिदा जेव चिट्ठदि ।'. ५ '°त्सर्वमिदं प्रत्यक्षं तत्रभवतः कण्वस्य । ( विचिन्त्य ) तथाप्यसौ दुहितुः सपुत्रायाः पत्या परिग्रहात् प्रिय°'.**

**मारीचः**—गालव ! इदानीमेव विहायसा गत्वा मम वचनात्तत्रभवते कण्वाय प्रियमावेदय यथा—पुत्रवती शकुन्तला तच्छापनिवृत्तौ स्मृतिमता दुष्यन्तेन प्रतिगृहीता—इति ।

**शिष्यः**—यदाज्ञापयति भगवान् । (इति निष्क्रान्तः)

**मारीचः**—वत्स ! त्वमपि स्वापत्यदारसहितः सख्युराखण्डलस्य रथमारुह्य ते राजधानीं प्रतिष्ठस्व ।

**राजा**—यदाज्ञापयति भगवान् ।

**मारीचः**—वत्स ! किं ते भूयः प्रियमुपकरोमि ? ।

**राजा**—अतः परमपि प्रियमस्ति । यदिह भगवान्प्रियं कर्तुमिच्छति तर्हीदमस्तु भरतवाक्यम् ,—

**प्रवर्ततां प्रकृतिहिताय पार्थिवः**
**सरस्वती श्रुतमहतां महीयसाम् ।**

---

प्रसभं हठेन दमनात्सर्वदमन इत्याख्यामभिधा यातः । पुनर्लोकस्य जनस्य भुवनस्य वा भरणाद्रक्षणात्पोषणाद्वा भरत इत्याख्या यास्यति । 'लोकस्तु भुवने जने' इत्यमरः । छेकवृत्त्यनुप्रासौ काव्यलिङ्गं च । शिखरिणी वृत्तम् । 'मारीचः—वत्से ! चरितार्थाऽसि' इत्यादिना 'आशास्महे' इत्यन्तेन प्रसादलक्षणमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'शुश्रूषाद्युपसपन्ना प्रसादस्तु प्रसन्नता' इति । भगवन् ! अनया दुहितृमनोरथसपत्त्या कण्वोऽपि तावच्छ्रुतविस्तार· क्रियताम् । दुहितृवत्सला मेनकेहैवोपचरन्ती समीपचारिणी तिष्ठति । मनोरथः खलु मे भणितो भगवत्या । अत्र कृतिर्नामाङ्गमुपक्षिप्तम् । तल्लक्षणम्—'लब्धस्यार्थस्य शमनं कृतिरित्यभिधीयते' इति । 'कि ते भूय प्रियमुपकरोमि ?' इत्यनेन काव्यसंहारलक्षणमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'वरप्रदानसंप्राप्तिः काव्यसहार उच्यते ।' इति । भरतवाक्यं नटवाक्यम् । नाटकाभिनयसमाप्तौ सामाजि-

---

**पाठा०**—१ 'गत्वा तत्रभवते'. २ 'दुर्वाससः शाप°'. ३ 'दुःषन्तेन गृहीतेति ।'. ४ 'सापत्य°'. ५ रथमास्थाय'. ६ 'मारीचः—संप्रति हि—तव भवतु बिडौजाः प्राज्यवृष्टिः प्रजासु त्वमपि विततयज्ञो वज्रिणं प्रीणयालम् । युगशतपरिवर्तैरेवमन्योन्यकृत्यैर्नियतमुभयलोकानुग्रहश्लाघनीयैः ॥ राजा—भगवन् ! यथाशक्ति श्रेयसि प्रयतिष्ये । मारीचः—वत्स, किं ते'. ७ 'तथाप्येतदस्तु'. ८ 'महीयताम् ।'.

ममापि च क्षपयतु नीललोहितः
पुनर्भवं परिगतशक्तिरात्मभूः ॥ ३४ ॥[1]

( इति निष्क्रान्ता सर्वे )

## सप्तमोऽङ्कः ।

## समाप्तमिदमभिज्ञानशाकुन्तलं नाम नाटकम् ॥

---

केभ्यो नटेनाशीर्दीयत इत्यर्थ । प्रस्तावनानन्तरं नटवाक्याभावादत्र भरतवाक्यमित्युक्ति' । **प्रवर्ततामिति** । प्रकृतिहिताय पौरश्रेणिहताय पार्थिवः प्रवर्तताम् । श्रुतेन शास्त्रश्रवणेन महता गरिष्ठाना महीयसामुत्कृष्टानामुत्कृष्टशक्तिमता कवीनाम् । विशेषणेनैव विशेष्यप्रतिपत्तेर्न विशेष्योपादानम् । सरस्वती प्रवर्ततामित्यनुषज्यते । आदिक्रियादीपकम् । नीललोहितो महादेवो मम पुनर्भवं जन्मान्तरं क्षपयतु नाशयतु । कीदृङ् नीललोहित' ? आत्मना भवतीत्यात्मभूः । परितो गता व्याप्ता शक्ति सामर्थ्यमस्येत्यनेन तत्तच्छक्तित्वं व्यज्यते । क्रियासमुच्चय तमतामेति महमहीति छेकवृत्त्यनुप्रासौ । रुचिरा वृत्तम् । तल्लक्षणं तु—'चतुर्ग्रहैरिह रुचिरा जभौ सजौ ग' इति । अनेन प्रशस्तिनामकमङ्गमुपक्षिप्तम् । तल्लक्षणमादिभरते—'देवद्विजनृपादीनां प्रशस्तिः स्यात्प्रशंसनम्' इति ॥

**इति श्रीमदभिज्ञानशाकुन्तलटीकायामर्थद्योतनिकायां सप्तमोऽङ्कः समाप्तः ॥**

---



---

पाठा०—१ '°गतभक्तिरात्मभूः ।'.

# प्रथमं परिशिष्टम् ।

## अर्थद्योतनिकाव्याख्योद्धृतग्रन्थकृन्नाम्नां वर्णक्रमानुसारिणी सूची ।

# द्वितीयं परिशिष्टम् ।

## अर्थद्योतनिकाव्याख्योद्धृतग्रन्थनाम्नां वर्णक्रमानुसारिणी सूची ।

# कालिदासीयान्यग्रन्थैः सह शाकुन्तलस्य साम्यप्रतिपादकं तृतीयं परिशिष्टम् ।

| शाकुन्तलम् | कालिदासीयान्यग्रन्थाः । |
| --- | --- |
| या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् । यामाहुः सर्वबीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥ ( १. १ ) | एकैश्वर्ये स्थितोऽपि प्रणतबहुफलो यः स्वयं कृत्तिवासाः कान्तासंमिश्रदेहोऽप्यविषयमनसां यः पुरस्ताद्यतीनाम् । अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः सन्मार्गालोकनाय व्यपनयतु स नस्तापसीं वृत्तिमीशः ॥ मालवि. १.१ |
| मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः । उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ? ॥ ( २ ५ ) | परिचयं चललक्ष्यनिपातने भयरुषोश्च तदिङ्गितबोधनम् । श्रमजयात्प्रगुणां च करोत्यसौ तनुमतोऽनुमतः सचिवैर्ययौ ॥ रघु ९.४९ |
| उग्गलिअदब्भकवला मिआ परिच्चत्तणच्चणा मोरा । ओसरिअपंडुपत्ता मुअंति अस्सू विअ लदाओ ॥ ( ४. ११ ) | नृत्यं मयूराः कुसुमानि वृक्षा दर्भानुपात्तान्विजहुर्हरिण्यः । तस्याः प्रपन्ने समदु खभावमत्यन्तमासीद्रुदितं वनान्तरे ॥ रघु. १९.६९ |
| रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्पर्युत्सुकीभवति यत्सुखितोऽपि जन्तुः । तच्चेतसा स्मरति नूनमबोधपूर्वं भावस्थिराणि जननान्तरसौहृदानि ॥ ( ५. २ ) | रतिस्मरौ नूनमिमावभूतां राज्ञां सहस्रेषु तथा हि बाला । गतेयमात्मप्रतिरूपमेव मनो हि जन्मान्तरसंगतिज्ञम् । रघु. ७. १५ |
| किं तावद्व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम् । आहोस्वित्प्रसवो ममापचरितैर्विष्टम्भितो वीरुधामित्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥ ५. ९ | राजन्प्रजासु ते कश्चिदपचारः प्रवर्तते । तमन्विष्य प्रशमयेर्भवितासि ततः कृती ॥ रघु. १५. ४७<br>कायेन वाचा मनसापि शश्वद्यत्संभृतं वासवधैर्यलोपि । आपाद्यते न व्ययमन्तरायैः कच्चिन्महर्षेस्त्रिविधं तपस्तत् रघु. ५. ५ |

प्रजागरात्खिलीभूतस्तस्याः स्वप्ने समागमः । बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥ ( ६.२२ )

त्वामालिख्य प्रणयकुपिता धातुरागैः शिलायामात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् । अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः ॥ **मेघ. उ. ४२**

कथमुपलभे निद्रां स्वप्ने समागमकारिणीम् । नच सुवदनामालेख्येऽपि प्रियां समवाप्यता मम नयनयोरुद्बाष्पत्वं सखे न भविष्यति ॥ **विक्रमो. २**

मातले ! कतमोऽयं पूर्वापरसमुद्रावगाढः कनकरसनिस्यन्दः सांध्य इव मेघपरिघः सानुमानालोक्यते ॥ ( ७.९ )

अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराज. । पूर्वापरौ तोयनिधी वगाह्य स्थित पृथिव्या इव मानदण्ड ॥ **कुमारसं. १.१**

राजा—अहो, दुष्यन्तस्य संशयमारूढाः पिण्डभाजः । कुतः,

अस्मात्परं बत यथाश्रुतिसंभृतानि को नः कुले निवपनानि नियच्छतीति । नूनं प्रसूतिविकलेन मया प्रसिक्तं धौताश्रुशेषमुदकं पितरः पिबन्ति ॥ ( ६.२५ )

नूनं मत्त. परं वंश्याः पिण्डविच्छेददर्शिन. । न प्रकामभुजः श्राद्धे स्वधासंग्रहतत्परा. ॥

मत्परं दुर्लभं मत्वा नूनमावर्जितं मया पयः पूर्वैः स्वनिःश्वासै. कवोष्णमुपभुज्यते ॥ **रघु १–६७**

वसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवेणिः । अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्ति ॥ ( ७.२१ )

आद्ये बद्धा विरहदिवसे या शिखा दाम हित्वा शापस्यान्तो विगलितशुचा ता मयोद्वेष्टनीयाम् । स्पर्शक्लिष्टामयमितनखेनासकृत्सारयन्तीं गण्डाभोगात्कठिनविषमामेकवेणीं करेण ॥ **मेघ. उ. २९**

दिष्ट्या शकुंतला साध्वी सदपत्यमिदं भवान् । श्रद्धा वित्तं विधिश्चेति त्रितयं तत्समागतम् ॥ ( ७.२९ )

बभौ च सा तेन सतां मतेन श्रद्धेव साक्षाद्विधिनोपपन्ना । **रघु. २. १६.**